अणेवंशोद्भवेन श्रीहरिसूनुना माधवेन विरचितः

# श्रीतिलकयशोऽर्णवः

## प्रथमः खण्डः



संपादकमण्डलम्

अध्यक्षः

रा. ना. दांडेकर

सदस्याः

वि. प्र. लिमये

मा. पं. सोमण

रा. ना. गद्रे

गणेशशास्त्री लोंढे



तिलक-महाराष्ट्र-विद्यापीठम्, पुण्यपत्तनम्

१९६९

# ŚRĪTILAKAYAŚO'RṆAVAḤ

BY

MADHAVA SHRIHARI ANEY

## VOLUME I







TILAK MAHARASHTRA VIDYAPEETH

POONA

**1969**

# अनुक्रमणिका

# BLESSINGS FROM RAJAJI

My congratulations
and blessings to the
publishers. Lokamanya
Tilak was great.
Madhav Srihari Aney
was a sweet and
most lovable friend for
whom I cannot
easily find an
equal

C Rajagopalachari
12-4-69

# FOREWORD

This is the first part of Lokamanya Tilak's biography composed by Dr. Madhav Shrihari alias Bapuji Aney in Sanskrit on the lines of Mahakavya in ancient India. With an inimitable lucidity of style, Bapuji began to compose this Mahakavya in 1954 as a fitting *Gurudakshina* to one of the greatest architects of modern Indian renaissance. He worked at it even when he had been laid low by an almost incurable malady. Bapuji Aney himself was a striking figure of his generation which was dominated by the memory of Lokamanya's achievements. Every line of this Mahakavya is surcharged with love and respect for Lokamanya Tilak, reminiscent of Plato's reverential feeling for Socrates. Shri Bapuji was an ardent educationist and was the Chancellor of the Tilak Maharashtra Vidyapeeth for many years.

Lokamanya Tilak has been described by Sri Aurobindo as one of the makers of Renaissant India. He was not a politician by choice but entered politics to mould several aspects of the Renaissant Movement. His life was a living epic. He began life as a teacher but soon acquired the stature of a sage. He strove to reconstruct India not only in terms of politics but in all other aspects of life. A people suffering under alien rule can never separate politics from life. Lokamanya's approach to nationalism was comprehensive, harnessing religious and social activities to politics. His activities like Ganesh Utsav, Shivaji Jayanti and the development of *Akhada* consolidated mass enthusiasm. He fought for positive aspects of freedom, not the negative ones. He was the first who courted arrest in an age when political martyrdom was not even thought of.

Lokamanya Tilak was a sage in the line of the Maharshis of ancient India. He gave a spiritual turn to the struggle for freedom. His comprehensive work on *Bhagavadgita* won for him a place among the seers of India. He created a psychological revolution in the minds of Indian people. *Bhagavadgita* in his hands was not merely a book of philosophy and religion nor a code of rituals, but a saga of active dedicated life.

I had the privilege of working under Lokamanya Tilak during the Home Rule Movement and was an eye-witness to his strength and patriotism. It is to the credit of Bapuji that he could pick up from the crowded life of Lokamanya conspicuous instances illustrating his versatility.

30.4.69 K. M. Munshi

Bharatiya Vidya Bhavan,
Chaupatty Road, Bombay 7.

# संपादकीयं मनोगतम्

'तिलक-महाराष्ट्र-विद्यापीठम्' इतीयं संस्था ६ मे १९२१ दिनाङ्के स्थापिता अभूत्। अतः १९७१ मेमासे षष्ठे दिनाङ्के संस्थायाः अस्याः पञ्चाशद् वर्षाणि पूर्णतां यास्यन्ति । अमुं शोभनमवसरं निमित्तीकृत्य विद्यापीठस्यास्य कार्यजातं प्रमाणेन गुणेन चापि महिष्ठं स्यादिति विचारः साम्प्रतं स्थिरपदः कार्यकर्तृषु प्रवर्तते । भारतस्य स्वातन्त्र्यमासादयितुं यथानेन विद्यापीठेन स्वकीयं कर्तव्यं महता धैर्येणानुष्ठितं तद्वदेव स्वातन्त्र्यावाप्तेरनन्तरमपि राष्ट्रस्यास्य स्थैर्यं धैर्यमैश्वर्यं च संवर्धयितुं यद् व्यापकं कार्यजातमनुष्ठेयं तत्रापि स्वकीयमुचितं कर्तव्यांशं पूर्णतां नेतुमपि इदं विद्यापीठं महतोत्साहेन प्रवर्ततामिति नैकाः योजनाः उपक्रान्ताः वर्तन्ते । तासु एव अन्यतमः विभागः नाम सुवर्णमहोत्सवग्रन्थ-प्रकाशनयोजना अधुना हस्तसात् कृता प्रक्रम्यते ।

भारतस्य प्रतिष्ठा स्वातन्त्र्येण विश्वस्मिन् विश्वे सपद्येव उन्नतां स्थितिमारूढा । जागतिकेषु विविधोपक्रमेषु च साक्षात् सहभागं समधिगन्तुं भारतवर्षमिदं लब्धावसरं च । तथैव भारतीयसमाजस्य पुनर्घटनामाधातुं शोभनोऽवसरोऽपि भारतीयजनताधीनः एव साम्प्रतम् । आधुनिकं विश्वं भौतिकविज्ञानेन साधनेन विकासं महता जवेन अनुधावति । स्वातन्त्र्याधिगमेन भारते राष्ट्रे सामाजिकं जीवनं भौतिकविज्ञाने अधिष्ठितं विधातुं समयोऽयं संप्राप्तः नितरां समुचितः शोभनश्च । भारतस्य प्राचीनपरम्परायाम् अध्यात्मज्ञानभौतिकविज्ञानयोः धारा एकरूपा एकरसा चापि प्रस्तुता आसीत् । आधुनिके समये पाश्चात्य-संशोधकैः भौतिकविज्ञानस्य प्रचण्डः प्रवाहः निर्मितो विराजते, अतः भारतीयैः अपि तदाधुनिकं विज्ञानम् अविलम्बितमात्मसात्संपादनीयं येन मध्येसमयं मनागिव खण्डितः अयं भारतीयज्ञानविज्ञानयोः समागमः पुनरपि संधीयेत ।

अमुं समुद्देशं सफलयितुं ज्ञानविज्ञानयोः विविधेषु विभागेषु संशोधनरूपाः गभीरार्थाः प्रचारपराः सरलार्थाः च इति उभयविधानां

ग्रन्थानां संपादनं प्रकाशनं च अधुना नितरामावश्यकं वर्तते। महाराष्ट्रे एतमुद्देशमभिलक्ष्य भिन्नविभिन्नाः प्रयत्नाः प्रस्तूयन्ते साम्प्रतम्। ज्ञान-विज्ञानयोः अस्मिन् क्षेत्रे स्वकीयः कियांश्चन कर्तव्यांशः अवश्यमनुष्ठेय इति द्रढिष्ठा मनीषा विद्यापीठस्यास्य वर्तते। अनन्तपाराणि किल विद्या-स्थानानि। तत्र च स्वकीयं गुणविशेषं संपरिपोष्य महत्तरं कार्यजातमनु-ष्ठातुमर्हति विद्यापीठम्। सुवर्णमहोत्सवग्रन्थप्रकाशनं नाम तस्य साक्षात् निदर्शनमेव।

भारतेन लोकशासनपद्धतिरङ्गीकृतास्ति। तदर्थं शिक्षणेन निखिलस्य समाजस्य शैक्षणिकी पात्रता यथा वर्धेत तथा प्रयतनीयम्। विद्यापीठेन प्रधानतः अस्मिन् कार्ये स्वकर्तव्यमनुष्ठेयम्। साम्प्रतं लोकभाषासु यावद् बहुविधं ज्ञानविज्ञानवाङ्मयं प्रसिद्धिं न लभते तावत् समेषां लोकानां मानसेषु संस्काराधानं दुःसाधमेव। विज्ञानस्य विविधविभागानां मराठी-भाषायां चिन्तनं लेखनं च विना मराठीभाषायाः समृद्धिः जातुचिदशक्य-संभवा एव। तां योजनां विज्ञानस्य तेषु तेषु विभागेषु विदुषां लेखकानां सह-कार्येण पूर्णतां नेतुं विद्यापीठमिदं साम्प्रतं कृतनिश्चयम्। लोकशासनपद्धतिं द्रढयितुं सर्वेषां जनानां मनःसु सामाजिकान् संस्कारान् उद्दिश्य बोधपूर्वः सहभावः अवश्यं निर्मेयः भवति। महाराष्ट्रे बहुत्र भिन्नविभिन्नवंशीयाः नानाभाषाभाषिणः नैकधर्मानुयायिनः जनाः एकत्र सहवासिनः वसन्ति। एते सर्वेऽपि समाजाः अस्मिन् नूतने लोकशासनयुगे नूतनमहाराष्ट्र-संवर्धनस्य कृते उत्साहेन स्नेहेन च किं किमनुष्ठातुमर्हन्ति, तदर्थम् अन्यो न्येषां भाषाः आचाराः उपासनापद्धतयः अवश्यं सर्वैरेव ज्ञातव्याः, 'अवि-भक्तं विभक्तेषु' इति तत्त्वं साक्षात्कार्यं, सोऽयं दृष्टिविशेषः ऋग्वेदाद् आरभ्य भारतीयैः अधिगतचरः। महाराष्ट्रीयैः साधुवर्यैः 'ईश्वरः सर्व-भूतानां हृदि वर्तते' इतीयं भावना बहूनि संवत्सरशतानि प्रदत्ताऽभ्यं संबर्धिता च। इयमेव प्राचीना समभावसाधना नवेऽस्मिन् युगे नूतनेन स्वरूपेण साम्प्रतमनुष्ठेया वर्तते। तां साधनामभिलक्ष्य नूतनं वाङ्मयं निर्मातुं विद्यापीठस्यास्य मनीषा बलीयसी विलसति।

* * *

# संपादकमण्डलस्य निवेदनम्

१. कीर्तिशेषैः लोकनायकैः श्री माधव श्रीहरि अणेमहोदयैः प्रणीतस्य "श्रीतिलकयशोऽर्णवः" इत्याख्यस्य महाकाव्यस्य इमं प्रथमं खण्डं वाचकेभ्यः समर्पयद्भिरस्माभिः कोऽपि आनन्दविशेषोऽनुभूयते।

२. जगन्नाथपण्डितान्ता संस्कृतकाव्यपरंपरा इति प्रवादः क्वचित् श्रूयते। तस्यास्य प्रवादस्य मिथ्यात्वं निदर्शयन्ति अनेकानि संस्कृतकाव्यानि जगन्नाथोत्तरकाले प्राणीयन्त, संप्रत्यपि प्रणीयन्ते च। अस्याम् आधुनिक्यां संस्कृतमहाकाव्यपरंपरायाम् अयं "श्रीतिलकयशोऽर्णवः" किमपि विशेषं स्थानम् अध्यास्ते। यतो हि भारतीयस्वातन्त्र्यान्दोलने अनन्यसामान्यं स्थानम् अधिष्ठितः भारतजनन्याः ललाटे तिलकभूतः इव लोकमान्यस्तिलकः अस्य काव्यस्य नायकः। तेषां लोकमान्यानामेव शिष्योत्तमेषु अन्यतमाः, तेषु बद्धदृढश्रद्धाः, तदा तदा अलंकृतनैकाधिकारस्थानाश्च स्व. लोकनायकाः अणेमहोदयाः अस्य महाकाव्यस्य रचयितारः। अस्य च महाकाव्यस्य भाषा संस्कृतम्, या शतकानुशतकं भारतस्य सांस्कृतिकी राष्ट्रभाषाऽस्ति, यस्यां च काव्यनायकस्य काव्यप्रणेतुश्च उभयोरपि आसीत् काचिद् गरीयसी भक्तिः। एतेषाम् एकैकमपि काव्यस्य कामपि शोभां पुष्णीयात्, किमुतायं त्रिवेणीसंगमः?

३. महाकाव्यसंज्ञां वाच्यार्थेनापि यथार्थाक्षरां कुर्वन्निव अस्य काव्यस्य आकारोऽपि सत्यमेव महानस्ति। अस्य श्लोकसंख्या १२,००० प्राया अस्ति। वर्णनीयेन लोकमान्यानां यशोऽर्णवेन सुसदृश एव अयं काव्यार्णवः। लोकमान्यानां जीवितं संपन्नं, नाट्यमयं, वैविध्यभूषितं, घटनाबहुलं च। तच्च अस्मिन् काव्ये कविना स्व. न. चिं. केळकराणां त्रिखण्डात्मकं मराठीभाषामयं तिलकचरितं प्रायेण उपजीव्य वर्णितमस्ति। न तु तदेकमूलम् इदं काव्यम्। लोकनायका हि लोकमान्यानां निकटवर्तिषु शिष्येषु अन्यतमाः। साक्षात्कृतमासीत् तैः स्वगुरोर् अनल्पं जीवितम्। स्वातन्त्र्यसमरे तेऽग्रयायिन आसन्। काँग्रेस-पक्षस्य धूस्तैरूढा। व्हाइसरॉयस्य कार्यकारिण्याः सदस्यत्वम् अलंकृतम्। लङ्कायां

भारतस्य हाय-कमिशनरपदं च भूषितम् । विश्रुताऽस्ति तेषां बहुश्रुतता, प्रथितं च ज्ञानविज्ञानभाण्डारम् । चतुरस्त्रेयं सामग्री सुष्ठु प्रतिबिम्बिताऽस्ति अस्मिन् काव्यरत्ने, संप्रददाति च सा तस्मै किमपि रामणीयकम् ।

४. अस्य काव्यस्य जन्मवृत्तान्तोऽपि रोमहर्षणः; स यथैव हृदयस्पृक् तथैव उदात्तः । काश्चिदेव अन्याः कृतयः अत्र वस्तुनि श्रीतिलकयशोऽर्णवेन सह स्पर्धेरन् । भीष्मस्य शरशय्या धर्मप्रवचनानि प्रासूत, एतेषाम् आधुनिकानां भीष्माचार्याणां शरशय्यासमाना रुग्णशय्या श्रीतिलकयशोऽर्णवम् । आसीत् स १९५४ खिस्ताब्दः । असाध्यप्रायेण रोगेण आक्रान्ता लोकनायकाः शय्याशरणा आसन् । सुधालेपबद्धानाम् उत्तानशायिनां च तेषां कुक्षिपरिवर्तनमपि अशक्यमासीत् । किमिदानीं मे कर्तव्यम् ? अचिन्तयन् लोकनायकाः । तेषां दिव्यचक्षुषः पुर आयातं स्वगुरोस् तिलकस्य चरितम्, तस्य च तत्त्वज्ञानम् । लोकनायकैश् चिन्तितम्–स्फूर्तिस्फारं हि लोकमान्यचरितं लोकमान्यतत्त्वज्ञानं च । अर्हतः ते पुनरपि जनस्य पुरः उपन्यासम् । अस्ति महती आवश्यकता उभयोरपि एतयोः पुनरपि जनान् प्रति प्रकाशनस्य । अहमिमे काव्ये ग्रथिष्यामि । किं तु कया भाषया ? कया वाऽन्यया ? संस्कृतभाषया एव, यस्यां हि भारतस्य सांस्कृतिको निधिर् निहितोऽस्ति, सा भाषा या तत्तद्भेदभिन्नानां भारतीयानां मिथःसंयोजकः सुधालेपोऽस्ति, तेषां निबन्धनी रज्जुरस्ति–कयाचिद् दृष्ट्या मर्यादया च या भारतस्य राष्ट्रभाषा अस्ति । निर्णीतं लोकनायकैः, लेखनं च प्रारब्धम् । उत्तानशायिभिः इतस्ततश्च वलितुमपि अशक्नुवद्भिः तैः उरोनिहितपत्र एव लेखनं कृतम् । भित्तिलग्नपृष्ठं युध्यमानस्य महाकाव्यवीरस्य उपमैव अत्र स्मृतिमायाति । श्लोकमनु श्लोकः अग्रथ्यत । महाकाव्यं क्रमेण आकारं ग्रहीतुं प्रारभत । द्वयमिदं लोकनायकान् अतारीत्–लोकमान्येषु श्रद्धा, संस्कृतभाषायां च भक्तिः । अदम्या आसीत् तेषां तितिक्षा, अविचलं धैर्यम्, अव्यभिचारिणी च निष्ठा । एवं चत्वारि वर्षाणि व्यतीतानि । ततश्च अद्भुतमिव संवृत्तम् । लोकनायका रोगमुक्ता अभवन् । इदानीं नीरोगास्ते अधिकतरोत्साहाः काव्यरचनां विदधतोऽतिष्ठन् ।

५. प्रारब्धस्य काव्यस्य परिसमाप्तिं, मुद्रितस्य च तस्य प्रकाशनं द्रष्टुं लोकनायकाः सविशेषं समुत्सुका आसन्। नियतीच्छा तु अन्यैव। ' नागविदर्भ ' राज्यस्य निर्मित्यनुकूलास्ते आसन्, तेषां तत्र कोऽपि पक्षपात आसीत्। एतदुद्दिष्टपूर्तये १९६२ खिस्ताब्दीये निर्वाचने ते संमिलिता अभवन्, काँग्रेसपक्षीयं च स्पर्धकं पराजित्य लोकसभायाः सदस्यत्वेन निर्वाचिता अभवन्। लोकनायकाः प्रकृत्या एकलक्ष्या आसन्। सकृदङ्गीकृतं कार्यं ते अनन्यवृत्तिपूर्वम् अव्यभिचारिण्या निष्ठया अनुतिष्ठन्ति स्म। एतत्प्रकृतिविशेषानुसारेण तैरिदानीं सर्वथा आत्मा राजकीये कार्ये निक्षिप्तः। श्रीतिलकयशोऽर्णवरचना न विरता; सा प्रावर्ततैव। किं तु अन्तरान्तरा, न यथापूर्वं सततवृत्त्या।

२६–१–१९६८ दिने विधिना निजं प्रभुत्वं दर्शितम्। अस्मिन् गणराज्यदिने राष्ट्रपतिमहोदयैः लोकनायकेषु "पद्मविभूषणम्" इत्युपाधिसमर्पणम् उद्घोषितम्; लोकनायकास्तु तस्मिन्नेव दिने दिवं गताः। अहो विचित्रं दैवदुर्विलसितम्। एतावता कालेन लोकनायकैर् निजं काव्यं समापितप्रायम् आसीत्। चरितपूर्त्यर्थं केचिदेव तरङ्गाः रचनीयतया अवशिष्यन्ते। महदिदं खेदस्थानं यद् नास्य काव्यस्य प्रकाशनं लोकनायकेषु जीवत्सु शक्यमभूत्। अतृप्त एवातिष्ठत् तेषाम् अयम् अभिलाषः।

६. राष्ट्रीयशिक्षणप्रसारार्थं प्रवृत्तं, लोकमान्यानां च नाम्ना संबद्धं तिलक-महाराष्ट्र-विद्यापीठं पुण्यपत्तनस्थं प्रथितमस्ति। १९२१ खिस्ताब्दे प्रारब्धमिदं विद्यापीठं १९७१ खिस्ताब्दे निजायुषः पञ्चाशतं वर्षाणि समाप्य एकपञ्चाशत्तमे वर्षे पदं निदधाति। पञ्चाशद्वर्षपूर्त्यात्मकोऽयं सुवर्णमहोत्सवः पञ्चाशद्ग्रन्थप्रकाशनेन संमाननीय इति विद्यापीठेन निर्णीतमस्ति। अस्य विद्यापीठस्य कुलपतिपदं लोकनायकैर् विभूषितमासीत्। चतुर्विंशतिं वर्षाणि ते विद्यापीठस्य वैदिकसंशोधनमण्डलस्य अध्यक्षा अपि आसन्। लोकनायकानां विद्यापीठगतम् इदं कार्यं संमानयितुं, तान् प्रति च कृतज्ञतां प्रकटयितुं सुवर्णमहोत्सवग्रन्थमालायाः प्रथमपुष्पत्वेन श्रीतिलकयशोऽर्णवः प्रकाशनीयः इति विद्यापीठेन निर्णीतम्। तस्य प्रकाशनार्थं श्रीतिलकयशोऽर्णवप्रकाशन-

समितिः नाम एका विशेषा समितिः निर्मिता, संपादनकार्यनिर्वहणार्थं च एकं संपादकमण्डलं स्थापितम्।

७. लोकनायकैः काव्यस्य रचना तावत् कृता। न तु लब्धस्तैः समयः तत् संस्कर्तुम्। संस्करणेन हि अनवधानादिना संजातानां दोषाणाम् अपनयनम्, गुणाधानं च शक्यं भवति। प्रकृते तु तादृशसंस्करणाभावात् केचन दोषा मूललेखे अवशिष्टाः सन्ति। एतद्विषये संपादकमण्डलेन एवं निजा नीतिर्निश्चिताऽस्ति यद् यावच्छक्यं काव्यं यथास्थितमेव मुद्रणीयम्। यत्र व्याकरणविषयका वा वृत्तगता वा आशयादिसंबद्धा वा गम्भीराः प्रमादा विद्यन्ते, संशोधनीयाः एव ते। अन्यत्र तु यथास्थितं मूलमेव अपरिवर्तितं मुद्रणीयमिति। ( एवं मर्यादायां कृतायामपि अनल्पेषु स्थलेषु संपादकमण्डलस्य संशोधनाधिकारः अनुष्ठातव्य आसीत्। ) एतन्निर्णयानुसारेण अधोलिखितास् तत्सदृशाश्च रचनाप्रकारास् तथैव परिरक्षिताः सन्ति —

( १ ) 'पञ्चाशीतितमे वर्षे ह्यष्टादशशतोत्तरे' ( १०.४२, ११.१० ), 'वर्षे त्रिनवतितमे ह्यष्टादशशतोत्तरे' इत्यादिषु 'उत्तर–तम' शब्दयोः स्थानविपर्ययः; ( २ ) Reform इत्यर्थे 'सुधारणा', Grand इत्यर्थे 'भव्यः'; Interference इत्यर्थे 'करक्षेपः' 'हस्तक्षेपः' इति वा, इत्यादीनां मराठ्यां रूढानां शब्दानां प्रयोगः। 'न जातु काकशापेन धेनुः कालवशा भवेत्' ( ८.२८ ) इत्यादिकं मराठी–आभाणकानां संस्कृते परिवर्तनं वा। मामलेदार, खोती, इत्यादीनां मराठीशब्दानां संस्कृतविभक्त्यन्तत्वेन प्रयोगः; ( ३ ) तथैव आङ्ग्लशब्दानां ( भूयसा नाम्नां ) संस्कृतविभक्त्यन्तत्वेन प्रयोगः; ( ४ ) अपरिचितेऽर्थे प्रयुक्ताः शब्दाः यथा, Pleader इत्यर्थे प्रवादी, accused इत्यर्थे दोषभाक्; ( ५ ) गुर्जरे इत्यादीनां बहुवचनस्थाने एकवचनम्; ( ६ ) एकस्य संज्ञिनः ( पुरुषस्य, ग्रामस्य, संस्थाया वा ) कृते संज्ञाबाहुल्यम् ( प्रायशो वृत्तानुरोधेन ) यथा, Congress इत्यर्थे राष्ट्रसभा, राष्ट्रसंसद्, महासभा। पुण्यग्रामः, पुण्यपुरी, पुण्या पुरी, पुण्यपत्तनम्, पुणे। आगरकरः, अगर्करः, आगर्करः। क्वचित् कुलनाम, क्वचित्तु व्यक्तिनाम यथा, तिलकः– बालः, रानडे– महादेवः– माधवः, गोखले–गोपालः।

८. प्रतिपादितानां विषयाणां सविस्तरा सूचिः विषयानुक्रमरूपेण प्रदत्ताऽस्ति। सा अभिप्रेतस्य स्थलस्य अन्वेषणे साहाय्यकरी स्यात्।

टिप्पण्यः अल्पाक्षराः, विरलाश्च। यतो न ता भाष्यत्वेन अभिप्रेताः। ये संदर्भाः महाराष्ट्रीयेतराणां न परिचिताः स्युः तेऽत्र स्पष्टीकृताः सन्ति। संशोधनोत्तरमपि ये केचित् प्रमादा अलक्षिताः सन्तो ग्रन्थेऽवशिष्टाः, तेऽपि टिप्पणीषु निर्दर्शिताः सन्ति।

समग्रस्य काव्यस्य कृते सूचिः अन्तिमे खण्डे दास्यते। काव्यस्य सविस्तरं चिकित्सापूर्णं रसग्रहणमपि तत्रैव करिष्यते।

अस्मिन् पुस्तके अनेकानि छायाचित्राणि संनिवेशितानि सन्ति। तेषां बहुतराणि संप्रति दुर्लभानि संवृत्तानि। काव्यमिदं मूलतः श्रव्यकाव्यम्। एतेषां छायाचित्राणां वशात्तु तद् अंशतो दृश्यकाव्येऽपि परिणमेत् इति विश्वसिमः।

९. इदमेकम् अवश्यनिर्देष्टव्यम्। संपादकमण्डले पञ्च नामानि सन्ति। न तु तावत् एतैरेव पञ्चभिः सर्वं संपादनकार्यम् ऊढम् इति मन्तव्यम्। यत्सत्यम्, सन्ति अनेके सुहृदः तिलकभक्ताः यैः अनेकैः प्रकारैः बहु उपकृतं संपादकमण्डलम्। अशक्यमेव सर्वान् निर्देष्टुम्। सर्वानपि एतान् सुहृदः प्रति संपादकमण्डलं सधन्यवादं कृतज्ञतां प्रकटयति।

१०. लोकमान्याः तिलकाः, लोकनायका अणेमहोदयाः, तथा च संस्कृतभाषा इति त्रयाणामपि वयम् अधमर्णाः स्मः। लोकनायकविरचितस्य श्रीतिलकयशोऽर्णवस्य संपादनेन तस्य च प्रकाशनेन यद् अंशतः आनृण्यं लब्धं, तेन संपादकमण्डलम् आत्मानं धन्यं मन्यते। यदि अल्पीयसी इयं कृतिः विदुषां परितोषाय भवेत्, तर्हि अवशिष्टं कार्यं –न यत् सुकरमिव–पुनरपि अङ्गीकर्तुं संपादकमण्डलं लब्धोत्साहं संपत्स्यते। क्लेशः फलेन हि पुनर्नवतां विधत्ते।

✠ ✠ ✠

# श्रीतिलकयशोऽर्णवः

## प्रथमः खण्डः

## छायाचित्रानुक्रमः

क्रमाङ्कः

---

# ॥ श्रीतिलकयशोऽर्णवः ॥

## प्रथमस्तरङ्गः

### मङ्गलम्

शंकरं प्रार्थये देवं वन्दे हिमनगात्मजाम् ।
ग्रन्थस्याविघ्नसिद्ध्यर्थं श्रद्धया रचिताञ्जलिः ॥ १ ॥

यः पपौ सुरकार्यार्थं विषमब्धिसमुत्थितम् ।
योगिनां तिलकं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

### स्ववंशप्रशंसा

अणेवंशः ख्यातः श्रुतिपठनविध्वस्तदुरित-
स्तथा धर्मश्रद्धाव्रतयमतपःशुद्धचरितः ।
अहं संजातोऽस्मिन् विमलतमशीले द्विजकुले
नतो वै तान् नित्यं मुनिवरनिभान् पूर्वजगुरून् ॥ ३ ॥

आत्मारामसुधीः पवित्रचरितोऽसौ वेङ्कटेशात्मजो
यो मे पूज्यपितामहस्य जनको विद्वद्वरैः पूजितः ।
सच्छिष्यैः श्रुतिमन्त्रघोषणपरैः संवेष्टितोऽशोभत
स्कन्धावस्थितमञ्जुशब्दविहगैरश्वत्थवृक्षो यथा ॥ ४ ॥

ऋग्वेदप्रमुखानलब्ध दश यो ग्रन्थान् गुरूणां मुखात्
पुत्रान् वैदिककेसरी मतिमतः शिष्यांश्च योऽध्यापयत् ।
संध्यावन्दनपुण्यकर्मनिरतं तं चित्रकर्मण्यपि
ख्यातं पूज्यपितामहं श्रुतिमुखं 'बालाजि'संज्ञं नुमः ॥ ५ ॥

## पित्रोः प्रशस्तिः

योऽजोऽपरो वेदमुखो द्विजोऽपि
यो रुक्मिणीप्राप्तिवशाद्धरित्वम् ।
संपादयामास हि यः शिवत्वं
गङ्गोदकक्लिन्नशिरोरुहैश्च ॥ ६ ॥

देवत्रयी यस्य तनौ प्रतिष्ठिता
वेदत्रयी यस्य मुखे सुशोभिता ।
तीर्थत्रयी येन यथायथं श्रिता
तं श्रीहरिं मज्जनकं नमाम्यहम् ॥ ७ ॥

माता मे द्विजदेवसेवनपरा सच्छ्रोत्रियस्यात्मजा
सर्वत्रैव गतस्पृहः कृषिरतो बालाजिपुत्रः पिता ।
ऋग्वेदं च पपाठ यः क्रमयुतं साङ्गं च सब्राह्मणं
वन्दे शक्तिमहेशपूज्यपितरौ तौ रुक्मिणीश्रीहरी ॥ ८ ॥

## तिलकप्रशंसा नमनं च

धैर्येण भूधर इवाम्बुधिवद् गभीरो
यस्तेजसार्क इव शीतकरः शशीव ।
ज्ञानेन गीष्पतिरिवोत्तमकर्मयोगी
तं भारतस्य हृदयं तिलकं नमामि ॥ ९ ॥

रक्तोष्णीषं शिरसि रुचिरं चन्दनाङ्कं च भाले
हस्ते यष्टिं तुहिनधवलामङ्गरक्षां शरीरे ।
स्कन्धाज्जानूपरि विलसितं चोत्तरीयं दधानं
बालं भव्यं तिलककुलजं लोकमान्यं नमामि ॥ १० ॥

गातुं तत् तिलकस्य वीरचरितं कर्णामृतं पावन-
मिच्छावीचिततिप्रकम्पितजलो मन्मानसाम्भोनिधिः ।
प्रज्ञाल्पा विषयो महानिति भवेत् पङ्गोर्गिरेर्लङ्घनं
प्रांशुप्राप्यफलाभिलाष इव वा ह्रस्वस्य तद् दुष्करम् ॥ ११ ॥

स्याद् धार्ष्ट्यान्मम विस्मितो बुधजनो यास्याम्यहं वाच्यतां
लोके यत् किल सुज्ञलोकसुलभं तन्नाप्यते प्राकृतैः ।
ज्ञात्वैवं मनसा मया भगवती ध्याता गिरां देवता
दिव्यं वाग्विभवं प्रबन्धरचनाशक्तिं च देहीति मे ॥ १२ ॥

प्रसन्ना वाग्देवी सततसुखदा भक्तवशगा
निशान्ते स्वप्ने मां कलितमहिमानं गणपतेः ।
अवोचत् सानन्दं स्थिरचरगुरुः शम्भुतनयः
कलौ बुद्धेर्दाता हरतु तव विघ्नाननुदिनम् ॥ १३ ॥

ब्रह्मज्ञं ज्येष्ठराजं श्रुतिकथितमतेनादिदेवं गणेश-
मोङ्कारं वेदबीजं पृथुतमजठरव्यक्तविश्वंभरत्वम् ।
हस्तैर्धर्मादिकानां मनुजहितपथं दर्शयन्तं चतुर्भि-
र्वन्दे पुत्रं भवान्या मिलितकरपुटोऽभीप्सितार्थस्य सिद्ध्यै ॥ १४ ॥

## प्राचीनार्वाचीनकविप्रशंसा

श्रीमद्रामकथापरायणमहं ध्यात्वा तमाद्यं कविं
श्रीव्यासं प्रणिनाय पञ्चममिवाम्नायं च यो भारतम् ।

चन्द्रार्काविव शोभिनौ कविगणाकाशप्रकाशप्रदौ
तावाद्यौ कविपुङ्गवौ मम कृतेः सिद्ध्यै मुहुः प्रार्थये ॥ १५ ॥

सृष्टिर्येन विनिर्मिता सुललिता गीर्वाणकाव्यात्मिका
वाचोऽलंकृतिरम्यहर्म्यनिवहैर्या शोभतेऽहर्निशम् ।
यत्र स्वादुरसापगा नवमुखैर्वाचां विशत्यर्णवं
वन्देऽहं कविराजमण्डलगुरुं श्रीकालिदासं च तम् ॥ १६ ॥

भासं नाट्यविलासहासरुचिरं हर्षं च हर्षप्रदं
माघं वाग्धनदं च चित्ररचनागुर्वर्थदं भारविम् ।
वाग्वश्यं भवभूतिमुत्तरकथां रामस्य योऽवर्णयद्
वन्दे तान् सकलान् प्रबन्धरचनाशक्तिप्रदानाय मे ॥ १७ ॥

हालं सत्तसईकृतं कविवरं श्रेष्ठं गुणाढ्यं तथा
नत्वा मङ्गलमातनोमि सुकवीन् ध्यात्वा महाराष्ट्रजान् ।
आदौ पूज्यमुकुन्दराजचरणौ गीतार्थभावप्रदं
ज्ञानेशं प्रणमामि सत्कविवरं मूर्ध्नि स्थितं योगिनाम् ॥ १८ ॥

नाथं मुक्त–मयूर–वामन–तुका–दासांस्तथा तां जनीं
दासो–श्रीधर–नामदेव–बहिणा–श्रीदेवनाथादिकान् ।
वन्दे तं च गुलाबमद्भुतमतिं श्रीवासुदेवं यतिं
तांबे–बी–टिळकांश्च केशवसुतं भक्त्या कवीन् नूतनान् ॥१९॥

वन्दे मित्रं माधवं मे सतीर्थ्यं
विद्वद्वर्यं डाउवंशावतंसम् ।
श्रुत्वा काव्यं यस्य हास्यप्रधानं
हृष्टाः कामं बुद्धिमन्तो रसज्ञाः ॥ २० ॥

जातश्चन्द्रपुरे द्विजोत्तमकुले यस्ताम्हनाख्ये शुचौ
शिष्याध्यापनदिव्यकर्मनिरतः प्राचार्यचूडामणिः ।

वैदर्भीसमलंकृतं रसयुतं काव्यं यदीयं पुन–
र्वन्दे शीलधनं पवित्रचरितं तं सद्गुरुं केशवम् ॥ २१ ॥

यो लोकमान्यचरितं विततं पवित्रं
खण्डत्रये सरसभावमयं लिलेख ।
चिन्तामणेः सुतमुदारमतिं नृसिंहं
साहित्यराजविरुदं तमहं नमामि ॥ २२ ॥

हरिचरणसरोजे भृङ्गवन् मञ्जु गुञ्ज–
न्नविरतमपिबद् यस्तद्रसं भक्तिगन्धिम् ।
शुकमुखगलितं सद्ग्रन्थराजं पठन्तं
सुरतरुफलकल्पं श्रीनिवासं नमामि ॥ २३ ॥

लीलोत्तुङ्गतरङ्गचित्रलहरीनृत्तेन संशोभितो
यस्मिन् निर्दहति प्रबोधवडवावह्निस्तमोऽज्ञानजम् ।
विद्यारत्नमयः पराक्रममहानक्रः सुधां धारयन्
सोऽयं लोकगुरोर्यशोऽर्णव इहागाधोऽस्तु नः श्रेयसे ॥ २४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मङ्गलाचरणाख्यः प्रथमस्तरङ्गः ।

# द्वितीयस्तरङ्गः

सह्याद्रिर्गगनप्रविष्टशिखरैर्नागाश्रितैर्गह्वरै-
नृत्यद्भिश्च नदद्भिरुच्चशिखरात् पातालगैर्निर्झरैः ।
तालैर्वायुविकम्पिपत्ररुचिरैर्वन्यैः सुपुष्पद्रुमै-
र्भव्यस्तिष्ठति शोभनः पदनतो यस्यापरस्तोयधिः ॥ १ ॥

सानौ कृष्णमृगाश्चरन्ति हरिणीयूथास्तथा निर्भया
गावो वत्सयुता अदन्ति हरितं शश्वत् तृणं कोमलम् ।
उत्तिष्ठन्त्युदकाद् वराहततयो गन्तुं दिनान्ते गृहान्
नानाजातिविचित्रवर्णविहगा गायन्ति वृक्षस्थिताः ॥ २ ॥

शय्याकर्मकराः प्रयान्ति फणिनो रात्रौ हरेर्मन्दिरं
कैलासं हरभूषणानि भुजगा यान्ति प्रभाते मुदा ।
नागा उज्ज्वलयन्ति भासुरशिरोरत्नैर्दिशः शोभते
क्षीणे चन्द्रमसि क्षपा द्युतिमती पूर्णेन्दुरात्रिर्यथा ॥ ३ ॥

धर्मासनमिदं मन्ये यो वादिप्रतिवादिनोः ।
मर्यादारक्षकः सह्यो देशकोङ्कणयोर्गिरिः ॥ ४ ॥

सह्यसिन्ध्वोर्मध्यवर्तिप्रदेशं दक्षिणोत्तरम् ।
लोकाः कोङ्कणमित्याहुस्त्वपरान्तं पुराविदः ॥ ५ ॥

सिन्धुवारिकणमिश्रितवायुः
शीतलो वहति पुष्पसुगन्धिः ।
वृक्षराजिरमितोत्सवदात्री
पान्थनेत्रयुगमोदविधात्री ॥ ६ ॥

ग्रामखेटकखर्वटपल्लिभिः
सिन्धुवीचिविधौतपुरैर्नवैः ।
दीपकैश्च रुचिरैः पथि स्थितैः
शोभते मुनिभार्गवभूरियम् ॥ ७ ॥

विप्रक्षत्रियवैश्यशूद्रमनुजा वर्णाश्रमाचारिणो
विद्याशक्तिधनश्रमार्जनपराः कष्टेन जीवन्ति ते ।
आदातुं जलधेर्झषाननुदिनं गच्छन्ति ये धीवरा
जालैर्मत्स्ययुतैः श्रमप्रमुदिता आयान्ति सायं गृहम् ॥ ८ ॥

पुष्पाणां स्तबको भाति तारकाणां समूहवत् ।
प्रफुल्लं कमलं तत्र चन्द्रमा इव शोभते ॥ ९ ॥

नभोगङ्गेव सलिलस्रोतस्ताराश्च दीपिकाः ।
खद्योतः पुच्छतारेव गृहोद्यानं नभोऽङ्गनम् ॥ १० ॥

वैदिकानां श्रुतेर्घोषं शास्त्रवादं च शास्त्रिणाम् ।
पञ्जरस्थाः शुका यत्र प्रभातेऽनुवदन्ति ते ॥ ११ ॥

मध्याह्ने च समायान्ति काका विप्रगृहाङ्गणम् ।
स्थित्वा च तत्र सेवन्ते वैश्वदेवाहृतं बलिम् ॥ १२ ॥

प्रदोषे मन्दिरस्थानाद् घण्टानादैः प्रचोदिताः ।
यान्ति देवालयं लोका आरात्रिकदिदृक्षवः ॥ १३ ॥

रत्नश्रीमदुपत्यकासु सुभगा रत्नागिरी राजते
यस्या अस्तदिशाभिरक्षणपटू रत्नाकरस्तिष्ठति ।
विख्याता नररत्नपण्डितमहावीरप्रसूर्भूरियं
यस्यां मानवकौस्तुभाः कतिपये जाताः प्रभावोत्तमाः ॥ १४ ॥

क्षेत्रभूमिरहल्येयं पाषाणसिकतामयी
हीनसत्त्वाल्पधान्या च योगक्षेमाक्षमा नृणाम् ॥ १५ ॥

जना देशान्तरं यान्ति जीविकार्थं खगा इव ।
अतोऽत्रत्या नराः प्रायो विततास्सर्वभारते ॥ १६ ॥

कोङ्कणान्निर्गताः प्रायः पुनर्नायान्ति मानवाः ।
तत्रैव वासं कुर्वन्ति परभूम्यां कृतोद्यमाः ॥ १७ ॥

शाहूराजे प्रसिद्धे शिवसुततनये राज्यसिंहासनस्थे
बाळाजिर्वैश्वनाथिः सचिवगणवरो भट्टवंशप्रसूतः।
आयातः पुत्रदारैः सह निपुणमतिः कोङ्कणाद् दूरदेशं
पूतं श्रीदासबोधामृतमयसलिलै रम्यकृष्णातटाकम् ॥ १८ ॥

समायाता मन्ये निजजनविपद्भग्नहृदया
शरण्यं राजानं प्रकृतिमृदुलं कोङ्कणमही।
त्रिरत्नं प्रत्यर्प्य प्रणतशिरसा वाक्यमवदत्
प्रभो दीनान् पाहि व्यथितमनसः कोङ्कणजनान् ॥ १९ ॥

तस्मै बाळाजिपंताय शाहूराजः सुनीतिमान्।
राज्ञः प्रतिनिधित्वेन प्रार्पयत् पेशवापदम् ॥ २० ॥

प्राणा बहिश्चरा मेऽयं बाळाजी राष्ट्रवर्धनः।
लोकास्तमनुवर्तन्तां सर्वे शासनकर्मणि ॥ २१ ॥

पुत्रपौत्रादयस्तस्य पेशवेपदभागिनः।
भवन्तु राष्ट्रवृद्ध्यर्थं यावच्चन्द्रदिवाकरौ ॥ २२ ॥

राजमुद्राङ्कितं पत्रं नृपेण गुणशंसिना।
प्रेषितं सर्वतो राज्ये डिण्डिमैश्चापि घोषितम् ॥ २३ ॥

महाराष्ट्राधिपायास्मै देवी कोङ्कणवासिनी।
बाळबाजीचिमाप्पाख्यनृरत्नानि ददौ पुरा ॥ २४ ॥

समर्थानुगृहीतोऽभूद् भोसलेवंशभूषणः।
शिवाजिः स्थापयामास स्वराज्यं म्लेच्छमर्दनः ॥ २५ ॥

दृढमूलोऽभवद् वृक्षः शतवर्षाधिकावधिः।
पेशवेवंशजैः शूरैर्वर्धितो युद्धदुर्मदैः ॥ २६ ॥

गुर्जरे मालवे प्राच्यामुदीच्यां विस्तृतास्तथा।
तस्य शाखाः प्रशाखाश्च मराठावीरविक्रमैः ॥ २७ ॥

आक्रान्ते भारते वर्षे यवनैर्धर्मशत्रुभिः ।
बभ्रमुर्हिन्दवो दीना निराधारा गताश्रयाः ॥ २८ ॥

म्लेच्छचण्डातपम्लानद्विजावासः सुरद्रुमः ।
कृष्णातटे स्थितिर्यस्य धर्मबीजसमुद्भवः ॥ २९ ॥

धर्मराज्यस्य हिन्दूनामेक एवाश्रयो भुवि ।
धर्मशत्रुच्छलत्रस्तसज्जनानां सुखावहः ॥ ३० ॥

कालेन जीर्णतां प्राप्तो दुर्गुणैर्दुर्बलीकृतः ।
शूरवीरपरित्यक्तो रणभीरुनिषेवितः ॥ ३१ ॥

तिसृभिः शक्तिभिः शून्य आसन्नपतनोऽभवत् ।
समूलं पातयामासुराङ्ग्लास्तं जीर्णपादपम् ॥ ३२ ॥

महाराष्ट्रमही जाता विधवेव हतप्रभा ।
आङ्ग्लाधीनाः प्रजा आसन् पञ्जरस्था द्विजा इव ॥ ३३ ॥

राजप्रासादमारूढमाङ्ग्लराजध्वजं जनाः ।
दृष्ट्वा प्ररुरुदुः केचिन् मुदिताः केचनाधमाः ॥ ३४ ॥

खोजैराङ्ग्लैर्गुर्जरैश्च पारसीकैर्महाजनैः ।
कृतालकापुरी शीघ्रं मुम्बाद्वीपपुरी नवा ॥ ३५ ॥

मुम्बापुरीं चतुर्वर्णाः समायान्ति दिने दिने ।
जीविकार्थं वसन्त्येव कलत्रैः पुत्रकैः सह ॥ ३६ ॥

यां पेशवेकुलजनः प्रियजन्मभूमि-
मत्यादरेण परिपालयति स्म नित्यम् ।
सोपेक्षिता खलु तिरस्कृतिपूर्णदृष्ट्या
ताम्रैस्तु कोङ्कणभवद्विजशत्रुबुद्ध्या ॥ ३७ ॥

बहिस्तु कण्टकैर्युक्ता अन्तः स्वादुरसान्विताः ।
गृहे गृहेऽत्र दृश्यन्ते पुरुषाः पनसा इव ॥ ३८ ॥

वेश्मपाला यथा तालाः प्रांशवः श्रीफलैर्युताः ।
रम्भा इव शुभारम्भाः फलदाश्च कुलस्त्रियः ॥ ३९ ॥

उद्गायन्ति च छन्दांसि सहकारफलासवम् ।
कोङ्कणेषु द्विजाः पीत्वा दिवि देवा यथामृतम् ॥ ४० ॥

व्यतीयुः प्रायशो नैते वर्त्मनो मनुचोदितात् ।
विपत्तावपि संतुष्टा जना धर्मपरायणाः ॥ ४१ ॥

भूमिः शस्त्रबलार्जितेति विदिता रामेण सिन्धोः पुरा
पुण्यश्लोकजनिः खनिश्च महती मानुष्यरत्नाश्मनाम् ।
पूता सिद्धतपोधनाश्रमपदैर्या पुण्यभूः सेविता
प्राज्ञैः कोङ्कणसंज्ञितेयममला देवर्षिसङ्घैर्मुदा ॥ ४२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे कोङ्कणभूवर्णनाख्यो द्वितीयस्तरङ्गः ।

## तृतीयस्तरङ्गः

रत्नागिरीप्रदेशस्थः पङ्क्ग्रामः पुरातनः ।
तिलकोपाह्वविप्राणां मूलस्थानमिति श्रुतम् ॥ १ ॥

तेषां लक्ष्मीकेशवाख्यः कुलदेवोऽस्ति पूजितः ।
तत्रैव मन्दिरं तस्य जीर्णमद्यापि वर्तते ॥ २ ॥

चतुःशताधिकाब्देभ्यः पूर्वं तिलकपूर्वजाः ।
न्यवसन् चिखलग्रामे खोतीवृत्तिमुपाश्रिताः ॥ ३ ॥

तस्मिन् वंशे बुद्धिमन्तश्चतुरा धार्मिका द्विजाः ।
कुलदेवार्चकाश्चासन् केचिच्छूरा बहुश्रुताः ॥ ४ ॥

तेषु विप्रः केशवाख्यस्तिलकान्वयपूर्वजः ।
तस्माद् दामोदरस्तस्मात् कृष्णस्तस्माच्च केशवः ॥ ५ ॥

तत्सुतः कृष्णनामा यो लक्ष्मीकेशवपूजकः ।
तस्माज्जज्ञे सुतो धीमान् केसोपंतः प्रतिष्ठितः ॥ ६ ॥

प्रकृत्या धर्मशीलश्च मल्लविद्याकृतश्रमः ।
लक्ष्यवेधे च कुशलो हयारोहणकोविदः ॥ ७ ॥

लेखने व्यवहारे च पटुर्दक्षः स्वकर्मणि ।
'मामलेदार' इत्येतत् स्वराज्ये प्राप्तवान् पदम् ॥ ८ ॥

धर्मेण च प्रजाः सर्वाः पुत्रवत् प्रशशास सः ।
कीर्तिं संपादयामास हितकर्तेति कोङ्कणे ॥ ९ ॥

पदच्युते बाजिरावे प्रवृत्ते चाङ्ग्लशासने ।
अधिकारपदं त्यक्त्वा स्वग्रामं केशवो ययौ ॥ १० ॥

निनायायुर्देवपूजाहव्यकव्यादिकर्मभिः ।
भगवच्चिन्तनेनान्ते ब्रह्मलोकमवाप सः ॥ ११ ॥

तस्मिंश्च समये जातः कश्चित् तिलकवंशजः ।
बण्डुनामा गतो योद्धुं रणे पानिपते स्वयम् ॥ १२ ॥

हतः सदाशिवो युद्धे विश्वासो निहतो रणे ।
हिन्दुसैन्यं पराजित्य प्रापाब्दालिर्जयं तदा ॥ १३ ॥

सैनिका येऽवशिष्टास्ते दक्षिणाशां प्रतस्थिरे ।
प्रस्थितश्चाथ तैः सार्धं बण्डुर्बन्धुदिदृक्षया ॥ १४ ॥

व्याधिक्षीणः स्थितो मार्गे विश्रान्त्यै निबिडे वने ।
जन्मभूमिमसंप्राप्य ग्रामेऽज्ञाते दिवं ययौ ॥ १५ ॥

दावानलोग्रदाहेन भस्मशेषे कृते वने ।
सुरम्यकाननस्थानं प्रतिभाति श्मशानवत् ॥ १६ ॥

महाराष्ट्रे स्थितिस्तद्वज्जाता पानिपते रणात् ।
ग्रामाश्च युवभिर्हीना विधवा दुःखविह्वलाः ॥ १७ ॥

हाहाकारो महानासीद् बाळाजिः पेशवोत्तमः ।
त्यक्त्वैव राजभवनं पर्वतीमन्दिरेऽवसत् ॥ १८ ॥

अभिमन्यूपमं पुत्रं भ्रातरं भीमविक्रमम् ।
स्मृत्वाऽन्यानपि तान् वीरान् रणे पानिपते हतान् ॥ १९ ॥

हा हतोऽस्मीति दुःखेन वदन् कालवशोऽभवत् ।
शोकार्णवे जनाः सर्वे मग्ना दिङ्मूढतां गताः ॥ २० ॥

चत्वारस्तनया आसन् केसोपंतस्य धीमतः ।
रामचन्द्रोऽग्रजस्तेषां तस्यासीद् गृहिणीद्वयम् ॥ २१ ॥

सुषुवे रुक्मिणी पुत्रौ ज्यायसी सा पतिव्रता ।
गङ्गाधरं च गोविन्दं पित्रोः संतोषकारिणौ ॥ २२ ॥

रामचन्द्रो विरक्तोऽभूद् भार्यामरणदुःखितः ।
संत्यज्य पुत्रकौ स्वीयौ काशीक्षेत्रं जगाम सः ॥ २३ ॥

उवास यतिधर्मेण गङ्गातीरेऽतिपावने ।
जहौ कलेवरं जीर्णमन्ते योगसमाधिना ॥ २४ ॥

तत्सुतोऽल्पवयाश्चापि ज्यायान् गङ्गाधरोऽवहत् ।
भारं कौटुम्बिकं सर्वं योगक्षेमं च दुर्वहम् ॥ २५ ॥

शास्त्राभ्यासैः परिणतमतिः प्राप गङ्गाधरोऽयं
वृत्तिं रत्नागिरिशिशुगणाध्यापकस्याल्पवित्ताम् ।
पञ्च प्राणा इव शुभतमा रूप्यकाः पञ्च तस्य
मासप्राप्तिस्तरुणवयसः शास्त्रिणः शिक्षकस्य ॥ २६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकपूर्वजवर्णनाख्यस्तृतीयस्तरङ्गः ।

# चतुर्थस्तरङ्गः

गङ्गाधरो द्विजसुतामुदुवाह सुलक्षणाम् ।
सुशीलां पार्वतीनाम्नीं सुमुहूर्ते यथाविधि ॥ १ ॥

गणिते कृतविद्यश्च पदशास्त्रे च कोविदः ।
तथा साहित्यशास्त्रेऽपि प्रावीण्यं प्राप्तवान् बुधः ॥ २ ॥

इतिहासे पुराणे च कृतभूरिपरिश्रमः ।
गङ्गाधरः शास्त्रिवर्य इति विद्वद्भिरादृतः ॥ ३ ॥

आदिराजमनोः पत्नी शतरूपेव गेहिनी ।
पार्वती सुषुवे कन्यास्तिस्रो रूपगुणैर्युताः ॥ ४ ॥

गृहं गङ्गाधरस्यासीच्छिशुलीलाप्रमोदितम् ।
देवद्विजातिथीनां च पूजास्थानं सुमङ्गलम् ॥ ५ ॥

छात्रैर्गुणनिकाघोषैः कन्याभिर्हास्यरोदनैः ।
गोभिर्वत्सैश्च हम्भाभिः सद्म नित्यं निनादितम् ॥ ६ ॥

यथा वृद्धिः कुटुम्बस्य वृत्तौ वृद्धिस्तथा क्रमात् ।
शतार्धं मासिकं द्रव्यं लेभे गङ्गाधरः सुधीः ॥ ७ ॥

गृहकर्मसु दक्षापि पार्वती दुःखिता सदा ।
पुत्रहीनेति सूर्यं सा तदवाप्त्यै समार्चयत् ॥ ८ ॥

प्रत्यहं प्रातरुत्थाय कृत्वा स्नानं यथाविधि ।
आवाहनादिविधिभिः पूजयामास भास्करम् ॥ ९ ॥

एकाब्दमाचरद् देवी संयता व्रतमुत्तमम् ।
देवद्विजगुरून् भक्त्या याचमानाशिषः शुभाः ॥ १० ॥

अब्दान्ते सा द्विजादिष्टा समाप्तिमनयद् व्रतम् ।
यथाशास्त्रं भोजयित्वा ब्राह्मणान् वेदपारगान् ॥ ११ ॥

स्वप्ने ब्राह्मणवेषेण सूर्यस्तस्यै वरं ददौ ।
प्राप्नुयास्तनयं वत्से वर्षान्ते मम संनिभम् ॥ १२ ॥

उद्यात् प्राग् यथा धत्ते प्राची तेजस्विनं रविम् ।
तथैव पार्वती गर्भमावहत् स्वोदरे सती ॥ १३ ॥

प्राप्तेऽर्कोदयसांनिध्ये पूर्वा भवति भास्वती ।
विच्चेयतारका श्वेतारक्तवर्णाम्बरावृता ॥ १४ ॥

अन्तर्वत्नी शुभ्रवस्त्रा कुङ्कुमालंकृतालका ।
अप्येकं मङ्गलं सूत्रं बिभ्रती शुशुभे तदा ॥ १५ ॥

संपूर्णे नवमे मासि पार्वती शोभने दिने ।
घटीद्वयमिते काले गते सूर्योदयात् सती ॥ १६ ॥

शालिवाहनशाकेऽब्दे वसुशैलाश्वभूमिते ।
आषाढस्यासिते पक्षे षष्ठ्यां पुत्रमजीजनत् ॥ १७ ॥

उदितेऽर्के जनाः सर्वे पठन्ति स्तोत्रमुत्तमम् ।
द्विजा गायन्ति वृक्षाग्रे स्वच्छन्दं हर्षनिर्भराः ॥ १८ ॥

गङ्गाधरः सुतं लब्ध्वा व्यतरच्छर्करां तदा ।
द्विजज्ञातिवयस्येषु रत्नागिरिनिवासिषु ॥ १९ ॥

मुदिताश्च जनाः सर्वे दृष्ट्वार्कनिभमर्भकम् ।
गीतवादित्रघोषेण गृहे चक्रुर्महोत्सवम् ॥ २० ॥

जातकर्मादिसंस्कारांश्चकार श्रद्धया पिता ।
तं बालं केशवं नाम्ना तदा चक्रे समाहितः ॥ २१ ॥

सुतनाम न गृह्णीयान् मर्यादां पालयन्निमाम् ।
आजुहाव पिता पुत्रं केशवं "बाळ" संज्ञया ॥ २२ ॥

पितृदत्ताभिधानेन प्रख्यातिं प्राप केशवः ।
बाळ गङ्गाधर इति तिलको विश्वविश्रुतः ॥ २३ ॥

प्रियशिशुललितैस्तैः क्रीडितैस्ताः प्रहृष्टा
नयनरुचिरवर्णं खेलनं मञ्जुनादम् ।
ददति परमरागाच्चुम्बनेनानुजाय
शिरसि च मुदितास्तं धारयन्ति स्वसारः ॥ २४ ॥

पित्रोः प्रेयः किमपि भुवने नाधिकं "बाळ"पुत्राद्
मग्नौ नित्यं प्रकृतिमधुरौ बालसंवर्धने तौ ।
माता चक्रे नियतसमये स्नापनं भोजनं च
तन्निद्रार्थं सुखदशयनान्दोलसंचालनं च ॥ २५ ॥

उत्तिष्ठन्तं पादविक्षेपयन्तं
कुर्वन्तं तं बालकं चञ्चलाङ्गम् ।
पादन्यासप्रौढरीतिं सुताय
हस्तं दत्त्वा शिक्षयामास तातः ॥ २६ ॥

श्रुत्वा शब्दांश्चाकुलान् बालकोक्तान्
"आई ताई माइ बाबे" ति चामाः ।
मन्यन्ते ते शारदावाक्सुधायाः
धारां बालो वर्षति श्रोत्ररन्ध्रे ॥ २७ ॥

चतुर्थेऽब्दे पूर्णे कुशलजननी "बाळ"वयसः
कुलाचार्यप्रोक्तां सकलशुभदां शान्तिमकरोत् ।
पितासौ प्राणंसीत् पशुपतिभवानीगणपतीन
ददौ च श्रीकारं निजसुतकरे लेख्यफलकम् ॥ २८ ॥

गृहीत्वा फलकं हस्ते पिशाङ्गैः पांसुभिश्चितम् ।
अक्षराङ्कलिपीर्बालोऽलिखद् वंशशलाकया ॥ २९ ॥

वाङ्मयाब्धिप्रवेशाय फलकं पोतवन्ननु ।
तस्य संचालनायैव क्षेपणी लेखनी तथा ॥ ३० ॥

बालेन सप्तमे वर्षे कोशः कण्ठीकृतः स्वयम् ।
गृह्यसूत्राणि काव्यं च पिता स्वयमपाठयत् ॥ ३१ ॥

बालस्य सूक्ष्मबुद्धित्वाद् विद्याप्तिर्लीलयाभवत् ।
अधीतस्याल्पकालेऽपि न तद्विस्मरणं क्वचित् ॥ ३२ ॥

अष्टमेऽब्दे स्वपुत्रस्य वयसः शास्त्रवित् पिता ।
मौञ्जीबन्धनसंस्कारं शास्त्रोक्तविधिनाकरोत् ॥ ३३ ॥

बालोपनयनाचार्यः प्राप्तवान् खलु धन्यताम् ।
यतस्तदुप्तमन्त्रस्य प्ररुरोह तरुर्महान् ॥ ३४ ॥

वेदविद्यातरुर्बालहृदये ववृधेऽञ्जसा ।
प्रौढे वयसि तच्छाखास्त्रिखण्डीं व्याप्य वै स्थिताः ॥ ३५ ॥

माता नित्यं पुत्रबुद्धिप्रभावं
श्रुत्वा शालाध्यापकाद् मोदमाप ।
तातो दक्षः शीलसंवर्धनेऽस्य
शिष्टाचाराञ् शिक्षयामास सम्यक् ॥ ३६ ॥

गङ्गाधरेऽध्यापनकोविदेऽस्मिञ्
शालास्थविद्यार्थिपरीक्षणाय ।
ग्रामस्थलोकास्तु प्रतिष्ठमाने
पुण्यां पुरीं शोकपरा बभूवुः ॥ ३७ ॥

पत्युरुत्कर्षकालेऽस्मिन् पार्वती पुण्यपत्तने ।
पालयामास गोविन्दं सपत्नीकं स्वदेवरम् ॥ ३८ ॥

द्विजाभ्यागतसत्कारे सुदक्षा पार्वती सदा ।
अपत्यवत्सला साध्वी दीनछात्रोपकारिणी ॥ ३९ ॥

बालस्य दशमे वर्षे साध्वी कालवशाभवत् ।
मग्नाः शोकार्णवेऽगाधे पतिपुत्रकुटुम्बिनः ॥ ४० ॥

संसारे सुखदुःखतन्तुघटिते दैवेन दोलायिते
दुःखस्योपशमं करोति गृहिणी संसारपद्मासना ।
भार्याप्रेमविहीनसंसृतितरुः पत्युर्भवेन्नीरसो
हर्म्यं भाति किलाप्तबन्धुविपुलं निर्मक्षिकं काननम् ॥ ४१ ॥

मृतायां हि जनन्यां तद् व्यालव्यात्ताननोपमम् ।
शोकानलेन तप्तस्य नेत्रपीडास्पदं गृहम् ॥ ४२ ॥

गङ्गाधरोऽथ गोविन्दं गृहकर्मण्ययोजयत् ।
पण्यक्रयादिकार्येषु तथायव्ययलेखने ॥ ४३ ॥

पुण्यपत्तनशालायां कृत्वा पाठान् यथाक्रमम् ।
बालः सर्वपरीक्षासु यशः प्राप्नोदनुत्तमम् ॥ ४४ ॥

यदा पौगण्डमुल्लङ्घ्य बालः प्रौढं वयोऽविशत् ।
वधूमन्वेष्टुकामोऽसौ प्रतस्थे कोङ्कणं पिता ॥ ४५ ॥

या लाडघरविख्याते ग्रामे "बाळ" कुलोद्भवा ।
कन्या सा सुतयोग्येति स्नुषा तेन विनिश्चिता ॥ ४६ ॥

मूलस्थाने स्ववंशस्य चिखलग्राममन्दिरे ।
ब्राह्मेण विधिना बाल उपयेमे वधूं शुभाम् ॥ ४७ ॥

श्वशुरेण यथार्हं हि वरपक्षप्रतिष्ठिताः ।
प्राप्नुवन् परमं हर्षं वदान्येनातिसत्कृताः ॥ ४८ ॥

गीतैर्वादित्रघोषैश्च गङ्गाधरकुटुम्बिनः ।
वधूवरं पुरस्कृत्य प्राविशन् पुण्यपत्तनम् ॥ ४९ ॥

ततो लक्ष्मीं पूजयित्वा वध्वा नामान्तरं कृतम् ।
सत्यभामेति विज्ञाता नवोढा पतिसद्मनि ॥ ५० ॥

गङ्गाधरोऽध्यापनकार्यदक्षो
ग्रन्थान् महाराष्ट्रजनस्य वाण्याम् ।

ऐतिह्य-भाषा-गणितेषु छात्र-
स्वस्थप्रवेशाय लिलेख मान्यान् ॥ ५१ ॥

शास्त्रे व्याकरणे ख्याता मराठ्या वै मुनित्रयी ।
बाळशास्त्री च दादोबा शास्त्री गङ्गाधरस्तथा ॥ ५२ ॥

सुतोद्वाहोत्तरं जातः पितासौ व्याधिपीडितः ।
तदाज्ञयाकरोन्नित्यं गीतापाठं प्रियः सुतः ॥ ५३ ॥

विद्वन्मान्यः सकलसुजनैरादृतोऽयं सुशीलो
विद्याध्येता प्रकृतिसरलो वत्सलश्छात्रवर्गे ।
त्यक्त्वा स्वीयं प्रियतमसुतं सानुजं मित्रवर्गं
स्वर्गं लोकं सुकृतसुलभं पूज्यगङ्गाधरोऽगात् ॥ ५४ ॥

दशरथे परलोकगते यथा
रघुपतेरभवद् विकलं मनः ।
प्रियपितुर्निधनेन च दुःखितं
कुसुमकोमलबालमनस्तथा ॥ ५५ ॥

अहह दुःखमयं मम जीवितं
गुरुजनप्रियसंगविवर्जितम् ।
वहति सिन्धुजलेष्वनियन्त्रिता
विगतनाविकतोयतरी यथा ॥ ५६ ॥

" जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः " ॥ ५७ ॥

इति रामोक्तिमुच्चार्य भवभूतिप्रकाशिताम् ।
बालः प्रकृतिधीरोऽपि रुरोद विवशस्तदा ॥ ५८ ॥

ततः पितृव्यो गोविन्दो गत्वा बालस्य संनिधौ ।
मधुरैः सान्त्वयामास वाक्यैस्तं ह बहुश्रुतम् ॥ ५९ ॥

कृत्वोत्तराः क्रियाः सर्वा अन्त्येष्ट्याद्या यथाविधि ।
पिता मे सद्‌गतिं यायादिति प्रार्थयतेश्वरम् ॥ ६० ॥

जहौ शोकं विद्यासदनमगमच्छान्तमनसा
क्रमेणाप ज्ञानं विविधविषयाणां गुरुमुखात् ।
प्रवेष्टुं मुम्बय्याः सकलविषयज्ञाननिलयं
परीक्षामुत्तीर्णः परिणतमतिर्बालतिलकः ॥ ६१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मातृपितृवियोगाख्यश्चतुर्थस्तरङ्गः ।

## पञ्चमस्तरङ्गः

बालो ह्याङ्ग्लैः स्थापितं ज्ञानपीठं
पुण्यक्षेत्रे विश्वविद्यालयीनम् ।
डेक्कन्कॉलेज्संज्ञितं सुप्रसिद्धं
श्रेष्ठज्ञानप्राप्तयेऽगात् सुबुद्धिः ॥ १ ॥

आसीत् पुरा भारतमेव केन्द्रं
विद्याकलाजीवनशिक्षणस्य ।
ऊषुर्विदेशेभ्य इहागतास्ते
विद्यार्थिनो ज्ञानिजनाश्रमेषु ॥ २ ॥

तदा च सर्वास्वपि दिक्षु नैक
आचार्यवर्याः स्म चरन्ति विश्वे ।
अज्ञानपङ्कोद्धरणप्रयत्ना-
स्तपस्विनश्चात्मविदो गुणाढ्याः ॥ ३ ॥

मिस्रासुरब्रह्मसयामचीन-
लङ्कायवद्वीपसमूहसंस्थान् ।
अध्यापयामासुरनेकशिष्यान्
धर्मं तथा संस्कृतजीवनं च ॥ ४ ॥

विद्यादानविधानपण्डितवरैः पाश्चात्यदेशागतैः
कृत्वा माध्यममाङ्ग्लवाचमखिलज्ञानस्य विद्यालयान् ।
संस्थाप्यैव च तत्र शिक्षितजनान् दत्त्वा प्रतिष्ठासन-
माङ्ग्लाध्यासितभारतेऽस्तसमयं विद्याकले प्रापिते ॥ ५ ॥

उद्ध्वस्ताः पाठशाला द्विजवरतनया वाचमध्येतुमाङ्ग्लां
चक्रुः शालाप्रवेशं निपुणमतिरपि श्रोत्रियः शिष्यहीनः ।
पाश्चात्त्याः संस्कृतज्ञा द्विजवरतनुजाञ् शिक्षयन्ति स्म वेदाञ्
शास्त्रज्ञा भारतीया बत पदमपि न प्रापुरध्यापकेषु ॥ ६ ॥

विद्यावृक्षस्य शाखे द्वे कलाविज्ञानसंज्ञके ।
आरुरुक्षुः कलाशाखां प्रयेते तिलको मुदा ॥ ७ ॥

साहित्यतत्त्वजिज्ञासुः कलाशाखासमाश्रितः ।
प्रयोगशास्त्रजिज्ञासुः स विज्ञानाश्रयस्तथा ॥ ८ ॥

विद्यालयीनशिक्षायाः समुद्देशाश्चतुष्टयम् ।
प्रत्नैरभिनवैश्चापि विद्याविद्भिः प्रकीर्तितम् ॥ ९ ॥

शरीरस्य च शीलस्य बुद्धिभावनयोस्तथा ।
सम्यग्विकसनाच्चैव मनुजो याति पूर्णताम् ॥ १० ॥

क्रीडाङ्गनानि रम्याणि प्राचार्याणां सुसंगतिः ।
ग्रन्थालयेषु चाध्यायः सामुदायिकजीवनम् ॥ ११ ॥

चतुर्विधविकासस्य साधनं कथ्यते बुधैः ।
पाथेयं भवयात्रायां विद्याकाले यदर्जितम् ॥ १२ ॥

पुणेविद्यालयस्थानामाचार्याणां समागमः ।
शिष्येभ्यस्तिलकादिभ्यो दुर्लभप्राय एव तु ॥ १३ ॥

यूरोपादागताः सर्वे प्राध्यापकमहाशयाः ।
भिन्नाचारविचाराणां कुतस्तेषां समागमः ॥ १४ ॥

निरामिषाशनाश्छात्रा मद्यपानविवर्जिताः ।
रता वर्णाश्रमाचारे प्रतिमापूजका अपि ॥ १५ ॥

संगो हि दुःसहस्तेषां मद्यामिषनिषेविणाम् ।
आहारेषु विहारेषु प्रार्थनोपासनादिषु ॥ १६ ॥

विद्यालये समायाताः पाठकाले हि ये तदा ।
छात्राः स्वाचार्यवर्यैस्ते बभूवुः संगताः क्वचित् ॥ १७ ॥

सहावनं समं भुक्तिः सहवीर्यकृतिस्तथा ।
एतैरधीतं तेजस्वि सच्छिष्याचार्ययोः पुरा ॥ १८ ॥

आचार्यः केरुनानाख्यश्छत्रेवंशविभूषणः ।
विख्यातो गणिताचार्यः सर्वशिष्यप्रियोऽभवत् ॥ १९ ॥

यूरोपीयेषु ये केचिद् वर्डस्वर्थादिपण्डिताः ।
शीले चाध्यापनस्यापि कौशले छात्रपूजिताः ॥ २० ॥

शिष्यास्तत्त्वेतिहासज्ञं शूटसंज्ञममानयन् ।
संस्कृतज्ञः कीलहॉर्नस्तद्द्वितीयः पिटर्सनः ॥ २१ ॥

पेण्ढारकरथत्ते च शास्त्रिणौ सहकारिणौ ।
साहित्यशाब्दतर्केषु निष्णातौ धर्मचारिणौ ॥ २२ ॥

क्षारसागरमध्यस्थो गङ्गौघ इव निर्मलः ।
पाश्चात्याचार्यमध्यस्थः केरोपंतो व्यराजत ॥ २३ ॥

प्रावीण्यं तिलकस्तस्माद् गणिते प्राप सत्वरम् ।
नानामपूजयंच्छिष्या दिवि देवा यथा गुरुम् ॥ २४ ॥

साङ्गान् वेदोपवेदांश्च सेतिहासान् सदर्शनान् ।
पुराणस्मृतिसाहित्यानध्यगीष्ट महामतिः ॥ २५ ॥

ममन्थ बुद्धिदण्डेन तत्त्वैतिह्यमहोदधिम् ।
लिप्सुर्ज्ञानामृतं तस्माद् दास्यव्याधिविनाशनम् ॥ २६ ॥

व्यायामार्थमखेलंश्च छात्रा विद्यालयस्थिताः ।
विविधाः कन्दुकक्रीडा आङ्ग्लदेशेऽतिविश्रुताः ॥ २७ ॥

विद्यालयीनकाले हि शरीरं पाञ्चभौतिकम् ।
तिलकोऽतन्द्रितो येते बलिष्ठं कर्तुमात्मनः ॥ २८ ॥

मल्लस्कम्भजलक्रीडानदीसंतरणादिषु ।
मल्लयुद्धादिखेलेषु दाजिस्तस्य सखाऽभवत् ॥ २९ ॥

एवं स्वाध्यायकालेऽपि संपाद्यारोग्यसंपदम् ।
तयैवोत्तरकालेऽसौ घोरक्लेशसहोऽभवत् ॥ ३० ॥

क्रीडासु परकीयासु बहिष्कारस्तथैव च ।
अनुरागः स्वकीयासु भाविसूत्रनिदर्शकम् ॥ ३१ ॥

न कदापि विपद्‌हो मुमूर्च्छ तिलके क्वचित् ।
शैले यथा मरुद्वेगः पादपोन्मूलनाक्षमः ॥ ३२ ॥

अवगाहेऽथ तरणे नौकासंचलने तथा ।
न कोऽपि स्पर्धितुं शक्तस्तिलकेन बलीयसा ॥ ३३ ॥

स्वराष्ट्रनौकावाहानां कर्णधारपदस्य नु ।
जलक्रीडाविहारेऽस्मिञ् शिक्षणं तिलकोऽग्रहीत् ॥ ३४ ॥

दास्योदधिं तितीर्षोस्तु नदीतरणकौशलम् ।
आवश्यकमिति ज्ञात्वा तेनाप्तं तत् प्रयत्नतः ॥ ३५ ॥

विविधासु परीक्षासु स सुधीः प्राप्तवान् यशः ।
किं तु एमेपरीक्षायां प्रयत्यापि च नाप तत् ॥ ३६ ॥

विधिमध्येतुकामः स विधिविद्यालयं गतः ।
तत्र चाधिजगे साग्रं राज्यशास्त्रं समूलकम् ॥ ३७ ॥

ऐशवीयेऽथ वर्षे स ग्रहाश्ववसुभूमिते ।
परीक्षायां समुत्तीर्णः एलेल्बीपदमाप सः ॥ ३८ ॥

प्रसिद्धाख्यायिकामेकामत्र वृद्धजनाच्छ्रुताम् ।
तच्छीलं स्थापयन्तीं च संक्षेपेणैव वर्णये ॥ ३९ ॥

कदाचिद् गणितस्यासीद् गुपितं जटिलं किल ।
तदुत्तरप्रदानेऽभूदक्षमोऽध्यापकोऽपि वै ॥ ४० ॥

तिलकस्तत्समस्याया उत्तरं दत्तवानिति ।
ज्ञात्वा तस्योत्तरं योग्यमाङ्ग्लाचार्योऽवदद् मुदा ॥ ४१ ॥

'अहो भाग्यं ममाप्यद्य शिष्यादिच्छेत् पराजयम्' ।
केरोपंतस्य शिष्योऽहं म तवेत्यब्रवीत् तदा ॥ ४२ ॥

तेनोत्तरेण निर्विण्ण आङ्ग्लाचार्यो न कर्हिचित् ।
तिलकेनाकरोद् वाचमित्येतदनुशुश्रुम ॥ ४३ ॥

अप्रियं चापि यत् सत्यमुवाच तिलकः सदा ।
रोषं नागणयत् तत्र केषामपि महामनाः ॥ ४४ ॥

दाजिस्तथागरकरः शार्ङ्गपाणिरुपासनिः ।
चत्वारो मित्रतां प्राप्ताश्छात्रवासनिवासिनः ॥ ४५ ॥

मुमुक्षुभिस्तु छेत्तव्यं प्रथमं रूढिबन्धनम् ।
व्यक्तिस्वातन्त्र्यमाप्तव्यमित्यागरकराग्रहः ॥ ४६ ॥

परतन्त्रजनस्याद्यं कर्तव्यं दास्यमोचनम् ।
न विन्देच्छर्म लोकोऽयं स्वराज्याभावतः क्वचित् ॥ ४७ ॥

परकीयैः कृतादत्र शोषणाद् दुर्बला जनाः ।
स्वातन्त्र्यप्राप्तिरेवैका देशोत्कर्षस्य साधनम् ॥ ४८ ॥

बालः स्वमतसिद्ध्यर्थं महाभारतसंमतम् ।
उच्चैर्जुघोष सिद्धान्तं ‘ राजा कालस्य कारणम् ’ ॥ ४९ ॥

एति क्षयं राष्ट्रशरीरमञ्जसा
ग्रस्तं च यद् भीषणराजयक्ष्मणा ।
उन्मूलयत्यामयमेव कृत्स्नं
शक्तिर्नृणां संघटनप्रसूता ॥ ५० ॥

अज्ञानतिमिरान्धानां दुर्बलानां महौषधम् ।
ज्ञानं तेजःप्रदं तेषां संहतिः कार्यसाधिका ॥ ५१ ॥

‘ लोकाज्ञानविनाशाय यावज्जीवं यतावहै ’ ।
तिलकागरकरावेतं शपथं कुरुतः स्म ह ॥ ५२ ॥

मित्राणि सर्वाणि तयोः सुनिश्चय–
माकर्ण्य तौ द्वौ प्रशशंसुरन्वहम् ।

ऊचुर्मुदा सर्वजनोपकारको
निष्कण्टको देशहितोऽस्तु पन्थाः ॥ ५३ ॥

खिन्ना या सततं विषण्णवदना लुप्तप्रभा दुःखिता
संतोषेण समन्विता भरतभूः श्रुत्वा प्रतिज्ञां तयोः ।
आयातो मम दैन्यनाशसमयोऽद्येत्याशिषः सा ददौ
निर्विघ्नो जनसौख्यदोऽस्तु भवतोः पन्थाः शुभो मङ्गलः ॥ ५४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकागरकरप्रतिज्ञाख्यः पञ्चमस्तरङ्गः ।

## षष्ठस्तरङ्गः

कश्चिद् वास्कोदगामाख्यः पोर्तुगालस्थनाविकः ।
ददर्श जलमार्गेणागत्य भारतवैभवम् ॥ १ ॥

फ्रेंचाङ्ग्लडचराष्ट्रेषु भारतागमनस्पृहा ।
समुत्पन्ना वणिक्सार्थे धनसंचयलोलुपे ॥ २ ॥

शर्कराखण्डमायान्ति यथा दूरात् पिपीलिकाः ।
तथा भारतमायाता यूरोपस्था वणिग्जनाः ॥ ३ ॥

राज्ञ्या आदेशतश्चाङ्ग्लैः स्थापितं मण्डलं महत् ।
वाणिज्यव्यवहाराय भारतीयजनैः सह ॥ ४ ॥

इस्टिण्डियाकम्पनीति नाम्ना यद् विदितं भुवि ।
राज्ञ्याधिकृतमासीत्तत् कर्तुं सन्धिं तथाहवम् ॥ ५ ॥

स्वराज्यस्यात्यये जाता आङ्ग्ला भारतशासकाः ।
अतस्तेषामभूद् राज्यं बाजीरावे पदच्युते ॥ ६ ॥

मुम्बापुरी राजधानी कृता पश्चिमभारते ।
तथा मद्रपुरी ख्याता दक्षिणस्यां विराजिता ॥ ७ ॥

कलकत्तापुरी प्राच्यां राजधानीति निश्चितम् ।
वाणिज्यमाश्रिता नीतिराङ्ग्लानां भारतेऽभवत् ॥ ८ ॥

प्रभुत्ववैभवादीनि केन्द्रितानि पुरीत्रये ।
पुराणराजधान्यस्तु निष्प्रभा विपदाहताः ॥ ९ ॥

ज्योतींषीव विवर्णत्वं प्रापुर्दोषात्यये पुरः ।
स्वराज्यनाशे ताः सर्वाः पुरा हर्म्यैरलङ्कृताः ॥ १० ॥

यथा गतधवा काचिद् दुःखिता त्यक्तभूषणा ।
तथा दुर्दर्शना पुण्यपुरी दीना हतप्रभा ॥ ११ ॥

वैदिकाः शास्त्रिणः सर्वे कलावन्तश्च गायनाः ।
यथा लता विना वृक्षं नाशोभन्त निराश्रिताः ॥ १२ ॥

नवीने राज्यतन्त्रेऽस्मिन् सेवावृत्तिः पुरस्कृता ।
प्रशंसिता वणिग्वृत्तिर्ब्रह्मक्षत्रं तिरोहितम् ॥ १३ ॥

शूद्रत्वेऽभिरता विप्रा आङ्ग्लसेवापरायणाः ।
क्षत्रियाः कृषका जाता वणिजः सुप्रतिष्ठिताः ॥ १४ ॥

कृतत्रेताद्वापरेषु चातुर्वर्ण्यं प्रतिष्ठितम् ।
नन्दक्षये विलुप्तं तत् प्राहुः पौराणिकाः किल ॥ १५ ॥

नन्दान्ताद् म्लेच्छकालान्तं कलावाद्यन्तयोः स्थितिः ।
प्रतिष्ठितौ वणिक्शूद्रावाङ्ग्लकाले च भारते ॥ १६ ॥

विप्राः संस्कारमात्रेण वैश्यशूद्राश्च कर्मणा ।
विप्रत्वं कृशतां यातं यथा ग्रीष्मे नदीजलम् ॥ १७ ॥

ब्रह्मक्षत्रे वैश्यवृत्तिं शूद्रत्वं च समाश्रिते ।
प्रनष्टे वर्णधर्मे च जातिद्वेषः समुत्थितः ॥ १८ ॥

वंशसंघर्षजो वह्निर्भस्मसात् कुरुते वनम् ।
जातिद्वेषप्रदीप्तेन भारतं दग्धमग्निना ॥ १९ ॥

ब्राह्मणानितरे वर्णाः स्पृश्यांश्चास्पृश्यबान्धवाः ।
हिन्दून् माहंमदीयाश्च विद्विषन्त्याततायिनः ॥ २० ॥

न धर्मस्य नियन्तासीत् स्वेच्छाचारी सुशिक्षितः ।
प्रवक्ता नीतिवाक्यानामुपहासपदं गतः ॥ २१ ॥

गतप्रभे स्वधर्मार्के तमोभिरवगुण्ठिता ।
प्राविशद् राष्ट्रमश्रद्धा निशेव भ्रमसंकुला ॥ २२ ॥

कृतं प्रवेशमालोक्य भारतेऽश्रद्धया तदा ।
आयाता उपदेष्टारो यूरोपाद् येशुधर्मिणः ॥ २३ ॥

हिन्दुधर्मविनाशाय खैस्तसंस्थापनाय च ।
प्रादुरासन्नाङ्ग्लराज्ये खिस्तधर्मप्रसारकाः ॥ २४ ॥

विद्यान्नवस्त्रदानेन व्याधिव्यथितसेवया ।
दीनशूद्रादिकान् हिन्दूनाकर्षन् वै प्रचारकाः ॥ २५ ॥

कृत्वा चानुनयं तेषां विविधैर्हि प्रलोभनैः ।
दीक्षां च खिस्तधर्मस्य प्रददुस्ते शनैः शनैः ॥ २६ ॥

कृतधर्मान्तरान् बन्धूञ् शतशोऽथ सहस्रशः ।
विलोक्य चुक्षुभुः सर्वे प्राज्ञाप्राज्ञाश्च हिन्दवः ॥ २७ ॥

वङ्गे विवेकानन्दाख्यो दयानन्दश्च गुर्जरे ।
विष्णुबोवा महाराष्ट्रेऽस्पर्धन्त खिस्तवाग्भटैः ॥ २८ ॥

मॅडम् ब्लवत्स्कीति नाम ब्रह्मविद्याप्रवर्तिनी ।
प्राशंसद् हिन्दुधर्मं सा मुक्तकण्ठं च योगिनी ॥ २९ ॥

वेदोपनिषदां मन्त्राञ् श्रावंश्रावं पलायिताः ।
पिशाचा इव सर्वत्र खिस्तधर्मप्रचारकाः ॥ ३० ॥

धर्मान्तरस्य विघ्नस्य प्रतीकारपरायणाः ।
ब्रह्मार्यप्रार्थनासंज्ञाः समाजास्तत्र निर्मिताः ॥ ३१ ॥

आर्यः समाजः पंजाबे दयानन्दपुरस्कृतः ।
वङ्गे ब्रह्मसमाजस्य राममोहनकेशवौ ॥ ३२ ॥

स्थापयामासतुः पीठं नवचैतन्यदायकम् ।
शिष्यः परमहंसस्य रामकृष्णस्य योगिनः ॥ ३३ ॥

जुघोष हिन्दुधर्मस्य गौरवं धर्मसंसदि ।
शिकागोपत्तने यत्र संहता विश्वधार्मिकाः ॥ ३४ ॥

जिता सा परिषत् तेन विवेकानन्दयोगिना ।
श्रेष्ठत्वं हिन्दुधर्मस्य दर्शयित्वा च नित्यताम् ॥ ३५ ॥

खिस्तधर्मप्रवीणैश्च संन्यासी स महाशयः ।
कृत्वा वादं सभामध्ये विजयं प्राप्तवान् क्षणात् ॥ ३६ ॥

उज्जीविता स्वधर्मस्य निष्ठा व्याख्यानलेखनैः ।
भारते या विलुप्तासीदशेषु ज्ञानवत्सु च ॥ ३७ ॥

समाजो मुम्बईपुर्यां स्थापितः प्रार्थनाह्वयः ।
सत्यधर्मप्रकाशाय विद्वद्भिर्माधवादिभिः ॥ ३८ ॥

ज्ञानस्योपासना तत्त्वं वेदधर्मे प्रशंसितम् ।
न तस्मादधिकं क्वापि कुराणे बायबले तथा ॥ ३९ ॥

श्रद्धेयं भगवद्वाक्यं रणे पार्थाय बोधितम् ।
'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' ॥ ४० ॥

परधर्मप्रहारेभ्यो हिन्दुधर्मः सुरक्षितः ।
भगवद्वाक्यवज्रेण तत्प्रहारा निराकृताः ॥ ४१ ॥

परधर्मप्रतीकारे प्रायस्ते प्राप्नुवन् यशः ।
रूढिधर्मप्रतीकारे ज्ञातारस्ते पराजिताः ॥ ४२ ॥

संघर्षात् कलहो जातो वादश्च कलहात् तथा ।
वादात् तथैव द्वेषाग्नी राष्ट्रैक्यस्य विनाशकः ॥ ४३ ॥

आङ्ग्लराज्यद्रुमस्तेन दृढमूलोऽअसाभवत् ।
जातं दास्यं चिरंजीवि स्वातन्त्र्यं बुद्बुदोपमम् ॥ ४४ ॥

निन्दकास्ते स्वकीयानां परकीयप्रशंसकाः ।
आङ्ग्लैरुपकृताः केचित् प्रचरन्ति सुधारकाः ॥ ४५ ॥

आङ्ग्लानामत्यनिष्टं तच्छासनं दुरतिक्रमम् ।
अतः पराङ्मुखा जाता जनास्तेषां विरोधतः ॥ ४६ ॥

रूढिदोषान् निराकर्तुं समाजापायकारिणः ।
राज्ययन्त्रस्य साहाय्यात् केचिच्छ्रेष्ठाः प्रयेतिरे ॥ ४७ ॥

प्रतिज्ञाप्रच्युतेस्तेषामुक्तिकृत्योरसंगतेः ।
त्यागवृत्तेरभावाच्च प्रलापाच्च निरर्गलात् ॥ ४८ ॥

द्वेष्याः सुधारका जाता लोकेषु स्वैरवर्तनात् ।
धर्मसंस्थाविनिन्दायास्तथाङ्ग्लैश्चाटुभाषणात् ॥ ४९ ॥

आङ्ग्लराज्यप्रभावस्य तेजसा हतदृष्टयः ।
लोकास्तद् मेनिरे तेषां राज्यं विस्मयकारकम् ॥ ५० ॥

येऽतिदूरादिहागत्य जलयानेन केवलम् ।
अप्यल्पाः स्थापयामासुः शासनं भारतेऽखिले ॥ ५१ ॥

दिल्लीपतिं पराभूय महाराष्ट्रस्य भूपतीन् ।
म्लेच्छशीखादिराजांश्च तथा सीमान्तवर्तिनः ॥ ५२ ॥

दृष्ट्वातिमानुषं शौर्यं विज्ञानं चेन्द्रियातिगम् ।
यन्त्रशास्त्रेषु नैपुण्यं पाटवं राजकारणे ॥ ५३ ॥

देवेन प्रेषिता एते कर्तुं भारतशासनम् ।
तद्विरोधो विनाशाय तत्प्रसादः सुखाय च ॥ ५४ ॥

एतद् विचार्य नेतारो भारते प्रान्तवर्तिनः ।
बभूवू राजनिष्ठास्त आङ्ग्लाभ्युदयकाङ्क्षिणः ॥ ५५ ॥

पञ्चविंशतिवर्षान्तं मोहनास्त्रेण मोहिताः ।
तदूर्ध्वं क्रमशो जातं चैतन्यं लोकनेतृषु ॥ ५६ ॥

कालीस्थाने वङ्गदेशे दक्षिणे मद्रपत्तने ।
मुम्बापुर्यां महाराष्ट्रे लोका जाताः सचेतनाः ॥ ५७ ॥

सप्तपञ्चाशदधिके खिस्ताब्देऽष्टादशे शते ।
जातं स्वातन्त्र्यसंप्राप्त्यै सशस्त्रोत्थानमद्भुतम् ॥ ५८ ॥

अभूत् तन्निष्फलं सर्वं ज्ञात्वा चेमं वृथोद्यमम् ।
इति ते वैधमार्गेण यत्नमारेभिरे बुधाः ॥ ५९ ॥

स्थापितं कालिकास्थाने पूर्वभारतमण्डलम् ।
गुणदोषविचारार्थमाङ्ग्लशासनपद्धतेः ॥ ६० ॥

महाजनसभा श्रेष्ठैर्मद्रासे स्थापिता तथा ।
नेतारः स्थापयामासुर्मुम्बापुर्यां स्वमण्डलम् ॥ ६१ ॥

पुण्यपुर्यां सभैकासीत् सुप्रतिष्ठापिता जनैः ।
राजनीतिविमर्शो हि तत्रासीद् विदुषां सदा ॥ ६२ ॥

त्रैमासिकं सभापत्रं विद्वद्वर्यैः प्रशंसितम् ।
सभासंचालका आपुर्गौरवं सर्वभारते ॥ ६३ ॥

आसीत् सभासूत्रधारो रानडेवंशभूषणः ।
न्यायमूर्तिर्माधवोऽसौ विद्यारण्य इवापरः ॥ ६४ ॥

लोकोद्धारेच्छयाप्यन्ये प्रेरिता नरपुंगवाः ।
अत्र नामानि कतिचित् तेषां वक्ष्यामि धीमताम् ॥ ६५ ॥

प्रभूणां यः कृपापात्रं मान्यो नूलकराभिधः ।
सभासदपदं लेभे भारतश्रेष्ठसंसदि ॥ ६६ ॥

नृपसेवानिवृत्तः सन् जनसेवापरोऽभवत् ।
सभा या सार्वजनिका तदध्यक्ष इति श्रुतः ॥ ६७ ॥

देशमूखकुलोत्पन्नो गोपालस्तनयो हरेः ।
यं लोकहितवादीति नाम्ना जानन्ति सज्जनाः ॥ ६८ ॥

निन्दितो द्विजवर्गस्य धर्मो येन स्वलेखने ।
स्तुता आङ्ग्लाश्च तद्राज्यं मुक्तकण्ठं प्रशंसितम् ॥ ६९ ॥

जोतिबाख्यः फुलेवंशी मालाकारकुलोद्भवः ।
स्त्रीशूद्रास्पृश्यवर्गस्य सखाऽमित्रोऽग्रजन्मनाम् ॥ ७० ॥

चिपळूणकरः कृष्णो न्यायसाहित्यपारगः ।
आङ्ग्लविज्ञानसंपन्नः सर्वलोकनमस्कृतः ॥ ७१ ॥

गणेशो वासुदेवस्य सुतो जोशीकुलोद्भवः ।
काकाख्यः सार्वजनिकः 'स्वदेशी'मन्त्रकृदृषिः ॥ ७२ ॥

अण्णा किर्लोस्करो नाट्यशास्त्रज्ञो रसिको द्विजः ।
शाकुन्तलप्रयोगेण लोके यः ख्यातिमाप्तवान् ॥ ७३ ॥

अण्णाख्यो यो भिषग्वर्यः पटवर्धनवंशजः ।
तपस्वी धर्मवृक्षस्य मूलाधार इव स्थितः ॥ ७४ ॥

क्रान्तदर्शी मुनिः पूज्यः परार्थघटकः शुचिः ।
सार्था पुण्यपुरी जाता यस्य पुण्यप्रभावतः ॥ ७५ ॥

पाश्चात्त्यानां कलाविद्यासंप्रदायाभिमानिनः ।
विवादं चक्रिरे नित्यं वेदशास्त्राभिमानिभिः ॥ ७६ ॥

पूर्वापराब्धिसंघर्षगर्जना श्रूयते यथा ।
स दूराद् विश्रुतस्तद्वद् घोषः पुण्यपुरोत्थितः ॥ ७७ ॥

तदासीद् वासुदेवाख्यः शूरो बलवदात्मजः ।
फडकेकुलसंभूतः स्वातन्त्र्योत्थाननायकः ॥ ७८ ॥

सशस्त्रान् संहतीकृत्य वीरः साहसिकान् नरान् ।
अपजह्रे राजकोषं हत्वा कोषस्य रक्षकान् ॥ ७९ ॥

"विश्रामबाग" इत्याख्यः प्रासादः पुण्यपत्तने ।
तथा च "बुधवारा"ख्यो युगपद् भस्मतां गतौ ॥ ८० ॥

तत्कालेऽज्ञातमेवासीदस्यानर्थस्य कारणम् ।
वासुदेवादृते नान्यः कर्तेत्याहुर्जनास्तदा ॥ ८१ ॥

उपप्लवेन संत्रस्ता आङ्ग्लराज्याधिकारिणः।
न्यगृह्णन् तं तदा वीरं सुप्तमेकं निरायुधम् ॥ ८२ ॥

श्रुत्वा तु साक्षिणः सर्वान् वासुदेवोऽस्ति दोषभाक्।
मनुष्यवधकर्तेति न्यायाधीशस्य निर्णयः ॥ ८३ ॥

देहान्त एव दण्डोऽस्य न्यायाधीशेन घोषितः।
सशस्त्रोत्थानकर्तासौ पाशोद्बद्धः कृतस्तदा ॥ ८४ ॥

पाश्चात्त्यज्ञानमुग्धानां चक्षुरुन्मीलनाय वै।
प्रादुर्भूतो विष्णुशास्त्री तनयः कृष्णशास्त्रिणः ॥ ८५ ॥

निबन्धमालया भूमिमर्चयामास मातरम्।
स्वदेशभक्तिं लोकानां जनयामास यो हृदि ॥ ८६ ॥

चिच्छेद शृङ्खलां रौप्यां शास्त्री स्वातन्त्र्यलालसः।
शालायाः शासकीयायाः प्रमुखस्य पदं जहौ ॥ ८७ ॥

पुण्यपत्तनमायातो विष्णुः संत्यज्य कोङ्कणम्।
आस्ते स्म चिन्तयन् कार्यं मनसा किमतः परम् ॥ ८८ ॥

अज्ञानहतबुद्धीनां लोकानां मार्गदर्शनम्।
चिकीर्षोर्मे भवेयुः के सहकार्याभिलाषिणः ॥ ८९ ॥

सुखसंपत्समृद्धीनां मोहं न्यक्कृत्य संमुखाः।
त्यागिनोऽल्पार्थसंतुष्टाः के यास्यन्ति मया सह ॥ ९० ॥

इत्थं विचिन्तयति शास्त्रिणि विष्णुनाम्नि
बुद्धिप्रभावसमवाप्तदिगन्तकीर्तौ।
द्वावश्विनाविव सुदीप्तमतिप्रकाशौ
तं प्रापतुर्विनयशीलधनौ युवानौ ॥ ९१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे पुण्यपुरीपुरुषदर्शनाख्यः षष्ठस्तरङ्गः।

# सप्तमस्तरङ्गः

गोपालः कृतनिश्चयश्च तिलको बालाभिधस्तत्सखा
विद्यापीठपरीक्षयोच्चपदवीं संप्राप्तवन्तावुभौ ।
नत्वा तं पुरतः स्थितौ सविनयं शास्त्री प्रसन्नस्तयो-
रुक्त्वाशीर्वचनं तथा स कुशलं पप्रच्छ तौ संमुदा ॥ १ ॥

त्रयो विद्वद्वर्याः परिषदि विचाराय मिलिता
विरेजुर्धिष्ण्येषु त्रय इव पवित्रा हुतभुजः ।
अपाकर्तुं पापं कुटिलजनतापं च भुवने
समायाता धृत्वा मनुजतनुमुर्वीं समुचिताम् ॥ २ ॥

आहवनीयो बालो गृह्यो विष्णुश्च दक्षिणो वह्निः ।
गोपाल आविरासन् मन्ये ज्वलनाः शरीरिणस्तत्र ॥ ३ ॥

कृत्वा पूर्वं स्वागतं स्निग्धवाचा
शास्त्री शान्तस्तौ युवानौ बभाषे ।
केनोद्देशेनागतौ मत्समीपं
युष्मद्वृत्तं श्रोतुकामोऽस्मि सर्वम् ॥ ४ ॥

श्रोत्रस्था दिक् शास्त्रिणोऽभूत् तृषार्ता
पातुं वक्त्रान्निःसृतां शब्दधाराम् ।
विद्वद्बन्ध्वोः स्वातिबिन्दून् पिपासु-
र्मेघक्षिप्तान् चातको वै यथा स्यात् ॥ ५ ॥

श्रुत्वा प्रश्नं शास्त्रिणस्तौ प्रहृष्टौ
बालो वन्द्यं प्राह तं नम्रवाचा ।
अङ्गुल्या स्वं दर्शयित्वा सखायं
गोपालोऽयं यो गणेशस्य पुत्रः ॥ ६ ॥

बाल्ये पित्रा वियुक्तो यो मात्रा कष्टेन पालितः ।
आगरकरेत्युपाह्वोऽयं कृतविद्यः प्रयत्नतः ॥ ७ ॥

विद्यापीठे कलाज्ञानं बीएपदसमापितम् ।
संप्राप्याध्ययनं तेन कृतमेमेपदाप्तये ॥ ८ ॥

परीक्षानिर्णयस्तस्य न चाद्यापि प्रकाशितः ।
युष्मद्दर्शनलाभार्थं मया सार्धं स आगतः ॥ ९ ॥

स्वातन्त्र्यमधिगन्तुं च विचाराचारयोर्भवान् ।
चिच्छेद शृङ्खलां लोकसेवार्थमिति शुश्रुम ॥ १० ॥

ज्ञानं हि लोकसेवार्थं न द्रव्यार्थं मयार्जितम् ।
इत्येतन्निश्चितं पूर्वं गोपालेन विवेकिना ॥ ११ ॥

सहायस्ते भवामीति मया तस्मै प्रतिश्रुतम् ।
देशसेवाव्रतं शुद्धमावयोः साध्यमायुषः ॥ १२ ॥

सप्तवर्षावधिर्यत्नो भवतां लोकविश्रुतः ।
देशभाषेतिहासानामभिवृद्ध्यै निरन्तरम् ॥ १३ ॥

न सौख्यं न च संमानं लभते परवाञ्जनः ।
अपमानतिरस्कारौ स्वदेशपरदेशयोः ॥ १४ ॥

न प्रतिष्ठितराष्ट्रेषु भारतं स्थानमाप्नुयात् ।
आङ्ग्लैर्यावत् समाक्रान्तं भारते जनजीवनम् ॥ १५ ॥

समादिष्टानि तत्त्वानि लोकानां शिक्षणाय वै ।
लेखैर्निबन्धमालायां भवद्भिर्ज्ञानसागरैः ॥ १६ ॥

प्रेरितास्तरुणाश्चैव सन्ति केचित् सुशिक्षिताः ।
देशाभिमानिनो धीराः स्वार्थत्यागं चिकीर्षवः ॥ १७ ॥

भवतां तेषु यत्नेषु देशोद्धारस्य सर्वथा ।
क्रियमाणेषु साहाय्यं प्रदातुं ते समुत्सुकाः ॥ १८ ॥

कृतश्चेत् कोऽपि संकल्पो देशकार्यस्य भाविनः ।
विज्ञातुं तं समायातौ साहाय्यं कर्तुमेव च ॥ १९ ॥

शिष्यावावां प्रपन्नौ त्वां त्वं गुरुर्देशसेवकः ।
पुरुषत्रयसंघोऽयं वर्धिष्णुः सततं भवेत् ॥ २० ॥

उक्त्वैव तिलकः सम्यग् विरराम स्वभाषणात् ।
संकल्पितां योजनां तां जिज्ञासुर्विष्णुशास्त्रिणः ॥ २१ ॥

बालस्य भाषणस्यान्ते शास्त्री सोत्साहमब्रवीत् ।
श्रोतुमाशयमिच्छामि गोपालस्यापि धीमतः ॥ २२ ॥

मन्येऽहमद्य संप्राप्तिर्युवयोः शुभशंसिनी ।
नैव किंचिदसाध्यं वा दुर्लभं वापि दुष्करम् ॥ २३ ॥

स्वार्थं संत्यज्य तरुणा यदा कार्याय संहताः ।
जयस्तेषां यशस्तेषां कुतस्तेषां पराजयः ॥ २४ ॥

नवे वयस्युदात्तेन कार्येण प्रेरितावुभौ ।
मन्ये वां प्रोच्छ्रितावुच्चैर्देशकार्ययशोध्वजौ ॥ २५ ॥

बालवाक्यं समाकर्ण्य जिज्ञासा मे विवर्धिता ।
उत्सुकोऽस्मि वचः श्रोतुं गोपालस्यापि धीमतः ॥ २६ ॥

आगरकरोऽथ निजगाद मतं मदीयं
मित्रेण मे बलवता विशदीकृतं तत् ।
अस्मद्विचारसरणेर्जननी त्वदीया
माला महोन्नतिविचारसुमप्रफुल्ला ॥ २७ ॥

आङ्ग्लस्य दास्यमतिदुःसहविघ्न एव
शक्तिर्जनेषु न च तत्प्रतिकारयोग्या ।
अज्ञानदैन्यविषमामयदोषतप्ता
रुग्णालयाश्रितजना इव भारतीयाः ॥ २८ ॥

शंसन्ति वर्णमथवा निजजातिमात्रं
विप्रः सदा शुचिरहं त्वपरोऽन्त्यजोऽयम् ।

एवं वदन्ति न कदाचिदपि स्मरन्ति
सर्वे वयं भरतवर्षजनाः सगोत्राः ॥ २९ ॥

वृक्षो महान् शुष्यति कीटकार्तः
शुष्कद्रुमो नैव फलानि धत्ते ।
कीटान् विहन्तुं यतते कृषिज्ञो
युक्तिस्तदीया मम संमतास्ति ॥ ३० ॥

निर्मूलनेन जनताङ्गगतामयानां
वृद्धिं प्रयात्यखिललोकसमाजशक्तिः ।
सा संहतिर्दितिजभञ्जकवज्रसारा
जाड्यापहा सुकृतसाध्यसुखोदया च ॥ ३१ ॥

स्त्रियो देशे सर्वा अनधिगतविद्या नवयुगे
क्षमाः साहाय्ये ताः कथमपि भवेयुर्न विदुषाम् ।
नृणां तत्साहाय्यं युवतिगणदत्तं सुविपुलं
महोद्योगेऽवश्यं विफल इव यत्नस्त्वपरथा ॥ ३२ ॥

अथाज्ञानाद् रूढिप्रखरदलनध्वस्तमतिभा
न पत्नीस्थानीयाः पतिकृतजनाराधनमखे ।
दिवाभीता लीना गृहगततमस्येव सुचिर-
मसूर्यंपश्यत्वादितरजनकार्येषु विमुखाः ॥ ३३ ॥

भूतप्रेतपिशाचानां भीतिस्तेषां हृदि स्थिता ।
मान्त्रिकैर्मन्त्रयन्त्राभ्यामायुस्तेषां नियन्त्रितम् ॥ ३४ ॥

दैवायत्तं मनुष्याणां भाग्यं दुर्भाग्यमेव वा ।
पौरुषस्याल्पमेवास्ति नृणामभ्युदये पदम् ॥ ३५ ॥

मुल्लासिद्धमहन्तानां गोस्वाम्यादिविवाससाम् ।
प्रसादे कृतविश्वासा यतन्ते कार्यसिद्धये ॥ ३६ ॥

अन्धश्रद्धा जना एते नित्यं धूर्तैश्च वञ्चिताः ।
नास्ति तेषामिह स्वार्थो न परार्थः परत्र वा ॥ ३७ ॥

अन्धश्रद्धा जनानां हि भ्रमादेव प्रजायते ।
सर्वलोकभ्रमो येन ज्ञानेनैव निरस्यते ॥ ३८ ॥

लोकानां सुलभावाप्तिस्तज्ज्ञानस्य कथं भवेत् ।
विचारोऽयं चिरं चिन्त्यो देशकार्योत्सुकैर्जनैः ॥ ३९ ॥

बुद्धिरेव शरीरेऽस्मिंश्चित्कला बलशालिनी ।
भ्रमस्योन्मूलनं कृत्वा ज्ञानं सत्त्वं च वर्धयेत् ॥ ४० ॥

'बुद्धौ शरणमन्विच्छ' कृष्णः प्राहार्जुनं प्रति ।
कौटिल्योऽप्यवदद् ज्ञानी बुद्धिर्मागान् ममेति च ॥ ४१ ॥

सुधांशोरमृतं स्वर्गे देवानां सर्वसिद्धिदम् ।
ज्ञानामृतं मनुष्याणां सर्वसिद्धिप्रदं तथा ॥ ४२ ॥

वाग्मी प्रगल्भं सिद्धान्ततर्कयुक्तिसमन्वितम् ।
प्रमाणशुद्धं गोपालो भाषणं स्वं समापयत् ॥ ४३ ॥

निपुणतरुणमित्रप्रोक्तमाकर्ण्य सम्यक्
प्रमुदितमनसा तौ विष्णुशास्त्री तदाह ।
सकलभरतवर्षे स्थापितं राज्यमाङ्ग्लैः
प्रचलितमिह शालाशिक्षणं हेतुपूर्वम् ॥ ४४ ॥

विनिर्मितं तैरिह राज्ययन्त्रं
संचालने तत्र जनाः सहायाः ।
संपादितास्तैः पदवीधरा ये
क्षुद्राधिकारेषु पदेषु लुब्धाः ॥ ४५ ॥

भृत्यान् सहायकान् राज्ये निर्मातुं शिक्षणोद्यमः ।
कृतः शासनतत्त्वज्ञैर्यूरोपादागतैर्नवः ॥ ४६ ॥

भारतस्य परां कीर्तिं भारतस्योज्ज्वलं यशः ।
वर्णयन्ति न लेखेषु परदेशस्थलेखकाः ॥ ४७ ॥

श्रुतिस्मृतिपुराणानां निन्दाप्रचुरवर्णनम् ।
तथा रामायणादीनां सोपहासं विवेचनम् ॥ ४८ ॥

अत्युक्तिः स्यात् प्रशस्तेस्तु ग्रीकरोमनराष्ट्रयोः ।
स्पृहणीयं न वै किंचित् स्मरणीयं च भारते ॥ ४९ ॥

विद्यार्थिनां स्थितिर्भाति स्नुषाणामिव दुःसहा ।
शृण्वतीनां मुखाच्छ्वश्र्वा मातृनिन्दामहर्निशम् ॥ ५० ॥

देशभक्तिविहीनास्ते विद्यापीठे सुशिक्षिताः ।
दृश्यन्ते बहवो नित्यं न तदाश्चर्यकारकम् ॥ ५१ ॥

भौतिकज्ञानशास्त्राणां पाश्चात्त्यैर्विस्तरः कृतः ।
अद्‌भुता तेन संजाता विश्वक्रान्तिर्बलीयसी ॥ ५२ ॥

शास्त्रज्ञानेन सामर्थ्यं तेषां वृद्धिं गतं महत् ।
तज्ज्ञानवर्जिता लोका बहवश्चापि दुर्बलाः ॥ ५३ ॥

संपादितं समग्रं तैर्ज्ञानं भूगोलगर्भयोः ।
अप्तेजोऽनिलभूतानामाकाशस्य च व्यापिनः ॥ ५४ ॥

ज्ञायन्ते शास्त्रतत्त्वानि पाश्चात्त्याध्यापकैरपि ।
न पुनर्विद्यते तज्ज्ञो विद्यापीठेषु भारते ॥ ५५ ॥

छात्रेभ्यो ज्ञानदानं यद् भवत्याङ्ग्लेच्छयाधुना ।
आत्मसात् करणीयं तद् भारतीयैः प्रयत्नतः ॥ ५६ ॥

जननीस्तन्यपानाद् यत् तेजः प्राप्नोति बालकः ।
तद् धात्रीस्तन्यपानेन प्राप्नुयात् स कथं खलु ॥ ५७ ॥

सद्विद्याशीलबुद्धीनां वृद्‌ध्यै युवजनस्य वै ।
नूतनाङ्ग्लोद्यशालात्र स्थापनीयेति मे मतिः ॥ ५८ ॥

प्रयतन्ते परीक्षार्थं छात्रा विद्यालयस्थिताः ।
विद्याप्राप्त्यै शते पञ्च पौरुषायास्ति वा न वा ॥ ५९ ॥

आशिष्ठश्च द्रढिष्ठश्च बलिष्ठश्च भवेद् युवा ।
आचार्येण प्रदातव्यं ज्ञानं तद्धेतुपूर्तये ॥ ६० ॥

निपुणाः शास्त्रविज्ञाने पटवः शास्त्रशोधने ।
देशकार्यधुरीणाश्च जनसेवापरायणाः ॥ ६१ ॥

भवन्तु स्नातका देशे कृतिनो न प्रजल्पिनः ।
विद्यालयसमुद्देशो निर्मितिर्देशसेविनाम् ॥ ६२ ॥

प्रौढाश्चाशिक्षिता देशे प्राय औदरिका जनाः ।
को राजा का प्रजा देशे कः संबन्धस्तयोर्हितः ॥ ६३ ॥

एतत्संबन्धिनी वार्ता तेषां न श्रुतिगोचरा ।
उन्मीलनं च कर्तव्यमज्ञानान्धस्य चक्षुषः ॥ ६४ ॥

वृत्तपत्रं प्रभावि स्यादज्ञानस्य विनाशने ।
वृत्तपत्रं बले तुल्यं शासकैरिति मन्यते ॥ ६५ ॥

शासने वृत्तपत्रं हि चतुर्थं साधनं स्मृतम् ।
प्रातराश इवावश्यमाङ्ग्लानां तस्य वाचनम् ॥ ६६ ॥

वृत्तपत्राज्जनमतं राज्ययन्त्रं तदुद्भवम् ।
प्रजाकार्यं भवेद् राज्याद् वृत्तपत्रप्रचोदितात् ॥ ६७ ॥

वृत्तपत्रं प्रजाहस्ते प्रतोद इव वर्तते ।
कर्तुं दिग्दर्शनं सम्यग् वाजिनां मन्त्रिरूपिणाम् ॥ ६८ ॥

सिंहे गर्जति कानने मृगगणो भीत्याकुलो धावति
विद्युद्गर्जनमम्बुदेषु कुरुते भूम्यां जनान् कातरान् ।

राज्ये मन्त्रिजने स्वकर्मविमुखे सत्पत्रिकागर्जितं
लोकक्षोभविवर्धनं च कुरुते भीतिं प्रजाकोपजाम् ॥ ६९ ॥

पत्रं भाषणसाधनं हि विदुषः पौरस्त्य लोकैः सह
दूरग्रामनिवासिभिः प्रचलितप्रश्नावबोधार्थकम् ।
वाण्यामज्ञजनस्य नित्यसुलभायामेकमेवोत्तमं
प्रेम्णो दुःखसुखानुबन्धिवचनैर्बध्नाति बन्धं दृढम् ॥ ७० ॥

कार्यक्षेत्रे महाराष्ट्रे भाषापत्रोपयुक्तता ।
भारतीयैः सहालाप आङ्ग्लपत्रप्रवर्तनात् ॥ ७१ ॥

इत्थं शास्त्री वर्णयामास वाग्मी
देशोन्नत्यै योजनां विस्तरेण ।
श्रुत्वा सर्वं मित्रयुग्मं बभाषे
सज्जावावां युष्मदुक्तार्थसिद्ध्यै ॥ ७२ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे त्रिमूर्तितत्त्वविचाराख्यः सप्तमस्तरङ्गः ।

## अष्टमस्तरङ्गः

विशालवायुमण्डले प्रियैः सुहृज्जनैर्युतः
सुखेन संचराम्यहं बहिर्गतश्च पञ्जरात् ।
शुको यथा सुमञ्जुवाक् स्वबन्धुभिर्द्रुमस्थितै–
र्नभःप्रदेशमुत्तमं समुत्पतन् मुहुर्मुहुः ॥ १ ॥

स्वानन्दस्यावर्णयत् स्वानुभूतिं
पत्रे भ्रातृप्रेषिते विष्णुरेवम् ।
विद्याशालावृत्तपत्रादिषूत्को
विद्वन्मित्रोत्साहयोगप्रसन्नः ॥ २ ॥

यैशवीये शुभे वर्षे शून्याष्टवसुभूमिते ।
वर्षारम्भदिने विद्यालयस्योद्घाटनं कृतम् ॥ ३ ॥

तिलको विष्णुशास्त्री च तस्य संस्थापकावुभौ ।
शिक्षकैः सह संप्राप्तौ तदानीं सहकारिभिः ॥ ४ ॥

वक्ष्येऽहं शुभनामानि तेषां ये समुपस्थिताः ।
प्रथमेऽहनि निष्णाताश्छात्राध्यापनकर्मणि ॥ ५ ॥

समयज्ञो नामजोशी वासुदेवः खरे तथा ।
नंदर्गीकर इत्याख्यो मुळे मांडे च दामले ॥ ६ ॥

एते सर्वेऽपि शास्त्रज्ञा ज्ञानक्षपितकल्मषाः ।
विद्याव्यसनिनः सर्वे शिष्योत्कर्षाभिलाषिणः ॥ ७ ॥

अष्टौ विद्यालयस्यैते दिक्पाला इव रेजिरे ।
तत्प्रभावात् समाकृष्टा धीमन्तोऽन्ये शनैः शनैः ॥ ८ ॥

एमेपदपरीक्षायां गोपालः प्राप्य वै यशः ।
विद्यालयेऽथ संप्राप शिक्षकासनमुत्तमम् ॥ ९ ॥

वामनो विदुषां श्रेष्ठ आपटेकुलभूषणः ।
मुख्याचार्यपदं प्राप्याध्यापयामास बालकान् ॥ १० ॥

काव्यनाट्याङ्ग्लभाषासु केळ्करोऽभूद् विचक्षणः ।
गोळे पदार्थविज्ञानी चासीच्छिक्षकमण्डले ॥ ११ ॥

विद्यालयं नवीनं तं प्रविष्टा हर्षनिर्भराः ।
बापटाम्डेकरौ जोशीरानडेधारपादयः ॥ १२ ॥

विद्याशीलधनाः सर्वे शिष्याध्यापनतत्पराः ।
विद्यालये ह्यलंचक्रुर्गुरुवेत्रचतुष्पदीः ॥ १३ ॥

मालाकारस्य कौशल्याद् दाक्षिण्यादनुवर्तिनाम् ।
यथा पुष्पैः समुत्फुल्लमुद्यानमचिराद् भवेत् ॥ १४ ॥

छात्रैस्तद् बहुभिः पूर्णं नानावेषधरैस्तथा ।
ववृधे चाल्पकालेन नवविद्यानिकेतनम् ॥ १५ ॥

उद्घाटनदिने छात्राः शतं पञ्चाशताधिकम् ।
वर्षान्ते गणना तेषां त्रिशतं त्रिंशदुत्तरम् ॥ १६ ॥

तुर्यसंवत्सरारम्भे सहस्रं च नवाधिकम् ।
भूमितिश्रेणिपद्धत्या जातं संख्याविवर्धनम् ॥ १७ ॥

विद्यालययशोगन्धो ववौ दूरं सुखप्रदः ।
वृक्षस्य पुष्पितस्यैव छात्रचित्तप्रलोभनः ॥ १८ ॥

विद्यापीठं विविक्षूणां परीक्षाया विनिर्णये ।
नूतनाङ्ग्लोच्चशालेयं पदं लेभे महोन्नतम् ॥ १९ ॥

एतद्विद्यालयच्छात्रः संप्राप स्थानमादिमम् ।
शिष्यवृत्तिं जगन्नाथशंकरश्रेष्ठिनामिकाम् ॥ २० ॥

प्रतिवर्षं यशः प्राप्तमेवं पञ्च समास्ततः ।
अव्याहतं शिक्षकाणामाहतः कीर्तिदुन्दुभिः ॥ २१ ॥

एतद्विद्यालयोत्कर्षो जातः संतापदायकः ।
पूर्वशालाध्यापकानां नूतनसंस्थाभ्यसूयिनाम् ॥ २२ ॥

विद्यालयेतिवृत्ते स्वे ते कुण्टेमोडकादयः ।
निनिन्दुर्नवसंस्थायाश्चालकान् सुदुरुक्तिभिः ॥ २३ ॥

एते चानुभवैर्हीना युवकाः स्वप्नदर्शिनः ।
ध्रुवं तेषामधःपातो वह्निसंतप्तदुग्धवत् ॥ २४ ॥

शासकीयप्रशालायाः प्रधानाध्यापकोऽब्रवीत् ।
तरुणानां मनोराज्यं भङ्गुरं स्वप्नराज्यवत् ॥ २५ ॥

वर्षासु जलपूर्णं यत् सरः शुष्येद् यथातपे ।
नश्येदियं नूतनशाला प्रमुखो मोडकोऽब्रवीत् ॥ २६ ॥

दुरुक्तिखण्डनं तेषां स्वीकृतस्य च मण्डनम् ।
व्याख्याने शास्त्रिणाकारि मेघगम्भीरया गिरा ॥ २७ ॥

न जातु काकशापेन धेनुः कालवशा भवेत् ।
उपेक्षणीयमेवैतत् कुत्सितं वृद्धभाषितम् ॥ २८ ॥

वृद्धस्य चरितं चिन्त्यं लवेनोक्तमिदं पुरा ।
नाक्रोशात् सारमेयाणां विजहाति पथं गजः ॥ २९ ॥

सहकार्येण शिष्टानामिष्टप्रोत्साहनेन च ।
शिक्षकाणां च यत्नेन विद्यालयमवर्धत ॥ ३० ॥

ते सर्वे धन्यवादार्हाः सर्वे श्रेयोविभागिनः ।
अधीतमासीत् तेजस्वि गुरुशिष्यैक्यबन्धनात् ॥ ३१ ॥

उवाह स्कन्धयोः शास्त्री धुराभारमतन्द्रितः ।
विद्यालयस्य सततं वर्षमेकायनाधिकम् ॥ ३२ ॥

परीक्षोच्चपदप्राप्ताश्छात्रा वर्षचतुष्टये ।
शिष्यवृत्तिप्रदानेन विद्यापीठेन सत्कृताः ॥ ३३ ॥

नामानि शिष्यवर्याणां वक्ष्येऽहं सुयशस्विनाम् ।
आसीद् भास्करनामैको जोशीवंशसमुद्भवः ॥ ३४ ॥

अतैकुलोद्भवश्चान्यो भास्करः प्रियसंस्कृतः ।
परांजपेकुलोत्पन्नः शिवरामश्च वाक्पतिः ॥ ३५ ॥

स्वातन्त्र्योपासकः पूज्यः "काळ" पत्रस्य चालकः ।
तिलकख्यातमित्रेषु शुशुभे यः स्वतेजसा ॥ ३६ ॥

शुवैकः पानसेवंश्यः सुबुद्धश्चापरान्तिकः ।
चरिते तिलकस्यामी नरसिंहेन वर्णिताः ॥ ३७ ॥

वार्षिकासु परीक्षासु समालोक्योत्तमं यशः ।
तेलंगमंडलीकाभ्यां कार्यमेतत् प्रशंसितम् ॥ ३८ ॥

रानडेरामकृष्णाभ्यामाशीर्वच उदीरितम् ।
पाश्चात्त्यैः शिक्षणज्ञैश्च स्वसंतोषः प्रदर्शितः ॥ ३९ ॥

प्रान्ताधिपतिना चापि कृतं शालाभिनन्दनम् ।
नष्टोऽसंतुष्टदुःशब्दः सुयशोदुन्दुभिध्वनौ ॥ ४० ॥

तिलकागर्कराभ्यां च वर्षानन्तरमेव वै ।
मराठाकेसरीसंज्ञे वृत्तपत्रे प्रवर्तिते ॥ ४१ ॥

लोकप्रीतिसमीरेण ग्राहका वर्धितास्तयोः ।
शीघ्रं यथा समिद्धोऽग्निः कानने वायुनेरितः ॥ ४२ ॥

विक्रयायाथ ग्रन्थानामापणश्च विनिर्मितः ।
नाम्ना किताबखानेति प्रसिद्धः पुण्यपत्तने ॥ ४३ ॥

शिक्षको दामलेवंश्य आसीत् तस्य निरीक्षकः ।
मन्दिरं मुद्रणस्यैकमार्यभूषणनामकम् ॥ ४४ ॥

सोहनिः स्थापयापास मयूरेश्वरसद्मनि ।
पत्रोत्पत्तेर्गतः कालो वर्षं मासत्रयाधिकम् ॥ ४५ ॥

पटुरासीद् नामजोशी व्याख्याने लेखने तथा ।
चालयामास सूत्राणि संस्थानां बुद्धिकौशलात् ॥ ४६ ॥

हिंदीगुर्जरवङ्गेषु कर्णाटकविदर्भयोः ।
मराठाकेसरीलेखाः पठिता बहुभिर्जनैः ॥ ४७ ॥

सत्कार्यामृतपूर्णकुम्भनिकटे प्रेम्णा स्थिताः सज्जनाः
पीत्वा कुम्भगतां सुधां प्रतिदिनं कर्तव्यमार्गे स्थिताः ।
हन्त क्रूरयमोऽनयत् स्वनिलयं विष्णुं पुणेभूषणं
बिन्दुः संपतितो विषस्य सहसा मन्ये सुधाया घटे ॥ ४८ ॥

गतोऽस्माकं नेता व्यथितमनसेत्याह सुजनो
हहाद्यास्तं यातो रविरखिलविद्यांशुनिकरः ।
मराठ्याः शीवाजिर्मृत इति जना ऊचुरपरे
ध्वजो यातोऽधोऽयं नगररुचिरो विष्णुनिधनात् ॥ ४९ ॥

ओङ्कारेश्वरतीरमेव शयनस्थानं जनस्यान्तिमं
पुण्यग्राममृतस्य निश्चितमिति प्राप्ताजनास्तत् स्थलम् ।
मन्ये दर्शयितुं च नेतृविषयं शुद्धादरं दुःखिताः
पुत्रस्यान्तमुखावलोकनधिया प्राप्तेव पूर्विह्वला ॥ ५० ॥

अग्नयेऽर्पित एव कलेवरे
गुणगणान् सुजनः प्रशशंस ।
खिन्नशिक्षकसंघपुरस्कृतो
दुःखितः स्वगृहं च जनो ययौ ॥ ५१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे शालोत्कर्षविष्णुनिधनाख्योऽष्टमस्तरङ्गः ।

## नवमस्तरङ्गः

दुःखं यस्य पदाङ्गुल्यां स्खलिते च पदे पुनः ।
पूर्वदुःखमयस्थाने नवदुःखं प्रवर्तते ॥ १ ॥

विष्णोर्विरहसंतप्ता विद्यामन्दिरचालकाः ।
आहता नितरां तावदापदा घोरयान्यया ॥ २ ॥

मोगलद्विपसिंहस्य शिवछत्रपतेः प्रभोः ।
पुत्रौ हि द्वौ तयोर्ज्यायान् संभाजिः क्रूरकर्मणा ॥ ३ ॥

औरंगजेबेन निहतो नीतः पौत्रश्च बन्धनम् ।
राजारामो द्वितीयोऽभूद् रक्षितोऽसौ धनाजिना ॥ ४ ॥

जिंजीदुर्गे दक्षिणस्यां तथैव शिवसैनिकैः ।
वर्षाणि विंशतिं यावद् युद्धं घोरमभूत् किल ॥ ५ ॥

मराठामोगलानां च भीषणं रोमहर्षणम् ।
पापी गतोऽवरंगोऽस्तं स्वजनैश्च तिरस्कृतः ॥ ६ ॥

औरंगसूनुना शाहुर्दारोहानाम्नि खेटके ।
स्वभगिन्याग्रहात् प्रीत्या मोचितो बन्धनात् तदा ॥ ७ ॥

संप्रतस्थे ततः शाहुर्बहुभिः सादिभिर्वृतः ।
गत्वा नगरमार्गेण साताराद्रुर्गमाविशत् ॥ ८ ॥

शाहोरागमनात् सर्वे जना हर्षेण निर्भराः ।
मेनिरे तं स्वदेशस्य राजानं लोकनायकाः ॥ ९ ॥

राज्याभिषेकसंस्कारः कृतस्तत्र यथाविधि ॥
डिण्डिमैर्जज्ञिरे लोका अभिषेकस्य घोषणाम् ॥ १० ॥

करवीरे समायाता राजारामस्य वंशजाः ।
राज्यं च स्थापयामासुस्तत्र तेऽपि द्वितीयकम् ॥ ११ ॥

न सौहार्दं कदाप्यासीदेतयो राज्ययोर्द्वयोः ।
अनर्थस्यैव बीजं तच्च शिवराज्यविभाजनम् ॥ १२ ॥

सातारानागपूरादिराज्यानामाङ्ग्लशासने ।
अपहारः कृतो दालहौसिना भूपिपासुना ॥ १३ ॥

करवीरस्य राज्यस्य शिववंशसमुद्भवः ।
आसीद् राजेति लोकानां हृदये परमादरः ॥ १४ ॥

राजाराममहाराजः करवीरस्य भूपतिः ।
यूरोपखण्डयात्रायां संचरन्निटलीं गतः ॥ १५ ॥

फ्लॉरेन्सनगरे राज्ञस्तनूरस्वस्थतां गता ।
तत्रैव मृत्युमापन्नः कस्मिंश्चिद् रुग्णमन्दिरे ॥ १६ ॥

तत्पश्चाद् दत्तको बालः शिवाजी नाम धारयन् ।
सार्वभौमाङ्ग्लसंमत्या करवीरनृपोऽभवत् ॥ १७ ॥

संस्थानहितरक्षार्थं प्रजायाः शासनाय च ।
आज्ञया सार्वभौमस्य नवयन्त्रं विनिर्मितम् ॥ १८ ॥

संचालनाय कार्यस्य संस्थानस्य दिने दिने ।
अमात्यः प्रमुखस्त्वासीत् सार्वभौमनियोजितः ॥ १९ ॥

शिष्टानां समितिश्चैका प्राज्ञानां चोपकारिका ।
संस्थानस्य च कार्याणां विचारार्थं विनिर्मिता ॥ २० ॥

आसीदुत्तरदायित्वं प्रधानेऽधिष्ठितं स्थिरम् ।
शासनोत्कर्षयोरस्य संस्थानस्य विशेषतः ॥ २१ ॥

शासनस्य समीक्षार्थं कर्तुं च पथदर्शनम् ।
नियोजितः प्रतिनिधिः सार्वभौमेन तत्परः ॥ २२ ॥

प्रधानपदवीं प्राप्तो बर्वेवंशीयमाधवः ।
राज्यसूत्रं दधारैको दीर्घकालं निरङ्कुशः ॥ २३ ॥

अपवादाः प्रतीकूला जनेषु बहवः श्रुताः ।
संस्थानवञ्चको ह्येष न जातु हितचिन्तकः ॥ २४ ॥

यतः कलाविलासार्हहर्म्याणां तेन सर्वदा ।
अधिकारालयानां च निर्माणे व्ययितं धनम् ॥ २५ ॥

जाता गङ्गाजली तेन रिक्ताकण्ठपरिप्लुता ।
द्रव्येण संगृहीतेन दक्षैः पूर्वनरेश्वरैः ॥ २६ ॥

आरोग्यं बालभूपस्य जातमेव प्रदूषितम् ।
बुद्धिस्थैर्यमभूल्लुप्तं प्रवृद्धश्च मतिभ्रमः ॥ २७ ॥

स्वप्नावबोधयोस्तस्य तथाहारविहारयोः ।
कृतं नियन्त्रणं तज्ज्ञैर्हेयोपादेययोरपि ॥ २८ ॥

आप्तानां भाषणं तद्वद् दर्शनं दुर्लभं कृतम् ।
उद्धता गौरकायाश्च सेवाकर्मसु योजिताः ॥ २९ ॥

राधाबाई प्रसूस्तस्य कालिकानगरं गता ।
आङ्ग्लराज्ञीप्रतिनिधिं संप्राथ्यार्ब्रूत वत्सला ॥ ३० ॥

राजा ममौरसः पुत्रस्तच्छुश्रूषां करोम्यहम् ।
स्वजनेभ्योऽपकृष्टस्य तेभ्यो दूरस्थितस्य च ॥ ३१ ॥

जीवनं दुःसहं मन्ये मम पुत्रस्य संप्रति ॥
दयां न्यायं च याचेऽहं मह्यं पुत्रः प्रदीयताम् ॥ ३२ ॥

कथं माता वसेद् दूरं व्याधिग्रस्तसुतात् प्रभो ।
अन्तं कुरु वियोगस्य संयोगं धेनुवत्सयोः ॥ ३३ ॥

श्रुत्वा तां प्रार्थनां मातुः पाषाणस्यापि भेदिनीम् ॥
ददौ प्रतिनिधिर्लार्डो नकारं भारतस्थितः ॥ ३४ ॥

न शक्नुमस्त्वदायत्तं कर्तुं पुत्रं तवाधुना ।
यतन्ते भिषजो राज्ञो मनोव्याधिशमाय हि ॥ ३५ ॥

भग्नाशा राजमाता तु प्रत्यागत्य रुरोद सा ।
लोकक्षोभोऽभवत् तीव्रो दृष्ट्वा तामश्रुलोचनाम् ॥ ३६ ॥

उपद्रवः प्रधानस्य राजरोगस्य कारणम् ।
दयाशून्या जनाः सर्वे राजरक्षणकारिणः ॥ ३७ ॥

अपमानास्पदं तेषां वर्तनं क्षोभकारकम् ।
उन्मत्ताः कलहायन्ते राज्ञा सह नराधमाः ॥ ३८ ॥

अधिकारपदासक्तैरिदं कपटनाटकम् ।
रचितं मन्त्रिभिर्धूर्तैः शङ्किता नृपबान्धवाः ॥ ३९ ॥

पद्मकोशस्थभृङ्गस्य दुर्दशां प्राप्तवान् नृपः ।
आशानिराशाद्वन्द्वेन हतबुद्धिर्बभूव सः ॥ ४० ॥

रात्रिर्गमिष्यति तु बालदशात्यये मे
प्रौढस्थिते मयि हसिष्यति सुप्रभातम् ।
इत्थं विचिन्तयति बन्धगते नृपाले
प्रज्ञैव तस्य विधिवक्रतया विनष्टा ॥ ४१ ॥

महाराष्ट्रेषु सर्वत्र वृत्तपत्रेषु चर्चितम् ।
कोल्हापूरप्रकरणं जनक्षोभस्य वर्धनम् ॥ ४२ ॥

पुण्यपुर्यां मुद्रितेषु वृत्तपत्रेषु लेखकैः ।
बर्वेमहाशयस्तीक्ष्णैर्वाग्बाणैः संप्रताडितः ॥ ४३ ॥

सप्ततारपुणेमुम्बावृत्तपत्रेषु दुःसहा ।
लेखेषु च कृता निन्दा बर्वेकीर्तिविघातिनी ॥ ४४ ॥

ज्येष्ठो ज्ञानप्रकाशश्च पुणेपूर्वं च वैभवम् ।
आङ्ग्लभाषी मराठाख्यो यविष्ठः केसरी नवः ॥ ४५ ॥

एतानि पुण्यनगरे वृत्तपत्राणि सर्वथा ।
करवीरप्रधानस्य प्रतिकूलानि लेखने ॥ ४६ ॥

मराठाकेसरीज्ञानप्रकाशादिषु कानिचित् ।
प्रकाशितानि पत्राणि वर्वेविलिखितानि च ॥ ४७ ॥

करवीरे भिडेनामा प्रवादी सुप्रतिष्ठितः ।
राजमात्राधिकारेण प्रेषितः पुण्यपत्तनम् ॥ ४८ ॥

उपन्यासोऽभवत् तस्य प्रसिद्धे नाट्यमन्दिरे ।
तदा देशमुखोऽध्यक्षो गोपालस्तनयो हरेः ॥ ४९ ॥

तन्मुखेन श्रुतं सर्वं यद् वर्वेचेष्टितं जनैः ।
राज्ञश्च दुःखदं वृत्तं पुण्यपत्तनवासिभिः ॥ ५० ॥

यथा धावति दावाग्नितप्तो ह्यारण्यको मृगः ।
वनाद् वहिः स्थितं देशं प्राणत्राणपरायणः ॥ ५१ ॥

संतप्तो मर्मविद्धश्च वृत्तपत्रादिलेखनैः ।
माधवो लोकनिन्दाभिः करवीराद् बहिर्ययौ ॥ ५२ ॥

माधवो जर्जरीभूतः प्रतिकूलजनोक्तिभिः ।
प्रतिकर्तुं कृतस्तेन न्यायालयसमाश्रयः ॥ ५३ ॥

वेबाख्यो मुंबईद्वीपे प्रदेशन्यायशासकः ।
माधवेन पुरस्तस्य प्रार्थनापत्रमर्पितम् ॥ ५४ ॥

स्वनिर्वेदकथायुक्तं वादकारणदर्शकम् ।
दोषभाजः पञ्च कृत्वा नामकर्मविवर्णितान् ॥ ५५ ॥

मराठापत्रलेखेन तिलको दोषभाक् कृतः ।
केसरीपत्रलेखेन तिलकागरकरावुभौ ॥ ५६ ॥

ज्ञानप्रकाशे लेखेन रानडे दोषभाक् कृतः ।
भिडे च बखले च स्तः प्रेरितावेकहेतुना ॥ ५७ ॥

एकस्मिन् न्यायकार्ये च दोषभाजौ प्रकल्पितौ ।
वेबो विवाद्याक्षेपाणां कृत्वा पूर्वपरीक्षणम् ॥ ५८ ॥

विचार्य साक्षिकथनं दण्डशास्त्रज्ञभावितम् ।
चतुर्षु तेषु कार्येषु दोषभाजः समादिशत् ॥ ५९ ॥

यथान्यायं निर्णयार्थमुच्चन्यायासनालयम् ।
गन्तव्यं साक्षिभिः सार्धं निर्दोषित्वस्य सिद्धये ॥ ६० ॥

उच्चन्यायासनात् काल आगमिष्यति सूचना ।
दिनाङ्कस्य च कालस्य दोषभाजामुपस्थितेः ॥ ६१ ॥

लाथमाख्यस्तदा चासीदुच्चन्यायासनप्रभुः ।
चतुर्णां न्यायकार्याणां ददौ श्रवणतारिकाः ॥ ६२ ॥

भिडेबखलयोः कार्यं न्यायपंचैः सह श्रुतम् ।
तथा वामनरावस्य 'प्रकाश'स्य प्रकाशिनः ॥ ६३ ॥

विख्यातो दण्डशास्त्रज्ञः प्रार्थितश्चेन्व्हरारिटिः ।
मेथाब्रानसनावास्ताम् दोषभाजां प्रवादिनौ ॥ ६४ ॥

एतेषु त्रिषु कार्येषु न्यायपंचा मतं ददुः ।
एकमेव, त्रयोऽप्येत आसन्नन्यायकारिणः ॥ ६५ ॥

अभिज्ञाय मतं तेषां तिलकस्य हितैषिणः ।
रात्रौ तं साग्रहं प्रोचुः क्षमापत्रं प्रदीयताम् ॥ ६६ ॥

तद्धि स्वीकृत्य सदयो माधवः कुरुते क्षमाम् ।
शुभं समाचरेच्छीघ्रं विलम्बो हानिकारकः ॥ ६७ ॥

प्रकाशितानि पत्राणि माधवस्येति पत्रके ।
न्यायपंचमते तान्यसत्यानि कृत्रिमाणि च ॥ ६८ ॥

मराठाकेसरीलेखा निराधाराश्च सर्वथा ।
आघाताः प्रस्तरे शीर्ष्णो व्यथाया वर्धनाय हि ॥ ६९ ॥

न्यायप्रविष्टपत्राणि वृत्तपत्रप्रकाशनात् ।
पूर्वं प्रदर्शितान्यासन् नैकेभ्यश्च तदा खलु ॥ ७० ॥

समीक्षितानि पत्राणि माधवेन विवेकिना ।
फाटको दृष्टवान् तानि गोपालो न्यायमण्डनः ॥ ७१ ॥

विश्वासार्हाणि दृश्यन्ते पत्राणीति तयोर्मतम् ।
प्रदर्शितं तदा ताभ्यां तिलकेऽन्यजनेषु च ॥ ७२ ॥

साक्षी भूत्वा वदिष्यामि नैतन्न्यायासनालये ।
स्वाभिप्रायस्तु सर्वेभ्यो माधवेन निवेदितः ॥ ७३ ॥

अनुकम्प्या स्थितिर्भाति माधवस्य महात्मनः ।
चिकीर्षोर्युगपत् सेवां राज्ञो जनपदस्य च ॥ ७४ ॥

संग्रहे तिलकस्यासन् पत्राण्यन्यानि कानिचित् ।
प्राप्तानि मित्रद्वारेण सुप्रसिद्धाद् महाजनात् ॥ ७५ ॥

उभयोरथ मित्रेण तिलकः प्रार्थितो निशि ।
प्रमाणार्थं न देयानि पत्राणि न्यायमन्दिरे ॥ ७६ ॥

महाजनं स्वमित्रं च कर्तुं निश्चिन्तमेव सः ।
ददाह सर्वपत्राणि मध्यरात्रेरनन्तरम् ॥ ७७ ॥

वर्वेयशःपटस्थूलकलङ्कक्षालनाय च ।
क्षमापत्रं लिलिखतुस्तिलकागर्करावुभौ ॥ ७८ ॥

मराठाकेसरीमध्ये मुद्रितः पत्रसंग्रहः ।
तवेति दृढविश्वासान्निन्दालेखाः प्रकाशिताः ॥ ७९ ॥

पत्राणि न त्वदीयानि कृत्रिमाणीति निर्णयः ।
न्यायालयेऽधुना जातो वयं तस्मात् सुदुःखिताः ॥ ८० ॥

अविश्वास्येषु विश्वस्य निन्दालेखप्रकाशकैः ।
अस्माभिस्त्वयि निर्दोषे कृतोऽन्यायो वृथाधुना ॥ ८१ ॥

अस्मत्कृत्येन युष्माकं यद् दुःखमभवद् महत् ।
दुःखिताः स्मो वयं तेन ह्येतदस्मन्निवेदनम् ॥ ८२ ॥

निरपेक्षा वयं चास्मिन् स्वतन्त्रोऽसि स्वनिर्णये ।
त्वन्निर्णयो न चास्माकं कारणं रोषदोषयोः ॥ ८३ ॥

एवं बर्वेकरे पत्रं तिलकेन समर्पितम् ।
कर्तव्यमिति मत्वा तत् फलाशारहितं कृतम् ॥ ८४ ॥

लाथमो जुलईमासे दिने पञ्चदशे ततः ।
तिलकस्य न्यायकार्यं शुश्राव न्यायमन्दिरे ॥ ८५ ॥

निरर्थकं क्षमापत्रमिन्व्हरारिटिरब्रवीत् ।
प्रार्थी पत्रेण तुष्टो न न्यायनिर्णयमिच्छति ॥ ८६ ॥

साक्षिणां कथने पूर्णे जाते चोभयपक्षयोः ।
तेलंगः कृतवान् युक्त्या तिलकस्य समर्थनम् ॥ ८७ ॥

तस्य प्रत्युत्तरं दत्तमिन्व्हरारिटिनाञ्जसा ।
साक्षिवाक्यसमारोपः कृतो न्यायाधिकारिणा ॥ ८८ ॥

लाथमो न्यायतत्त्वानां कृत्वा सूक्ष्मं विवेचनम् ।
मतप्रदर्शनं कार्यं पंचैरेतैरुवाच सः ॥ ८९ ॥

मतैक्यमभवत् तेषां दोषिदोषविनिश्चये ।
तिलकेन कृतो दोषः प्रार्थिकीर्तिविनाशकः ॥ ९० ॥

केसरीन्यायकार्येऽपि तदा पंचैर्विनिर्णयः ।
संप्रदत्तोऽविलम्बेन तद्दिने न्यायमन्दिरे ॥ ९१ ॥

वासराङ्के सप्तदशे जुलैमासस्य “ संमतम् ।
एतत्पंचमतं मेऽस्ति ” न्यायाधीशोऽब्रवीदिति ॥ ९२ ॥

जगाद निर्णयं पश्चाद् दण्डं चाधोऽनुवर्णितम् ।
पञ्चभ्यो दोषकर्तृभ्यो घोरं च क्षोभकारकम् ॥ ९३ ॥

बालगोपालयोरेवं बखलेसंज्ञकस्य च ।
कारावासश्चतुर्मासः प्रोक्तः श्रमविवर्जितः ॥ ९४ ॥

भिडेरानडयोश्चापि कारावासो द्विवर्षकः ।
सहस्रं रूप्यका दण्डश्चेति न्यायस्य निर्णयः ॥ ९५ ॥

प्रार्थिने तद् धनं देयं तस्य दुःखप्रशान्तये ।
इत्यादिशत् सूक्ष्मदर्शी लाथमो न्यायनिष्ठुरः ॥ ९६ ॥

तिलकागर्करौ नीतौ कारां डोंगरिसंज्ञिताम् ।
दुराचरणशीलानां या दण्डाय विनिर्मिता ॥ ९७ ॥

दिनान्येकाधिकशतं तौ स्थित्वा बन्धनालये ।
विनिर्मुक्तौ तदा चक्रुर्जनाः स्वागतमुत्तमम् ॥ ९८ ॥

मुम्बापुर्यां च लोखण्डेयन्देप्रभृतिसज्जनाः ।
अन्ये च श्रेष्ठिनश्चक्रुः संमानं देशभक्तयोः ॥ ९९ ॥

स्थानके स्थानके लोकास्तावग्निरथसंस्थितौ ।
पुष्पमालार्पणं चक्रुर्भक्त्या प्रेम्णा समागताः ॥ १०० ॥

स्थानके तौ पुणेपुर्यामवतीर्य नमस्कृतिम् ।
चक्रतुः पुरवासिभ्यः संप्राप्ताः स्वागताय ये ॥ १०१ ॥

गीतवादित्रघोषेण पुष्पमालार्पणेन च ।
मार्गेष्वपूजयन् पौराः समारूढौ नवं रथम् ॥ १०२ ॥

प्रातश्चिपळूणकरस्थाने लोकैस्तदभिनन्दनम् ।
कृतं मोरेश्वरगृहे सायं लोकसभादिभिः ॥ १०३ ॥

अयं कारावासस्तिलकचरिते यश्चविपुले
स्फुलिङ्गः संभूतः शिवकुलनृपोपद्रवविधेः ।
स एव श्रौताग्निर्यजनमकरोत् तस्य तिलक-
स्तदा चातुर्मास्ये निजरुधिरदानेन ससखः ॥ १०४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे काराबन्धनं नाम नवमस्तरङ्गः ।

# दशमस्तरङ्गः

छिद्रेष्वनर्था बहुलीभवन्ति
शिष्यं गुरुः प्राह हितोपदेशे ।
नवाङ्ग्लविद्यालयचालकानां
तस्यानुभूतिर्विषदुःसहासीत् ॥ १ ॥

विष्णोर्वियोगस्य न यावदन्तो
दुःखं नवीनं समुपस्थितं तु ।
स्वज्येष्ठयोर्बन्धनसद्मवासा-
दध्यापकाः शोकसमुद्रमग्नाः ॥ २ ॥

अकल्पिताघातजशक्तिहीनता
विलोपिता विश्वविवेकचिन्तनात् ।
तरुर्यथा छिन्न इवाशु वर्धते
विद्यालयोऽसौ प्रगतेः पथि स्थितः ॥ ३ ॥

श्रीवामनो शिक्षणधूर्वहोऽसौ
प्राध्यापयच्छात्रगणं प्रवीणः ।
अव्याहता नेतृवियोगकाले
विद्यालयस्योन्नतिरेव जाता ॥ ४ ॥

तद्वृत्तपत्रयुग्मस्य चक्रिरे लेखनं त्रयः ।
वामनश्चापटेवंश्यो नामजोशी च माधवः ॥ ५ ॥

केळकरो वासुदेवश्च सर्वेऽप्युत्तमलेखकाः ।
वृद्धिर्ग्राहकवर्गस्य जाता संतोषकारिणी ॥ ६ ॥

कारावासाद् विनिर्मुक्तः केसरीपत्रचालकः ।
गोपालो भूषयामास पुनः संपादकासनम् ॥ ७ ॥

भूषितं वासुदेवेन मराठालेखकासनम् ।
महाविद्यालयोत्पत्तौ तिलकश्चित्तमादधे ॥ ८ ॥

मराठाक्षिप्तलेखानां लेखको वामनः स्वयम् ।
संपादकस्तु तिलको यथाविधि निदर्शितः ॥ ९ ॥

अलिखद् वामनो यत् तत् सर्वं तिलकसंमतम् ।
एकमेव बलिं प्रार्थी न्यायदेव्यै समार्पयत् ॥ १० ॥

कारावासाद् विनिर्मुक्ते तिलके वामनोऽवदत् ।
नेच्छाम्यतः परं कर्तुं वृत्तपत्रस्य लेखनम् ॥ ११ ॥

नित्यमध्यापने दक्षो विद्यामन्दिरधूर्वहः ।
जातो विद्यालयोत्कर्षस्तस्मिञ्छासति वामने ॥ १२ ॥

निर्मातुं तिलकस्त्वैच्छद् महाविद्यालयं नवम् ।
शासितं भारतीयैर्यदुच्चज्ञानप्रदायकम् ॥ १३ ॥

एककालसमुत्पन्नं तिलकस्य हृदि द्वयम् ।
कार्यं च लोकशिक्षाया ज्ञानसत्रविनिर्मितिः ॥ १४ ॥

बालगोपालयोः क्लेशः कारागारे महानभूत् ।
गोपालेन कृतं तस्य वर्णनं च सविस्तरम् ॥ १५ ॥

डोंगरीबन्धनागारदिनचर्यानिरूपणम् ।
पुस्तके तु कृतं यत् तद् मनःसंतापदायकम् ॥ १६ ॥

कृमिमत्कुणकीटानां बाहुल्यं बन्धनालये ।
निद्राभङ्गस्ततो रात्रौ कदन्नस्य च भक्षणम् ॥ १७ ॥

कारायां यातनाभिश्च तद्देहौ कृशतां गतौ ।
अस्थिपञ्जरशेषौ तावायातौ बन्धनाद् बहिः ॥ १८ ॥

जातावाबालवृद्धानां देशे तौ गौरवास्पदम् ।
देहदण्डः परार्थो हि वीराणां कीर्तिवर्धनः ॥ १९ ॥

प्रापुः सहायकाञ् शिष्टान् विद्यालयविनिर्मितौ ।
प्रान्ताधीशादिकाञ् श्रेष्ठाञ् जनांश्च तिलकादयः ॥ २० ॥

संस्थानिकाश्च धनिकाः पाश्चात्त्याध्यापका अपि ।
तथाधिकारिणश्चापि साह्यं कर्तुं समुत्सुकाः ॥ २१ ॥

वेडर्बर्नः सखा सुज्ञः प्रियकृद् भारतस्य सः ।
हिन्दसौजन्यसेवायाः सदस्योऽपि जनस्तुतः ॥ २२ ॥

स्थितेऽध्यक्षपदे तस्मिन् पुणेपौरैः सभागतैः ।
संसद् दक्षिणशिक्षाख्या स्थापितासौ यथाविधि ॥ २३ ॥

अब्धिदिक्पालवसुभूमिते संवत्सरे शुभे ।
दशमस्याथ मासस्य चतुर्विंशे दिने किल ॥ २४ ॥

गद्रेवाडा इति ख्याते स्थले पुण्यपुरीस्थिते ।
सभाधिवेशनं जातं महाकल्याणकारकम् ॥ २५ ॥

सभां स्थापयितुं तत्र वामनेन पुरस्कृतः ।
प्रस्तावश्च हितेच्छूनामुपसंसद् नियोजिता ॥ २६ ॥

सूचितस्तिलकेनैव प्रस्तावश्चोपसंसदः ।
निम्नोक्तैः सज्जनैः श्रेष्ठैरुपसंसदलंकृता ॥ २७ ॥

वेडर्बर्नश्च वर्ड्स्वर्थो मंडलीकश्च तैलधीः ।
भाण्डारकरतेलंगौ दांडेकेळौ करोत्तरौ ॥ २८ ॥

आगरकरश्च तिलको नामजोशी च धारपः ।
आपटे केळ्करो गोळे सर्वे आद्यसभासदः ॥ २९ ॥

सप्तर्षयश्च शुचिभा विरेजुर्दक्षिणापथे ।
शोभनाः पूतचरिता लोकाभ्युदयकारकाः ॥ ३० ॥

सभासंस्थापनात् पूर्वं फेब्रुवार्यां समागतः ।
फर्ग्यूसनः प्रान्तपतिर्विद्यामन्दिरमीक्षितुम् ॥ ३१ ॥

प्रान्तेशो नितरां तुष्टो दृष्ट्वा प्रगतिमुत्तमाम् ।
निष्ठां प्राध्यापकानां च लोकशिक्षणलालसाम् ॥ ३२ ॥

विद्वत्तां पात्रतां चापि दृष्ट्वा संतुष्टमानसः ।
विद्यालयस्थापनाय योग्याः प्राध्यापका इह ॥ ३३ ॥

इति प्रदर्शितस्तेन स्वाभिप्रायः शुभेच्छुना ।
तेन प्रोत्साहिताः सर्वे शिक्षकास्तिलकादयः ॥ ३४ ॥

आरेभिरे प्रयत्नं ते विद्यालयविनिर्मितेः ।
श्रीमद्‌भ्यो द्रव्यदानस्य प्रापुराश्वासनानि च ॥ ३५ ॥

डेक्कन्शिक्षणसंस्थाया निर्मितेः प्रथमं फलम् ।
विद्यापीठाय मुम्बय्याः प्रार्थना सभया कृता ॥ ३६ ॥

महाविद्यालयं नूत्नं संस्था निर्मातुमिच्छति ।
विद्यापीठेन दातव्यानुज्ञा तत्स्थापनाय च ॥ ३७ ॥

डिसेंबरस्य सप्ताहेऽग्रिमे पीठाधिकारिणी ।
ददावनुज्ञां निर्मातुं महाविद्यालयं नवम् ॥ ३८ ॥

पी.ई.कक्षाध्यापनस्य व्यवस्था संमताभवत् ।
वर्षत्रयान्ते पदवीपरीक्षाध्यापनस्य च ॥ ३९ ॥

त्रिवर्षाध्यापनस्यैतत् कार्यं यदि यशोऽन्वितम् ।
भवेत् पीठमते संस्था पूर्णाध्यापनकारिणी ॥ ४० ॥

आमध्यादन्तपर्यन्तमाङ्ग्लवर्षान्त्यमासके ।
विद्यालयविनिर्मित्यै सर्वमावश्यकं कृतम् ॥ ४१ ॥

पञ्चाशीतितमे वर्षे ह्याष्टादशशतोत्तरे ।
द्वितीये ह्याद्यमासस्य दिने परममङ्गले ॥ ४२ ॥

फर्ग्यूसनमहाविद्यालयस्योद्‌घाटनं कृतम् ।
गद्रेवाडा इति ख्याते गृहे पुण्यपुरीस्थिते ॥ ४३ ॥

भारतीयेतिहासस्य पूर्वोक्ताब्दस्य लेखकाः ।
सौवर्णैरक्षरैर्लेखं करिष्यन्तीति मे मतिः ॥ ४४ ॥

मुख्याचार्यपदं तस्य वामनाय समर्पितम् ।
यो विद्यालयशिष्येभ्यः शिक्षयामास संस्कृतम् ॥ ४५ ॥

तिलको गणिताचार्यो गोपालस्तत्त्वतर्कयोः ।
आचार्यो वासुदेवोऽभूदाङ्ग्लकाव्येतिहासयोः ॥ ४६ ॥

गोळे पदार्थविज्ञानप्राध्यापकपदे स्थितः ।
धारपो नामजोशी च सदस्यौ सहकारिणौ ॥ ४७ ॥

आचार्याणामयं संघो विद्याशीलसमन्वितः ।
महाविद्यालयोन्नत्यै सोत्साहः कार्यतत्परः ॥ ४८ ॥

संख्यया नवतिश्छात्रा अध्येतुं प्रथमेऽहनि ।
प्राविशन् साभिमानं ते महाविद्यालयं नवम् ॥ ४९ ॥

गद्रेगृहस्य निकटं इन्दूराधिपमन्दिरम् ।
लेभिरेऽध्यापनार्थं तच्छात्राणां दक्षचालकाः ॥ ५० ॥

प्रान्ताधिपस्य कृपया प्रासादं सौम्यसंज्ञकम् ।
पेशवेवसतिस्थानं प्राप्नुवन् कार्यकारिणः ॥ ५१ ॥

भव्यं रम्यं विनिर्मातुं महाविद्यालयं नवम् ।
पञ्चमे मार्चमासस्य दिने संस्थापिता शिला ॥ ५२ ॥

फर्ग्यूसनस्य हस्तेन प्रान्तेशस्य महामतेः ।
महोत्सवेन पौराणां तथा राज्ञामुपस्थितौ ॥ ५३ ॥

शिलान्यासाङ्कितस्थाने नवमन्दिरनिर्मितिः ।
विद्यालयस्य नैवाभूत् सौम्यप्रासादसंस्थिते ॥ ५४ ॥

स्थानं मतं नृणामेकं दैवेनान्यत् तु चिन्तितम् ।
समुत्खाता कोणशिला सान्यत्र प्रतिरोपिता ॥ ५५ ॥

उपत्यकासु रम्यासु चतुःशृङ्गीसमन्ततः ।
हस्तेन हारिसाख्यस्य पुनः प्रान्तपतेः शुभा ॥ ५६ ॥

शिलान्यासविधिश्चायं चालकैः पूर्ववत् कृतः ।
वर्षे द्वानवतितमे ह्यष्टादशशतोत्तरे ॥ ५७ ॥

नियन्ता विद्यते सृष्टेस्तदिच्छैव बलीयसी ।
नियताः कर्मणा दाम्ना वृषा इव नरास्तथा ॥ ५८ ॥

सर्वेषामेव विदितं कथं स्थानान्तरं कृतम् ।
सम्राण्न्यस्तशिलास्थानान्नवदिल्लीविनिर्मितौ ॥ ५९ ॥

अहं करोमीति वृथाभिमानः
प्रभुः करोत्येव निजप्रजायाः ।
पितेव पुत्रस्य सुखाय सर्वं
समत्वबुद्ध्या जगदेकनाथः ॥ ६० ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे महाविद्यालयस्थापनाख्यो दशमस्तरङ्गः ।

# एकादशस्तरङ्गः

महाविद्यालयस्यापि प्रथमे वर्षपञ्चके ।
उत्कर्ष आसीत् सुमहानैन्द्रजालिकवृक्षवत् ॥ १ ॥

उच्चशिक्षणदानस्य भारतीयसुशिक्षितैः ।
अयं कृतो महोद्योगस्त्यागिभिर्देशसेवकैः ॥ २ ॥

बालगोपालयोः कीर्तिः प्रथिता भारतेऽखिले ।
सत्त्वं त्यागं प्रयत्नं च प्रशशंसुस्तयोर्जनाः ॥ ३ ॥

छात्रसंख्या गता वृद्धिं प्रतिवर्षमखण्डिता ।
द्वाभ्यां विवर्धिता संख्या यावज्जीवसभासदाम् ॥ ४ ॥

गोपालः कृष्णतनयो गोखलेवंशभूषणः ।
चिन्तामणिर्भानुवंशरत्नं गङ्गाधरात्मजः ॥ ५ ॥

विद्यालयं समायाताः पुरुषा नवतेजसः ।
एकराशिमिव प्राप्ता ग्रहास्तेजस्विनो नव ॥ ६ ॥

स्याद् ग्रहाणां स्वकक्षायां स्थितिर्लोकसुखावहा
तेषां कक्षान्तरगतिः संघर्षाय प्रकल्पते ॥ ७ ॥

गुरुत्वाकर्षणं तेषां कक्षास्थैर्यस्य कारणम् ।
तदभावे च संघर्षः संघर्षात् प्रलयो महान् ॥ ८ ॥

मतभेदात् सदस्यानामन्तःकलह उत्थितः ।
सम्यग्ज्ञानाय तस्यात्र वक्ष्यामि विषयान्तरम् ॥ ९ ॥

पञ्चाशीतितमे वर्षे ह्यष्टादशशतोत्तरे ।
मासेऽन्तिमे राष्ट्रभक्ता भारतस्य समाययुः ॥ १० ॥

पूर्वादिभ्यश्च सर्वाभ्यो दिग्भ्यः सर्वे समुत्सुकाः ।
उपस्थिताः सभां वव्रुस्तदोमेशं सभापतिम् ॥ ११ ॥

प्रादुरासीत् सभामध्ये भारतस्यैक्यदेवता ।
मुम्बापुर्यां समानर्चुर्लोकास्तां लोकमातरम् ॥ १२ ॥

चक्रुस्तदानीं संस्कारं सभायास्ते महाजनाः ।
तां "काँग्रेस" इति प्राहुर्नाम्ना सर्वे सभासदः ॥ १३ ॥

सभायाः स्थापनेनास्या निर्मितं केन्द्रमुत्तमम् ।
प्रान्तीयत्वविलोपाय राष्ट्रियत्वोदयाय च ॥ १४ ॥

संमेलनाय वर्षान्ते चर्चायै गुणदोषयोः ।
आङ्ग्लराज्यप्रणाल्याश्च हिन्ददेशहितस्य च ॥ १५ ॥

संस्थापकाः सभाया ये राजकारणसूरयः ।
नत्वा राष्ट्रसभाधुर्यान् वक्ष्ये तामुत्तरां कथाम् ॥ १६ ॥

नतोऽस्म्यादौ राष्ट्रभक्तं भारतप्रपितामहम् ।
"दादाभाई" इति ख्यातं भारताभ्युदयार्थिनम् ॥ १७ ॥

सेवानिवृत्तौ द्वावाङ्ग्लावुदारमतवादिनौ ।
वेडर्बर्न्ह्यूमनामानौ भारतस्य सुहृत्तमौ ॥ १८ ॥

एते त्रयश्च निर्दिष्टा लोकमान्यैः स्वलेखने ।
मुनित्रयीति राष्ट्रीयसभायाः पथदर्शिनी ॥ १९ ॥

एतैः प्रदत्तं संदेशं वर्णयामास केसरी ।
मुनित्रयस्य संदेशः सोऽयमित्यादरोक्तिभिः ॥ २० ॥

यद् राष्ट्रसंसदुत्पत्ते रहस्यं परमाद्भुतम् ।
उमेशेनापि तत् प्रोक्तं ग्रन्थे विरचितेऽन्तिमे ॥ २१ ॥

ह्यूमो जगाम डफ्रीनं राजप्रतिनिधिं नवम् ।
अध्यूषिवांसं सिमलां तस्मै ख्यातुं स्वयोजनाम् ॥ २२ ॥

प्रान्तप्रतिनिधीनां च सर्वेषां महती सभा ।
वर्षस्यान्ते पुरे क्वापि कार्या भारतनेतृभिः ॥ २३ ॥

समाजहितकार्याणां चर्चायै निर्णयाय च ।
स्नेहसंवर्धनायापि प्रमुखाणां विवेकिनाम् ॥ २४ ॥

वर्जनीया सभाकार्याद् राजनीतिविचारणा ।
तदर्थं चापि प्रान्तेषु सभा कार्या महाजनैः ॥ २५ ॥

प्रान्ताधिपो ह्यलंकुर्यात् सभाध्यक्षपदं तदा ।
जनयेच् श्लाघ्यसंबन्धं शास्यशासकयोर्हितम् ॥ २६ ॥

एवमावेदयद् ह्यूमो डफरीनाय धीमते ।
भारतीयजनप्रेमी योजनां स्वेन निर्मिताम् ॥ २७ ॥

डफरीनोऽचिराद् ह्यूमं विचाराय समाह्वयत् ।
प्रशस्य योजनाहेतुं स्वाभिप्रायमुवाच सः ॥ २८ ॥

राजकारणतत्त्वानां चर्चायै मुख्यतः सभा ।
भारतीयविनेतृणां कार्या लोकहितार्थिभिः ॥ २९ ॥

तस्या नियमनं कार्यं सर्वलोकहितैषिणा ।
नैवोचिता सभास्थाने शासकानामुपस्थितिः ॥ ३० ॥

सभासदां विचाराश्च निर्णयाश्च सभादृताः ।
मननीया भवेयुस्ते मन्त्रिणां च विशेषतः ॥ ३१ ॥

आङ्ग्ललोकसभाकार्ये विरोधस्योपयुक्तता ।
संमतासीद् यथा तद्वत् सभाचर्चा भवेदिह ॥ ३२ ॥

डफरीनवचः श्रुत्वा नीतियुक्तिसमन्वितम् ।
स्वीचकारातिहर्षेण ह्यूमस्तत्कथिताशयम् ॥ ३३ ॥

माऽस्तु षट्कर्णतास्येति डफरीनोऽब्रवीत् तदा ।
नैव प्रकाशतां नेयः संबन्धो मम भाषणे ॥ ३४ ॥

यावद् राज्याधिकारं हि वर्तयाम्यत्र भारते ।
तावद् मित्रैर्न कर्तव्यो ममोल्लेखस्त्वयाथवा ॥ ३५ ॥

कृत्वैवं समयं ह्यूमो मूले हिमगिरेस्तदा ।
मित्राणि द्रष्टुमायात आर्यावर्ते च सत्वरम् ॥ ३६ ॥

ह्यूमः पुरुषमुख्येभ्यो योजनां तां न्यवेदयत् ।
कालिस्थाने मोहमय्यां तथा मद्रासपत्तने ॥ ३७ ॥

प्रमुखाभिमता सासीद् डफरीनस्य योजना ।
वर्षस्यान्ते पुण्यपुर्यामुद्घोषि सभापि तैः ॥ ३८ ॥

पुणेजनसभाध्यक्षकार्यवाहसभासदः ।
प्रतिजज्ञुस्तदा नेतुं राष्ट्रकार्यं यशस्विताम् ॥ ३९ ॥

आवैशाखात् कार्तिकान्तं पुण्यपत्तनवासिनः ।
प्रायतन्त दिवानक्तं राष्ट्रकार्यपरायणाः ॥ ४० ॥

सिद्धयेऽस्याः परिषदो मनसा वचसा धनैः ।
विषूचिकामयग्रस्तो जनस्तत्राभवत् तदा ॥ ४१ ॥

राष्ट्रसंसद्धिनेतारस्ततः स्थानान्तरं वरम् ।
मत्वेति तैः सभास्थानं मोहमय्यां सुनिश्चितम् ॥ ४२ ॥

श्रीमद्गोकुळदासाख्यसंस्कृताध्यायमन्दिरे ।
अलंकृते पताकाभिः शुभैश्च स्वागताक्षरैः ॥ ४३ ॥

उमेशचन्द्र आरूढः सभाध्यक्षासनं शुभम् ।
विज्ञापितः सुष्ठुवाक्यैर्ह्यूमप्रभृतिसज्जनैः ॥ ४४ ॥

विनिर्णीय नवप्रश्नान् समाप्तमधिवेशनम् ।
डिसेंबराख्यमासस्य चाष्टाविंशे दिने शुभे ॥ ४५ ॥

माधवस्तु सभास्थाने प्रेक्षकेषु प्रतिष्ठितः ।
रानडेकुलजोऽसौ वै सभाध्यक्षनिमन्त्रणात् ॥ ४६ ॥

मराठा-केसरी-ज्ञानप्रकाशज्येष्ठलेखकाः ।
पुणेप्रतिनिधित्वेन सभास्थानमुपस्थिताः ॥ ४७ ॥

वृत्तपत्रप्रतिनिधी तेषु गोपालवामनौ ।
इतिवृत्तस्थनिर्देशात् सभाया इति गम्यते ॥ ४८ ॥

हिन्दराष्ट्रसभासूत्रं पुण्यसंसत्सभासदाम् ।
वशे स्थितं वर्षमेकं माधवस्यानुयायिनाम् ॥ ४९ ॥

जाता राष्ट्रसभाकार्यव्याप्तिः सर्वत्र भारते ।
राष्ट्रीयत्वं समापन्नं तद्व्यापारविचारयोः ॥ ५० ॥

उमेशचन्द्रबानर्जीकृतग्रन्थाश्रयेण वै ।
सेयं जन्मकथा राष्ट्रसभाया वर्णिता मया ॥ ५१ ॥

डफ्रीनदर्शितं शास्त्रमाङ्ग्लसाम्राज्यनाशनम् ।
तत्पुनर्भारतीयानामासीत् स्वातन्त्र्यसाधकम् ॥ ५२ ॥

कायाधवो दैत्यवंशे रक्षोवंशे विभीषणः ।
डफरीनस्तथैवाङ्ग्लवंशेऽभूद् वंशभूषणः ॥ ५३ ॥

प्रजासंघटनात् सर्वमाङ्ग्लैः संपादितं बलम् ।
न्याय्यकार्योपयुक्तं यद् राष्ट्रसामर्थ्यवर्धनम् ॥ ५४ ॥

तद् धर्म्यपथ्यन्याय्यानां प्रतिकूलेषु कर्मसु ।
आसादनेऽन्यदेशस्य प्रयुक्तं परपीडने ॥ ५५ ॥

अधःपाताय राष्ट्रस्य बलमाविष्कृतं भवेत् ।
साम्राज्यमन्दिरस्थैर्यं तेन शीघ्रं विचाल्यते ॥ ५६ ॥

प्रजातन्त्रं च राष्ट्रस्य न्याय्यमार्गाच्च्युतस्य च ।
प्रजाशक्तिः सुघटिता प्रतीकारक्रियाक्षमा ॥ ५७ ॥

जातोऽप्सु जातवेदा यश्चाद्भिरेवोपशाम्यति ।
स्वयोन्यामेव विश्वेऽस्मिन्नुपशान्तिः सुतेजसाम् ॥ ५८ ॥

पूर्वमेव सभोत्पत्तेर्वादः पश्चिमभारते ।
मलबारिणा प्रसिद्धेन लेखकेन प्रवर्तितः ॥ ५९ ॥

छेत्तव्या राजदण्डेन बालोद्वाहप्रथालता ।
न प्रवृद्धा बद्धमूला नश्येत् सभ्यकटूक्तिभिः ॥ ६० ॥

यदि बाल्ये कृतोद्वाहा अपि विद्यागुणैर्युताः ।
न भवेयुर्जना लोके त्वधिकारपदे स्थिताः ॥ ६१ ॥

बाल्य एव भवेयुर्ये कृतदारपरिग्रहाः ।
तेभ्यो नोपाधयो देया विद्यापीठेन कर्हिचित् ॥ ६२ ॥

समाजकारणं पूर्वं पूर्वं वा राजकारणम् ।
विवादं चक्रिरे केचिद् राजनीतिविशारदाः ॥ ६३ ॥

हस्तक्षेपो न कर्तव्यो धर्मकार्येषु शासकैः ।
भूपाधिशासनाद् बाह्यं धर्मकार्यं हितप्रदम् ॥ ६४ ॥

श्रुतिस्मृतिपुराणैर्यत् प्रमाणैः सुनियन्त्रितम् ।
तत्र संशोधनोपायो युक्तः समितिनिर्णयः ॥ ६५ ॥

समितेर्घटना प्रोक्ता याज्ञवल्क्येन धीमता ।
ब्राह्मणा वेदशास्त्रज्ञाः सदस्यत्वेन वै स्मृताः ॥ ६६ ॥

विद्वांसो रानडेमुख्या धर्मकार्येषु सर्वदा ।
हस्तक्षेपः शासकानां योग्य एवेति मेनिरे ॥ ६७ ॥

मर्यादातिक्रमश्चायमिति केचन मेनिरे ।
तेलंगप्रमुखा विज्ञाः समाजे सुप्रतिष्ठिताः ॥ ६८ ॥

प्रतिषिद्धो विशेषेण हस्तक्षेपोऽधिकारिणाम् ।
धर्ममार्गे स्मृतिप्रोक्ते तिलकेन विवेकिना ॥ ६९ ॥

आगर्करस्तद्विरोधी केसरीपत्रलेखकः ।
विद्यालये-गुरूणां च मतभेदो महानभूत् ॥ ७० ॥

मराठाकेसरीपत्रे एकसंस्थाप्रकाशिते ।
परस्परविसंवादि संजातं लेखनं तदा ॥ ७१ ॥

सनातनमतं प्रायस्तिलकेन पुरस्कृतम् ।
तथा चागरकरेणापि नूतनं मतमुद्धृतम् ॥ ७२ ॥

तिलकस्यानुकूलास्ते बहुसंख्याः सभासदः ।
प्रतिकूलं बहुमतमासीदागरकरस्य तु ॥ ७३ ॥

मतभेदस्य तीव्रत्वाद् निर्णयेन सभासदाम् ।
संस्था जहौ च संबन्धं स्वामित्वं वृत्तपत्रयोः ॥ ७४ ॥

मुद्रणादिककार्यस्य भारं तु तिलकोऽवहत् ।
वासुदेवहरी आस्तां भागिनौ तिलकस्य वै ॥ ७५ ॥

सप्ताशीतितमे वर्षे ह्यष्टादशशताधिके ।
मुद्रालयवृत्तपत्रस्वामित्वं तिलको दधे ॥ ७६ ॥

आगरकरः समारेभे तस्मिन्नब्दे "सुधारकम्" ।
गोखलेसहितश्चक्रे प्रचारं स्वमतस्य च ॥ ७७ ॥

सुधारकेतिपत्रस्य द्वन्द्वं केसरिणा सह ।
मराठीवाङ्मयस्यास्तां कुण्डले श्रुतिशोभने ॥ ७८ ॥

सप्त वर्षाणि कलहो बभूव सुमहांस्तयोः ।
विस्मृत्य पूर्वसौहार्दं वाग्बाणैर्युध्यमानयोः ॥ ७९ ॥

वृकोदरजरासन्धौ युयुधाते यथा पुरा ।
यथा वा पार्थराधेयौ परस्परजिघांसया ॥ ८० ॥

महाराष्ट्रो द्विधा भिन्नस्तयोर्विवदमानयोः ।
एकः सनातनः पक्षो द्वितीयश्च सुधारकः ॥ ८१ ॥

शिक्षाकार्यात् पृथग् नीता पत्रसंस्थैक्यहेतुना ।
न च तेन यशःप्राप्तिर्जाता संस्थासभासदाम् ॥ ८२ ॥

गोखलेऽगर्करावास्तां तिलकप्रतिवादिनौ ।
संस्थामण्डपमारूढा मतभेदलताशुभा ॥ ८३ ॥

शिक्षासंस्थासदस्यत्वत्यागपत्रं समार्पयत् ।
तिलकोऽत्यन्तकष्टेन सहकार्यविवृद्धये ॥ ८४ ॥

विद्यालयाध्यापकानामवशिष्टसभासदाम् ।
भानुवामनगोपालप्रभृतीनां विशेषतः ॥ ८५ ॥

तिलको व्यलिखत् खण्डं चरितस्यात्मनः स्वयम् ।
त्यागपत्रस्वरूपेण ध्येयचर्चासमन्वितम् ॥ ८६ ॥

चरितस्यास्य निःशङ्कं सुमूल्यं मुख्यसाधनम् ।
संस्थावृत्तप्रबन्धे तदामूलाग्रं प्रकाशितम् ॥ ८७ ॥

प्रारभ्य स्नातकत्वाप्तेराचार्यत्वान्तमेव च ।
तत्स्थानाद् विनिवृत्तेश्च स्वकथां तिलकोऽलिखत् ॥ ८८ ॥

तिलकत्यागपत्रे या प्रतिमा संप्रतीयते ।
दर्पणे बिम्बवत् सा वै सत्योग्रध्येयनैष्ठिकी ॥ ८९ ॥

किं नु ध्येयं समित्रस्य ममासीदायुषस्तदा ।
अभीप्सितार्थसिद्ध्यर्थमादर्शः कश्च संमतः ॥ ९० ॥

जीवनावश्यकादर्थादधिकार्थेषु निःस्पृहः ।
कथमेकं समित्रोऽहं सज्जनं समुपागमम् ॥ ९१ ॥

अलब्ध्वाभीप्सितं तस्मान्नाहं खिन्नमनास्तदा ।
अपश्यं शास्त्रिणं विष्णुं पुनरुद्योगतत्परम् ॥ ९२ ॥

स्वार्थत्यागपराकाष्ठा मित्रचर्चासु निश्चिता ।
वर्णिता सा सविनयं मया चागरकरेण च ॥ ९३ ॥

इति सर्वं पूर्ववृत्तं तिलकोक्तं स्वपत्रके ।
चिकीर्षुभिर्लोकसेवां पठितव्यं पुनः पुनः ॥ ९४ ॥

करंदीकरगोपालावहं भागवतस्तदा ।
कृतवन्तो वयं पूर्वं ध्येयनिश्चयमायुषः ॥ ९५ ॥

अल्पवेतनसंतुष्टाः संस्थाहितपरायणाः ।
निर्ममा मोहरहितास्त्यक्तैहिकसुखस्पृहाः ॥ ९६ ॥

अनन्यदेवताभक्तास्तृप्तात्मानो जितैषिणः ।
भूत्वा वयं करिष्यामो यत्नं लोकहितावहम् ॥ ९७ ॥

लोकशिक्षणकार्यार्थमायुरस्माभिरर्पितम् ।
धर्मकार्याभिवृद्ध्यर्थं यथा ख्रिस्तप्रचारकैः ॥ ९८ ॥

वीतभोगस्पृहा नित्यं सेवानन्दविहारिणः ।
त्यागशीलधना धर्मकार्यं कुर्वन्ति जेस्विटाः ॥ ९९ ॥

" यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ १०० ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः" ।
इति गीतासु भगवानाह कृष्णोऽर्जुनं प्रति ॥ १०१ ॥

अभिप्रायेण तैस्तेन कृतमात्मसमर्पणम् ।
स्वकार्यार्थं सुहृद्भिश्च तिलकेनेति मन्यते ॥ १०२ ॥

असिधाराव्रतमिदं स्वीकृतं ध्येयदर्शिभिः ।
नवकार्योत्सुकैर्मित्रैश्चतुर्भिरपि तैस्तदा ॥ १०३ ॥

विद्यालयादिसंस्थानां प्रगतेर्मुख्यकारणम् ।
लोकैः संस्थास्थापकानां त्यागवृत्तिः प्रशंसिता ॥ १०४ ॥

निर्धनानां बलं त्यागो महाकार्यसमुद्यमे ।
कार्यनिष्ठा जेस्विटानां तेषामुत्साहवर्धिनी ॥ १०५ ॥

तेषां द्वाभ्यां यशःप्राप्तिः पक्षाभ्यां पक्षिणां यथा ।
गतिः साध्यास्ति यत्नेन कर्तव्यं पालनं तयोः ॥ १०६ ॥

न कर्तव्याल्पलाभाय बहुलाभाय वा जनैः ।
च्युतिः सुनिश्चितात् तत्त्वादायुर्ध्येयानुगामिभिः ॥ १०७ ॥

कृतं कार्यं विना शुल्कं शास्त्रिणा तिलकेन च ।
विद्यालयस्यादिमेऽब्दे त्यागतत्त्वावलम्बिना ॥ १०८ ॥

उद्घोषणं च तत्त्वानां संस्थाया इतिवृत्तके ।
प्रमुखाध्यापकश्चक्रे वामनः प्रतिवत्सरम् ॥ १०९ ॥

वामनोऽकथयच्च शिक्षासमितिं राजनिर्मिताम् ।
नवसंस्थाविनिर्माणे तद् ध्येयं सप्रयोजनम् ॥ ११० ॥

संस्थापनं भारतीयशिक्षा 'मिशन' संहतेः ।
शालाविद्यालयादीनां सर्वदेशे प्रसारणम् ॥ १११ ॥

राष्ट्रीयज्ञानदानस्य प्रणालेश्च विनिर्मितिः ।
संस्थोद्देशा उपर्युक्ता वक्तव्ये तेन वर्णिताः ॥ ११२ ॥

संस्थाकार्यैकनिष्ठायास्त्यागवृत्तेः सभासदाम् ।
ज्ञातृभिः समितेरेव रचिता घटनास्मृतिः ॥ ११३ ॥

नियमेष्वनुसंधानं तयोः प्रायः प्रदृश्यते ।
वृत्त्यर्थमेव यद् द्रव्यं तच्छुल्कमिति निश्चितम् ॥ ११४ ॥

सभासदां विमाद्रव्यदेयांशस्य च बन्धनम् ।
वार्षिकोपायनद्रव्यं रूप्यकाणां चतुःशतम् ॥ ११५ ॥

आपत्काले दयाद्रव्यदानस्यावसरोऽपि च ।
संस्थाकार्यैकजीवित्वाद् योग्यं तद्धि सभासदाम् ॥ ११६ ॥

यावच्च जीवनं शक्यं मध्यमस्थितिलोकवत् ।
योजनालब्धवित्तेन तावद् वृद्धिर्निरर्थका ॥ ११७ ॥

प्रतिमासं सभासद्भ्यो रूप्याणां पञ्चसप्ततिः ।
वेतनं च प्रदातव्यं निर्बन्धेन विनिश्चितम् ॥ ११८ ॥

कृतमेकं शतं मानमुपाचार्यस्य वेतने ।
महाविद्यालये ज्येष्ठे शासनेन प्रचालिते ॥ ११९ ॥

तस्मादलं जीविकार्थं संस्थानिर्णीतवेतनम् ।
किंचिद् निदर्शनं तत्र त्यागवृत्तेः सभासदाम् ॥ १२० ॥

ऐच्छदागरकरः कर्तुं वृत्तिवृद्धिं सभासदाम् ।
आचार्याणां समानत्वं कर्तव्यं वेतने तथा ॥ १२१ ॥

न्याय्यमावश्यकं तच्च सावेशं प्रत्यपादयत् ।
न प्रशस्ता मते तस्य दयाद्रव्यार्थयाचना ॥ १२२ ॥

सदोषा सा प्रथा भाति स्वाभिमानविरोधिनी ।
वेतनाधिकवित्तस्य यद्यावश्यकता भवेत् ॥ १२३ ॥

अन्यस्तदर्थं कर्तव्यो व्यवसायः सभासदा ।
स्वीकृतस्याविरोधेन निजाध्यापनकर्मणः ॥ १२४ ॥

आचार्येभ्यः प्रदातव्याः सर्वेभ्यः पञ्च रूप्यकाः ।
अधिका मासवृत्तेश्च प्रतिमासमतः परम् ॥ १२५ ॥

यतः समृद्धा संस्थायाः स्थितिः संप्रति दृश्यते ।
आचार्यवेतने वृद्धिर्युक्तैवेति च तन्मतम् ॥ १२६ ॥

नासीत् कस्यापि वैमत्यं वृत्तिवृद्धौ सभासदाम् ।
संस्थासांपत्तिकस्थित्यां सुसह्या सा भवेद् यदि ॥ १२७ ॥

संप्रवृत्ते तु ख्रिस्ताब्दे ऋषिदिग्वसुभूमिते ।
द्वितीयमासे विहिता परिषत् पञ्चमे दिने ॥ १२८ ॥

अध्यक्षोऽब्रूत तिलकं संमतास्ति सभासदाम् ।
योजनागरकरस्येति सभायां समुपस्थितम् ॥ १२९ ॥

विरोधो योजनायास्तु तिलकेन प्रदर्शितः ।
ध्येयस्य स्वीकृतस्यासीत् सामूलाग्रविरोधिनी ॥ १३० ॥

वृत्तिर्देया सदस्यानां कुटुम्बभरणोचिता ।
अल्पवेतनसंतोषो व्रतमेव सभासदाम् ॥ १३१ ॥

न वृत्तिवृद्धेः संस्थायाः सुस्थितिर्योग्यकारणम् ।
इति ज्ञेयं सभासद्भिस्त्यागतत्त्वानुयायिभिः ॥ १३२ ॥

तत्स्वीकारात् स्वतत्त्वस्य नाशोऽवश्यं भविष्यति ।
सभासद्भिर्विमृश्यैतद् न प्रदेया स्वसंमतिः ॥ १३३ ॥

दानशूरप्रदानेन किंवा राजप्रसादतः ।
संस्थाकोशः समृद्धश्चेद् वृत्तिवृद्धिः सभासदाम् ॥ १३४ ॥

शासकीयासु संस्थासु दत्तवृत्तिप्रमाणतः ।
कर्तव्येति प्रवदतो न दोषो न विसंगतिः ॥ १३५ ॥

च्युताच्युतपदाद् गङ्गा संप्राप्ता लवणार्णवम् ।
तत्त्वच्युता तथा वृत्तिर्लोभसागरमाविशेत् ॥ १३६ ॥

कुत्र त्यागस्य सा प्रौढिर्यद्धोषेण निनादितम् ।
दिशां मण्डलमस्माभिः कार्यारम्भे मुहुर्मुहुः ॥ १३७ ॥

द्रविणात् संस्थया दत्तात् यो वाञ्छेदधिकं धनम् ।
तदर्थमाश्रयेदन्यं व्यवसायं सुखेन सः ॥ १३८ ॥

विद्यालयसदस्यस्य संस्थाकार्यार्थजीविनः ।
व्यवसायान्तरानुज्ञा तद्व्रतस्य विघातिनी ॥ १३९ ॥

अध्यापनस्य कार्यस्य पूर्त्यै नित्यसमागमः ।
आचार्यशिष्ययोरुक्तः शिक्षाशास्त्रविशारदैः ॥ १४० ॥

अन्योद्यमस्य लोभेन शिक्षायामदृढा भवेत् ।
आचार्याणां क्रमाद् बुद्धिरेतद् मे निश्चितं मतम् ॥ १४१ ॥

एकार्थसंहतानां च विभिन्नव्यवसायिनाम् ।
अस्थिरं सहकार्यं स्याच्च् शश्वत्संघर्षसंभवात् ॥ १४२ ॥

नैवाहं प्रतिकूलोऽस्मि दातुमावश्यकं धनम् ।
आगरूकराय यच्छन्तु दद्याद्द्रव्यं सभासदः ॥ १४३ ॥

गताब्दोपायनाद् वार्थात् प्रस्तुतस्य सभाज्ञया।
साधनीयं च तत् कार्यं तत्त्वस्योल्लङ्घनं विना॥ १४४॥

उक्तेऽथ तिलकेनैवं प्रथमं ये सभासदः।
आगरकरानुकूला वै जातास्ते तद्विरोधिनः॥ १४५॥

चुक्रोधागरकरस्तेन प्रक्षुब्धं तत् सभागृहम्।
अकृत्वा निर्णयं सर्वे सभास्थानाद् विनिर्गताः॥ १४६॥

सभायां तिलको यावत् तावन्नाशा जयस्य मे।
एवमागरकरः खिन्नस्तिलकेन पराजितः॥ १४७॥

आगरकरं समाधातुं सूचितं योजनान्तरम्।
न विचारार्हमित्याह गोखले तिलकं प्रति॥ १४८॥

नाधिकं रूप्यशतकाद् भवेदाचार्यवेतनम्।
इति पर्यायमर्यादा नाभवत् तस्य संमता॥ १४९॥

कार्यो न व्यवसायोऽन्यो लब्धुं द्रव्यं हि शिक्षकैः।
व्यवसायान्तरप्राप्तं तत् सभाया धनं भवेत्॥ १५०॥

तिलकस्य मते नैतज्जेस्विद्पद्धतिलक्षणम्।
स्वीकृतिर्घोषिता यस्याः सभासंचालकैः सदा॥ १५१॥

वादस्तीव्रः समुत्पन्न एतत्तत्त्वस्य पालने।
निदर्शनानि मुख्यानि निर्दिशाम्यत्र कानिचित्॥ १५२॥

महाराजशिवाख्यस्य तस्य होळकरभूपतेः।
राज्याभिषेकसमये शक्रोचितमहोत्सवे॥ १५३॥

सभादिष्टस्तु तिलकः कर्तुं राज्ञोऽभिनन्दनम्।
मानपत्रं स्वीचकार तिलकेनार्पितं च सः॥ १५४॥

राजा वर्षद्वयान्तेऽसौ पुण्यपत्तनमागमत्।
न्यवसत् कतिचिद् मासान् सकुटुम्ब उदारधीः॥ १५५॥

राजा निमन्त्रयामास तिलकागरकरावुभौ।
सभाजनं तयोः कृत्वा रूप्यसप्तशतं ददौ ॥ १५६ ॥

राज्ञे दत्वा धन्यवादानगृह्णीतां प्रतिग्रहम्।
प्रत्यागतौ सभास्थानमुभौ द्रव्यसमन्वितौ ॥ १५७ ॥

प्रस्थानपूर्वं संकेत आसीत् ताभ्यां कृतो गृहे।
संस्थाहिताय कर्तव्यो राजदानप्रतिग्रहः ॥ १५८ ॥

दत्तं वस्त्रादिरूपेण राज्ञा द्रव्यं सभासदाम्।
तिलकेनेति पत्रेण लिखितेन निवेदितम् ॥ १५९ ॥

राजामात्येन तत्पूर्वं प्रहितं पत्रकान्तरम्।
अकल्पितं शङ्कनीयं संस्थाविग्रहमूलकम् ॥ १६० ॥

निर्मात्रे वाक्यमीमांसाग्रन्थस्यागर्कराय हि।
चतुःशतं धनं देयं शेषं चान्यसभासदाम् ॥ १६१ ॥

बालगोपालयोर्मध्ये पत्रापत्रि तदाभवत्।
आसीत् कटुतमं तस्मान्नेतिवृत्ते प्रकाशितम् ॥ १६२ ॥

अलिखत् त्यागपत्रे यत् स्थितं तत् तु निरुत्तरम्।
ततः षण्मासपर्यन्तं विश्रमस्वास्थ्यमन्वभूत् ॥ १६३ ॥

लभ्यतेऽद्य प्रतिकृतिः पत्रस्येन्दूरभूपतेः।
संस्थायाः सचिवस्यैका पत्रलेखादिसंग्रहे ॥ १६४ ॥

न विद्यते मूलपत्रं प्रेषितं सचिवेन यत्।
न ज्ञायतेऽस्य पत्रस्य कथं जातं विलोपनम् ॥ १६५ ॥

द्रव्यस्य मे विनिमयः सभासद्वस्त्रभूषणे।
कार्य इत्यब्रवीद् भूपस्तदा संभाषणे स्वयम् ॥ १६६ ॥

कथं मतान्तरं तस्य केन भूपः प्रचोदितः।
प्रतिकूलार्थपत्रस्य संस्थायै प्रेषणाय च ॥ १६७ ॥

न विचारो रहस्यस्य कृतः कोऽपि सभागतैः ।
यदा तिलकविज्ञप्त्या समायाताः सभासदः ॥ १६८ ॥

आगरकरो न वित्तांशं स्वीचकारेति कथ्यते ।
तिलकोऽपि न जग्राह द्रव्यं तदिति दृश्यते ॥ १६९ ॥

अथ द्रव्यस्य किं भूतं जातं वा न विभाजनम् ।
संस्थायव्ययपत्राणां निपुणं वै समीक्षणम् ॥ १७० ॥

अस्ति सत्यान्वेषणायापरिहार्यं मतं मम ।
तदभावे कृता चर्चा संस्थावृत्तान्तपुस्तके ॥ १७१ ॥

कर्णेजपेन केनापि तिलकद्वेषकारणात् ।
आनीतं राजसचिवात् पत्रं, तदसमञ्जसम् ॥ १७२ ॥

विना ग्रन्थं यथा भाष्यं भवेत् संभ्रमकारकम् ।
तथा भ्रमोत्पादनाय भवेत् सर्वं न संशयः ॥ १७३ ॥

निन्दास्पदं कृष्णकृत्यं विस्तरेण न वर्ण्यते ।
कृष्णवर्णप्रकर्षाय कृष्णाङ्गारस्य घर्षणम् ॥ १७४ ॥

आप्टेसंबन्धिनीमन्यां दुरवस्थां वदाम्यहम् ।
यया विलुप्तं सौहार्दं वैमनस्यं समुद्गतम् ॥ १७५ ॥

संस्थोत्कर्षाय सततं वामनेन कृतः श्रमः ।
प्राचार्यः प्रथमश्चेति सर्वेषामेव संमतम् ॥ १७६ ॥

त्यागतत्त्वे च तस्यासीद् नैव श्रद्धा कदाचन ।
व्यवसायान्तरं कृत्वा प्राप्नुयाद् विपुलं धनम् ॥ १७७ ॥

अध्यापनातिरिक्ते स्वे समये ग्रन्थलेखनम् ।
आचार्यो द्रविणप्राप्त्यै कुर्यादित्याह वामनः ॥ १७८ ॥

ग्रन्थो विरचितस्तेन संस्कृताध्यायदर्शकः ।
छात्रप्रियोऽभवत् तस्माद् बहुद्रव्यमवाप सः ॥ १७९ ॥

उपक्रान्तो महान् कोशो भाषयोः संस्कृताङ्ग्लयोः ।
यदा तेन तदा दक्ष आर्यभूषणचालकः ॥ १८० ॥

लघुकोशं रचयितुं प्रार्थयामास वामनम् ।
वामनः समयाभावं स्पष्टमाचष्ट तं तदा ॥ १८१ ॥

वैद्यो विज्ञापितस्तेन लघुकोशस्य लेखनम् ।
कर्तुं मुद्रणसंस्थार्थं तदा वैद्यस्तु वामनम् ॥ १८२ ॥

पृष्टवान् लिखितव्यो वा लघुकोशो मयेति न ।
नोत्तरं सज्जनायास्मै वामनेन निवेदितम् ॥ १८३ ॥

वैद्यः कार्यं स्वीचकार तत्पश्चाद् वामनोऽवदत् ।
लघुकोशमहं कुर्यां मुद्रणालयवाञ्छितम् ॥ १८४ ॥

विज्ञापितश्चालकेन तिलकस्तं समादिशत् ।
समयं सह वैद्येन चालकः प्रतिपालयेत् ॥ १८५ ॥

हितहानेर्वामनोऽसौ तिलकाय चुकोप वै ।
आगर्कर उवाचापि तिलको द्वेष्टि वामनम् ॥ १८६ ॥

यन्त्रालयस्य लाभार्थमार्यभूषणचालकः ।
ऐच्छत् तु लघुकोशस्य कर्तुं शीघ्रं प्रकाशनम् ॥ १८७ ॥

कोशग्रथनतन्त्रस्य नान्यः कोऽपि विधानवित् ।
विज्ञाय वामनेनेति तद्विज्ञप्तिरनादृता ॥ १८८ ॥

वैद्येनाङ्गीकृतां श्रुत्वा लघुकोशस्य निर्मितिम् ।
वामनस्याभवच्चित्ते पश्चात्तापः स्वकर्मणः ॥ १८९ ॥

यदि वैद्यकृतः कोशो भवेत् पूर्वं प्रकाशितः ।
बृहत्कोशस्य यत्नो मे सर्वथा निष्फलो भवेत् ॥ १९० ॥

तद्धानिपरिहाराय लघुकोशस्य लेखनम् ।
सत्वरं वामनश्चैव कर्तुमभ्युद्यतः स्वयम् ॥ १९१ ॥

तिलकश्चालकस्यासीत् प्रधानो मार्गदर्शकः।
तत्कृतेन विरोधेन यत्नो जातो निरर्थकः॥ १९२ ॥

मित्रयोर्वैमनस्यं तज्जायते घर्षणात् कथम्।
व्यवहारात् स्वार्थमूलाद् ज्ञातव्यमिह श्रोतृभिः॥ १९३ ॥

विवादे स्वार्थिनोर्घोरे मध्यस्थो न्यायनिष्ठुरः।
चूर्णीभवेद् यथा धान्यं मुसलोलूखलान्तरे॥ १९४ ॥

मुद्रणालयसंस्थायै देयं सप्तशतं धनम्।
प्रार्थयामास तिलकः सभां संप्रेष्य पत्रकम्॥ १९५ ॥

मताधिक्येन निर्णीतं दातव्यमिति तद् धनम्।
यन्त्रालयाय नैवैच्छत् द्रव्यं दातुमगर्करः॥ १९६ ॥

ऐकमत्यं विना द्रव्यं न दातव्यमतःपरम्।
स्वीकृत्य तत्त्वमेवैतद् गोपालाय धनं ददौ॥ १९७ ॥

गोखले प्रार्थयामास स्वल्पे काले गते तदा।
रूप्याणां त्रिशतं मह्यमृणमित्येव दीयताम्॥ १९८ ॥

तद्विज्ञप्तिर्विचारार्थं सभायै च निवेदिता।
आगर्करेण तत्काले प्रस्तावोऽयं पुरस्कृतः॥ १९९ ॥

अपवाद इति ज्ञेयं गोखलेप्रार्थितं धनम्।
उत्सर्गस्यैकमत्यस्य पूर्वं स सभया कृतः॥ २०० ॥

विरुरोधापवादस्य प्रस्तावं तिलको यदा।
गोखले तु तदोवाच नाहमिच्छामि निर्णयम्॥ २०१ ॥

एवं वदति तस्मिंश्च सभास्थानं सभासदः।
तत्यजुः, प्राविशत् तत्र कलिः कोलाहलप्रियः॥ २०२ ॥

नियमस्य स्वबद्धस्य मित्रप्रेम्णातिलङ्घनम्।
एषा तत्त्वच्युतिः शोच्या समतोद्घोपकारिणाम्॥ २०३ ॥

तत्त्वापवादः कर्तव्यो मित्रार्थं यो जनोऽवदत् ।
सोऽरुधद् न्यायदानं च पक्षस्वार्थदुराग्रहात् ॥ २०४ ॥

अहो तस्य विरावोऽयं समाजान्यायनाशने ।
अरण्ये रुदितं जातं जनैश्च बहुभिः श्रुतः ॥ २०५ ॥

षण्मासान्ते च तिलक आचार्यपदसंस्थितः ।
गणितं शिक्षयामास छात्रान् विद्यालये पुनः ॥ २०६ ॥

या सभा सार्वजनिका पदं तत्कार्यदर्शिनः ।
अन्तिमो वादविषयस्त्यागपत्रे निदर्शितः ॥ २०७ ॥

तत्सभायाः कार्यवाहपदस्वीकृतिलालसः ।
गोपालः कृष्णपुत्रोऽभूदाचार्यो गोखलेऽभिधः ॥ २०८ ॥

तत्सभाङ्गीकृते कार्ये गोपालोऽध्यापको नवः ।
प्रोत्साहितो दधौ चित्तं रानडेप्रमुखैर्जनैः ॥ २०९ ॥

सदस्याः मिलिताः सर्वे निर्णेतुं तिलकाग्रहात् ।
स्वीकुर्यात् कोऽपि नाचार्यः परसंस्थापदं क्वचित् ॥ २१० ॥

प्रस्तावस्य समुद्देशः कथितस्तिलकादिभिः ।
स्वीकुर्याद् गोखले नैव संस्थायाश्चैव तत् पदम् ॥ २११ ॥

दास्यामि कारणं मुख्यं तिलकेन कृतस्य च ।
उपर्युक्तविरोधस्य विशेषेण यथाश्रुतम् ॥ २१२ ॥

काँग्रेसचोदिते नूत्नराजनीतिप्रसारणे ।
माहात्म्यं सार्वजनिकसभाया वर्णितं पुरा ॥ २१३ ॥

सभायाः प्रेरणा सर्वा रानडेवंश्यमाधवात् ।
राजनीतिरभूत् केन्द्रं सभा सा भारतेऽखिले ॥ २१४ ॥

तत्सभासचिवस्थानं भारते गौरवास्पदम् ।
न योग्यास्तदलंकर्तुं शिक्षासंस्थासभासदः ॥ २१५ ॥

अनन्यव्यवसायेन राजकारणधर्मिणा ।
स्वीकार्यं तद् महत् स्थानं देशकल्याणकाङ्क्षिणा ॥ २१६ ॥

राजकीयसमस्यानां यस्य शाश्वतचिन्तनम् ।
न तस्यावसरप्राप्तिः कार्यान्तरसमीक्षणे ॥ २१७ ॥

प्रभुर्भवति नाचार्यः पालनस्य स्वकर्मणः ।
विनाद्ययावज्ञानेन शास्त्रसाहित्ययोः सदा ॥ २१८ ॥

एकस्मिन् पुरुषे नैव संस्थितं दृश्यते द्वयम् ।
क्रियावान् राजनीतिज्ञश्छात्राणां च गुरुर्महान् ॥ २१९ ॥

सुज्ञा अनुमतिं दद्युः प्रस्तावस्य सभागताः ।
प्रार्थयामास तिलको विद्यालयहितेच्छया ॥ २२० ॥

प्रतिकूलास्त्रयस्तस्यानुकूलाः षट् सभासदः ।
प्रस्तावो बहुसंख्याकैः सभासद्भिः सुसंमतः ॥ २२१ ॥

आपटेगोखलेभानूनामानस्तद्विरोधिनः ।
आगरकर उदासीन इतरे च समर्थकाः ॥ २२२ ॥

केळ्करस्तिलको नामजोशी गोळेऽथ धारपः ।
पाटण्करश्चानुकूलं प्रस्तावस्य मतं ददुः ॥ २२३ ॥

पुरस्कृतोऽन्यः प्रस्तावोऽगरकरेण ततः परम् ।
प्रस्तावाद् वै दोषयुक्ताः सन्तीतरसभासदः ॥ २२४ ॥

उवाचागरकरः क्रुद्धो गोखलेऽपेक्षयाधिकम् ।
मतदानं सुकर्तव्यं सभासद्भिः पृथक् पृथक् ॥ २२५ ॥

मतप्रदर्शनं जातं तस्योपरि यथाविधि ।
केळ्करो धारपो भानुर्निर्दोषाः, संशयस्थितिः ॥ २२६ ॥

पाटण्करस्येतरे च दोषभाजः सभासदः ।
तत्रैव तिलको हस्ते ददौ पत्रं सभासदाम् ॥ २२७ ॥

सदोषेष्वहमप्येको जातः संप्रति निर्णयः ।
संत्यजामि सदस्यत्वं सभायाः क्षम्यतां बुधैः ॥ २२८ ॥

मासस्य दशमस्यैतदासीदह्नि चतुर्दशे ।
नवत्यष्टादशशते यैशवीये शके शुभे ॥ २२९ ॥

गोपालो गोखलेवंश्यो ददावेकं स्वपत्रकम् ।
त्यजाम्यहमपि स्थानमिति तस्याशयोऽभवत् ॥ २३० ॥

त्यजेद् यदि सभां नैव तिलको निर्गमेन मे ।
त्यागपत्रं मया दत्तं स्वीकुर्युस्तत् सभासदः ॥ २३१ ॥

सभायामागमः कस्य निर्गमो वा सभासदः ।
कारणं त्यागपत्रस्य तिलकेन न दर्शितम् ॥ २३२ ॥

त्यागपत्रमतो दत्तं गोपालेन न संमतम् ।
अपागृह्णात् स तत् पत्रं सदस्यानां विनिर्णयात् ॥ २३३ ॥

कार्यवाहपदं नाहं सभाया वै सभासदाम् ।
तन्निर्णयानुसारेणं गोखले दोषभागभूत् ॥ २३४ ॥

उल्लेखो न कृतस्तेन तस्य स्वत्यागपत्रके ।
अप्रस्तुतविनिर्देशाज्जातं तज्जलताडनम् ॥ २३५ ॥

पदत्यागस्य नादेशं प्रस्तावे स्वे सभा ददौ ।
ददुः सभासदस्तस्मिन् गोपालाय स्वतन्त्रताम् ॥ २३६ ॥

सिषेवे तिलकः संस्थामेकध्येयेन चोदितः ।
तनूमनोधनैः स्वीयैरेकादश समाः कृती ॥ २३७ ॥

दिसेम्बरे पञ्चविंशे दिने पत्रं समार्पयत् ।
सविस्तरं सुसंबद्धं त्यागकारणबोधकम् ॥ २३८ ॥

तत्त्यागे विह्वलो जातो वेदनापीडितो हृदि ।
एकपुत्रो भवेद् दुःखी यथा पुत्रस्य मृत्युना ॥ २३९ ॥

तिलकस्य महद् ध्येयं कार्यतादात्म्यजीवनम् ।
वेदान्तेषु यदाख्यातं तत्त्वमात्मसमर्पणम् ॥ २४० ॥

असिधाराव्रतमिदमत्युग्रं बत कर्कशम् ।
आपटेऽगरकरादीनां दुश्चरं च सुदुर्लभम् ॥ २४१ ॥

विहाय तत् तपो घोरं सुगमो मार्ग आश्रितः
न चात्युष्णो नातिशीतः क्षुण्णो बहुजनैर्मुहुः ॥ २४२ ॥

महतीं प्रगतिं चक्रुरापटेऽगरकरादयः ।
विद्यालयस्यात्मकाले गत्वा क्षुण्णेन वर्त्मना ॥ २४३ ॥

विस्तारो जडदेहस्य निकषो न समुन्नतेः ।
विवेकिनां नराणां च धीमतामात्मदर्शिनाम् ॥ २४४ ॥

गुणप्रकर्षो निकषो निरपेक्षो जडाकृतेः ।
अपेक्षते गुणोत्कर्षमन्तर्यामी शरीरिणाम् ॥ २४५ ॥

तुम्बी प्रवर्धते शीघ्रं धत्ते स्थूलफलानि च ।
न तयोद्यानशोभाया वर्धनं ज्ञानिनां मते ॥ २४६ ॥

परिपोषस्त्यागवृत्तेः सत्कार्यार्पणनिश्चयः ।
प्रवृत्तिर्जनसेवाया उच्चध्येयस्य दर्शनम् ॥ २४७ ॥

धारयन्ति हि ये वृक्षाः सुधास्वादुफलानि च ।
तेषां संवर्धनादेव संस्थोद्यानसमुन्नतिः ॥ २४८ ॥

न कस्तूरीमृगाः सर्वे नेपालविपिनेचराः ।
न च हंसाः समस्ता ये मानसस्य पतत्रिणः ॥ २४९ ॥

क्वचिद् दृष्टिपथं यान्ति हंसा विरलदर्शनाः ।
न च सर्वे तत्त्वनिष्ठा ये कार्यकुशला जनाः ॥ २५० ॥

बालगोपालयोर्मध्ये मतभेद उपस्थितः ।
इमे द्वे मूलतत्त्वे स्तो यावज्जीवसभासदाम् ॥ २५१ ॥

सभानियोजितादन्यः कर्तव्यो न समुद्यमः ।
व्यवसायान्तरप्राप्तं धनं संस्थाधनं भवेत् ॥ २५२ ॥

वादकाले तत्त्वयुग्मं गोखलेसंमतं न तु ।
अल्पत्वाद् वयसो मन्येऽभावादनुभवस्य च ॥ २५३ ॥

समाजः स्थापितस्तेन नवो भारतसेवकः ।
योऽभूद् विश्वश्रुतः शाके प्राणखग्रहभूमिते ॥ २५४ ॥

घटनायाः समाजस्य नियमेषु तु सूत्रितम् ।
स्वार्थाय नोद्यमं कुर्याद् न च द्रव्यं समाप्नुयात् ॥ २५५ ॥

तदेव स्वीकृतं तत्त्वं गान्धिनाऽऽश्रमकर्मणि ।
साबर्मत्यां तथा सेवाग्रामे चान्याश्रमेषु च ॥ २५६ ॥

एवं तिलकतत्त्वस्य महत्त्वं सर्वसंमतम् ।
प्रेरितास्तेन तत्त्वेन स्वातन्त्र्याहवसैनिकाः ॥ २५७ ॥

स्वातन्त्र्यप्राप्तियत्नस्य विद्यालय उपक्रमः ।
चिन्तितं तिलकेनैवं मन्ये मनसि संततम् ॥ २५८ ॥

युद्धे वा शमकाले वा स्वातन्त्र्यप्राप्तये तथा ।
छात्रा भवेयुः कर्तव्ये दक्षास्त्यागपरायणाः ॥ २५९ ॥

आचार्याणां भवेत् तेषामादर्शः सत्प्रवर्तकः ।
आचार्यास्त्यागवृत्त्यैव समर्था मार्गदर्शने ॥ २६० ॥

त्यागपत्रे स्वदोषोऽपि तिलकेन निदर्शितः ।
वाक्संयमं वादकाले न करोमि वदाम्यहम् ॥ २६१ ॥

कटून् शब्दानयं दोषः स्वभावो दुरतिक्रमः ।
याचित्वाथ क्षमां बालस्त्यागपत्रं समार्पयत् ॥ २६२ ॥

निर्बन्धस्तिलकस्यासीत् स्वीयध्येयस्य पालने ।
समग्रं चरितं दृष्ट्वा निर्णयोऽयं मया कृतः ॥ २६३ ॥

सभासंस्थापका सर्वे विद्वांसो गुणवत्तमाः ।
विद्यादानस्य सत्कार्यं कृतं तैर्दक्षिणापथे ।। २६४ ।।

महाराष्ट्रजनास्तेषामधमर्णा निरन्तरम् ।
महाराष्ट्रे च सर्वत्र तेषां विद्यार्थिनो बभुः ।। २६५ ।।

लोकोपयोगिकार्याणां संचालनसमुत्सुकाः ।
देशभक्तियुताश्चक्रुर्लोकानां मार्गदर्शनम् ।। २६६ ।।

फर्ग्यूसनमहाविद्यालयस्याचार्यपण्डिताः ।
प्रशंसार्हा माननीयाश्छात्रवर्गोपकारकाः ।। २६७ ।।

ध्वस्तं तेषां प्रयत्नेन महाराष्ट्रगतं तमः ।
सुग्रन्थानां लेखनेन व्याख्यानैश्च प्रकाशनैः ।। २६८ ।।

विद्वन्मणिर्वैजनाथो गोपालो राजनीतिविद् ।
कर्झनस्य प्रतिस्पर्धी वाग्मी नूनं बृहस्पतिः ।। २६९ ।।

कर्वेवंश्यो धुण्डिराजः स्त्रीणां दास्यविमोचकः ।
परांजपे रँग्लरश्च विश्वकीर्तिर्विदां वरः ।। २७० ।।

अन्येऽपि बहवः सन्ति भारते मान्यतां गताः ।
संस्थाया गौरवार्थं ये त्यागपूर्वं प्रयेतिरे ।। २७१ ।।

अध्यापकोत्तमानेतान् सादरं प्रणमाम्यहम् ।
यद्यवद्यं मल्लिखिते प्रार्थये कुरुत क्षमाम् ।। २७२ ।।

ऐच्छद् बालो निजजननभूपासनासक्तचित्तो
मित्रैः सार्धं जनहितकरं शिक्षणस्य प्रदानम् ।
कर्तुं संस्थां भुवनविदितां स्थापयामास धीर-
स्तद्वृद्ध्यर्थं सततमकरोत् त्यागपूर्वं प्रयत्नान् ।। २७३ ।।

दृष्ट्वा तत्त्वच्युतिमतितरां स्नेहिनां त्यागमार्गाद्
बद्धस्नेहं विषमसमये स्वास्थ्यसिद्धिप्रयत्नैः ।

संस्थापत्यं व्यथितहृदयोऽसौ जहौ तत्त्वनिष्ठ-
स्तत्त्वभ्रंशात् स्वजनविरहस्त्यागिनः स्वागतार्हः ॥ २७४ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकत्यागपत्रदानं नाम एकादशस्तरङ्गः ।

## द्वादशस्तरङ्गः

आसीत् क्राफर्डनामैको जिल्हाधीशो युरोपजः।
'आय् सी एस' परीक्षायां यशः प्राप्येह चागतः ॥ १ ॥

उवास कोङ्कणे देशे महाराष्ट्रे चिराय सः।
लोकभाषासुनिपुणः स्वाधिकारपदे स्थितः ॥ २ ॥

एतद्देशीयलोकैश्च सदा संपर्कतत्परः।
मित्राणां परिवारोऽस्य नगरे खेटकेष्वपि ॥ ३ ॥

आतिथ्यकौशलं तस्य जातं लोके सुविश्रुतम्।
कुतोऽस्य धनलाभः स्यादायादपि व्ययोऽधिकः ॥ ४ ॥

इति संशयितं जातं तदा क्राफर्डवैभवम्।
राजसेवाव्यापृतानां युरोपीयाधिकारिणाम् ॥ ५ ॥

अन्यायोपार्जितं द्रव्यं क्राफर्डस्येति सज्जनाः।
अब्रुवंश्च कलङ्कोऽयमाङ्ग्लानां शासने महान् ॥ ६ ॥

गुप्तं त्वपि चिरं कालं प्रकटीभवति पातकम्।
येन केन निमित्तेन शरीरे गुप्तरोगवत् ॥ ७ ॥

उदारचित्ते रेनाम्नि प्रान्तस्याधिपतौ सति।
क्राफर्डदूषणप्रश्नश्चर्चितस्तस्य मन्त्रिभिः ॥ ८ ॥

करोति कार्यं क्राफर्डो नित्यमुत्कोचदायिनः।
इतीदमयशस्तस्य प्रसृतं सर्वतो जने ॥ ९ ॥

भ्रष्टास्तदङ्किता भृत्याः प्रायस्तेऽन्यायकारिणः।
संप्रापुर्मामलेदारीं द्रव्यं दत्त्वा जनास्तदा ॥ १० ॥

न्यायालयो विपणतां गतो न्यायस्य विक्रयात्।
जना एवं वदन्ति स्म व्यवहारविचक्षणाः ॥ ११ ॥

क्राफर्डार्थार्थिनोर्मध्ये देयद्रव्यविनिर्णये।
केचिल्लब्धप्रतिष्ठास्ते मध्यस्था अभवञ्जनाः॥ १२॥

एवं स्वार्थं परार्थं च साधयन्ति हि सर्वदा।
समाजकण्टका एते नित्यं सत्यापलापिनः॥ १३॥

समुद्भवन्ति सर्वत्र पर्जन्ये छत्रका यथा।
क्राफर्डः सकलानर्थमूलमित्यब्रवीज्जनः॥ १४॥

अधिकारिजनोऽन्यायी क्राफर्डे शासके सति
सभ्या इत्यादृतास्तेन कण्टकाः पापजीविनः॥ १५॥

जनताया अधीनायाः साम्राज्योद्देशपूर्तये।
न्यायप्रियत्वे कर्तव्यो विश्वासः स्वाधिकारिणाम्॥ १६॥

क्राफर्डस्य दुराचाराद् न्यायकीर्तिः कलङ्किता।
आङ्ग्लाधिकारिणां नूनं न्यायप्रौढिर्विलोपिता॥ १७॥

उदारचेताः प्रान्तेशो रेनामा सत्यनिश्चयः।
क्राफर्डस्यापकृत्यानां समीक्षां कर्तुमादिशत्॥ १८॥

ओमेनः समनुज्ञातो गुप्तचारदलाधिपः।
पेंडसे भीमभाई च तत्साहाय्ये नियोजितौ॥ १९॥

तिलकः केसरीपत्रे प्रान्तेशं साभिनन्दति।
लोकान् विज्ञापयामास साहाय्यं क्रियतामिति॥ २०॥

पापं च प्रकटीकर्तुं यूरोपीयाधिकारिणः।
संरक्षणं प्रतिज्ञेयं प्रान्तेशेन च साक्षिणाम्॥ २१॥

सत्यं ब्रुवन्तु ते कृत्वा विश्वासमधिकारिषु।
स्वलेखैस्तिलकेनैवं कृता लोकानुकूलता॥ २२॥

ततस्ते मामलेदाराः सत्यावेदनतत्पराः।
पेंडसेभीमभाईभ्यां कृता दीर्घप्रयत्नतः॥ २३॥

मामलेदारपदस्थेभ्यो येभ्यो धनमवाप सः ।
आश्वासिता बभूवुस्ते शासनेन च साक्षिणः ॥ २४ ॥

क्राफर्डानुचरो नीचो न्यवसत् पुण्यपत्तने ।
हनुमत्संज्ञकः कश्चिदन्यायाद् द्रव्यशोषकः ॥ २५ ॥

कुबुद्धिः पिशुनः पापः क्राफर्डहितचिन्तकः ।
विलासी विषयासक्तः स्वार्थमग्ननमस्कृतः ॥ २६ ॥

अन्याय्यद्रव्यदानार्थं निगृहीतोऽधिकारिभिः ।
क्राफर्डोऽपि स्वाधिकाराच्च्यावितः शासनाज्ञया ॥ २७ ॥

विहाय स निजावासं न्यवसत् पथिकालये ।
उपायं चिन्तयामास निर्गन्तुं भारताद् बहिः ॥ २८ ॥

जुलैमासे सप्तदश्यां रात्रौ स च पलायितः ।
पुण्यग्रामे श्रुता वार्ता सर्वैः सा विस्मयावहा ॥ २९ ॥

तत्स्थानप्राप्तपत्रे च लिखितं पापकारिणा ।
अपलापाय सत्यस्य क्राफर्डेन दुरात्मना ॥ ३० ॥

दुःसहं जीवितं मन्ये जनैः सभ्यैस्तिरस्कृतम् ।
जले देहावपातेन मम प्राणान् त्यजाम्यहम् ॥ ३१ ॥

मुळामुठाप्रवाहेऽहं विसृजामि कलेवरम् ।
प्रेताप्त्यै क्रियतां यत्नः प्रवाहे बन्धसंनिधौ ॥ ३२ ॥

भ्राता तस्याकरोद् यत्नमन्येद्युर्धीवरैः सह ।
तदा लब्धं च तत्प्रेतं निपुणैर्नाविकैर्युतः ॥ ३३ ॥

आयातः स्थानकाध्यक्ष ओमेनाय न्यवेदयत् ।
लब्धं यत् स्थानके वृत्तं सुगूढं संशयास्पदम् ॥ ३४ ॥

कृत्वा वेषान्तरं कश्चिदाङ्ग्लोऽग्निरथमाविशत् ।
प्रस्थानकाले सहसा पुणेमुम्बइगामिनम् ॥ ३५ ॥

आपादलम्बिनाच्छाद्य देहं दीर्घेण वाससा ।
और्णेन कलितग्रीव उष्णीषाच्छादिताननः ॥ ३६ ॥

क्राफर्डो गुप्तरूपेण पुण्यग्रामात् पलायितः ।
जलयानेन कल्याणाद् गन्तुमिच्छुः स मुम्बईम् ॥ ३७ ॥

नाशक्नोद् बहिरायातुं कल्याणस्थानके भयात् ।
गत्वा भायखळास्थानं विजयावासमाविशत् ॥ ३८ ॥

लङ्कां प्रस्थातुकामोऽसौ जलयानेन सत्वरम् ।
प्रवेष्टुं तच्च नाशक्नोद् निगृहीतश्च रक्षकैः ॥ ३९ ॥

न्यायसद्मन्युपस्थित्यै प्रत्यानीतः पुणेपुरीम् ।
प्रथमेऽहनि चागस्टे श्रवणाय सुनिश्चितः ॥ ४० ॥

हनूमतः प्रकरणे न्यायाधीशः कुशाग्रधीः ।
अश्रौषीदेकचित्तेन कथितं सर्वसाक्षिभिः ॥ ४१ ॥

आक्षेपकारोपिताभ्यां न्यायस्थाने पुरस्कृतैः ।
विचार्य भाषणं सम्यग् दत्तमन्ते प्रवादिभिः ॥ ४२ ॥

हनूमता कृतोऽन्यायः कृत एवं विनिर्णयः ।
वर्षद्वयावधिर्वासः कारायां तस्य निःश्रमः ॥ ४३ ॥

मुद्रासहस्रं दण्डार्थं दद्याद् द्विगुणितं च सः ।
जनाः श्रुत्वाभवन् भीता निर्णयं न्यायनिष्ठुरम् ॥ ४४ ॥

क्षमाप्रलोभनाकृष्टाः साक्षिणो भयकातराः ।
आत्मानं मेनिरे सर्वे जालबद्धा खगा इव ॥ ४५ ॥

न्यायालये न कर्तव्यं क्राफर्डान्यायवीक्षणम् ।
स्थापितं शासनेनैव समीक्षामण्डलं पृथक् ॥ ४६ ॥

क्राफर्डस्यापकृत्यानि तदारम्भो समीक्षितुम् ।
कृत आक्टोबरस्यान्ते मण्डलेन यथाविधि ॥ ४७ ॥

अन्वेषणाय दोषाणां क्राफर्डस्याधिकारिणः ।
तत्राङ्ग्ला अभवन् केचित् सहकार्यपराङ्मुखाः ॥ ४८ ॥

पक्षद्वयं समीक्षायां संजातं सहकारिषु ।
नूनं दोषविचारेऽस्मिन् क्राफर्डस्यापराधिनः ॥ ४९ ॥

तयोः प्रवादिनोरन्त्यभाषणादनुमीयते ।
क्राफर्डस्यापकीर्तिर्या साङ्ग्लप्रौढिविनाशिनी ॥ ५० ॥

भवेदित्येव भीत्या ते तद्गर्हायामनुत्सुकाः ।
प्रत्युतास्य च ते जाता अनुकूलाः समर्थने ॥ ५१ ॥

समीक्षान्ते शासनस्य प्रवादी लेथमोऽवदत् ।
आरम्भेऽपि समीक्षाया आक्षेपाणां कृतागसि ॥ ५२ ॥

कृतानां शासनस्यैव विषादोऽभूद् महान् खलु ।
आग्रहो वै शासनस्य दण्डने चापराधिनः ॥ ५३ ॥

भवेद् मोदाय चास्माकं यदि मण्डलनिर्णयः ।
क्राफर्डस्यानुकूलः स्यादाह प्रवदतां वरः ॥ ५४ ॥

अनावश्यक उल्लेखो भाषणस्य प्रवादिनः ।
इन्व्हरारिटिसंज्ञस्य तददोषत्वदर्शिनः ॥ ५५ ॥

जानेवारीमासमध्ये मण्डलेन समर्पितम् ।
इतिवृत्तं समीक्षाया हिन्दामात्याय लन्दने ॥ ५६ ॥

अन्यायेन धनावाप्तिरसिद्धेति विनिर्णयः ।
जग्राहर्णं स लोकेभ्य इति सिद्धं च तन्मते ॥ ५७ ॥

क्राफर्डो दोषभाक् सिद्ध उभयाक्षेपयोरिति ।
प्रशासनेन मुम्बय्याः स्वमतं च प्रदर्शितम् ॥ ५८ ॥

संमतोऽभूदमात्यस्य मण्डलप्रोक्तनिर्णयः ।
क्राफर्डो भ्रंशितः स्थानादित्यादेशः प्रवर्तितः ॥ ५९ ॥

क्राफर्डस्य प्रकरणं चर्चाया विषयोऽभवत् ।
मासपञ्चकपर्यन्तं लेखभाषणयोस्तथा ।। ६० ।।

मण्डलस्य समीक्षाया इतिवृत्तप्रतिक्रिया ।
जनश्रद्धा विचलिता न्यायदानस्य पद्धतौ ।। ६१ ।।

न राजा कुरुतेऽन्यायमिति न्यायविदां मतम् ।
ग्रन्थेषु घटनायाश्च लिखितं चोपलभ्यते ।। ६२ ।।

न पदाधिष्ठितश्चाङ्ग्लो दोषी भवति पापकृत् ।
मन्ये तत् स्वीकृतं तत्त्वं भारते राज्यकर्तृभिः ।। ६३ ।।

क्राफर्डः स्वपदभ्रष्टः सपत्नीकोऽगमद् गृहम् ।
योगक्षेमाय तत्पत्न्यै दत्तं वर्षासनं तदा ।। ६४ ।।

माम्लेदारपदस्थास्ते शोचनीयां स्थितिं गताः ।
साक्षीभूयात्मदोषा यैर्न्यायालयनिवेदिताः ।। ६५ ।।

तिलकः केसरीपत्रे शासनाय न्यवेदयत् ।
माम्लेदारपदस्थास्ते रक्षणार्थं प्रतिश्रुताः ।। ६६ ।।

साक्षिकार्यार्थमाहूताः क्षमाश्वासनपूर्वकम् ।
अपालनं स्ववचसो भवेद् विश्वासघातकम् ।। ६७ ।।

स्थले कबूतरखानाख्ये जाता पौरमहासभा ।
तस्याः प्रवर्तका आसन् रानडेप्रमुखास्तदा ।। ६८ ।।

माम्लेदाराः स्थापनीयाः स्वाधिकारपदे पुनः ।
तत्र प्रमुखवक्तारो गोखलेतिलकादयः ।। ६९ ।।

आसीद् नूलकरो मान्यः सभाध्यक्षपदे तदा ।
सभायामेष प्रस्ताव ऐकमत्येन संमतः ।। ७० ।।

व्याख्यानमाद्यमेवैतत् तिलकस्येति गण्यते ।
सभायां यच्च पौराणां प्रदत्तं पुण्यपत्तने ।। ७१ ।।

केन्द्रीयशासनेनाथ विधेयकसुरक्षिताः ।
ते सर्वे मामलेदारा दण्डाद् वान्यप्रधर्षणात् ॥ ७२ ॥

ततोऽधिवेशने राष्ट्रसभायाः प्रान्तसंसदः ।
माम्लेदारानुकूलः स प्रस्तावः संमतोऽभवत् ॥ ७३ ॥

तेषां हिताय तिलकश्चक्रे लोकानुकूलताम् ।
न हानिः साक्षिणां कापि भवत्विति तु तन्मतम् ॥ ७४ ॥

केचिज्जाताः पदभ्रष्टाः केचिद् दूरीकृताः पदात् ।
केचित् संरक्षिताः स्थाने साक्षिणां त्रिविधा दशा ॥ ७५ ॥

स्थानस्थितानां नो जाता हानिः कापि कथंचन ।
शासनेन कृतो भेदः शेषयोर्वर्गयोस्तदा ॥ ७६ ॥

बलात्कारेण लोभेन तथान्यायप्रवर्तनम् ।
पूर्ववर्गः कृपापात्रं हेयः स्यादपरोऽधमः ॥ ७७ ॥

पूर्वस्य च विना वृद्धिं प्रदेयं नित्यवेतनम् ।
दानाद्धानिर्विनाशस्य चापरोऽनर्ह एव च ॥ ७८ ॥

सेवानिवृत्तौ वृत्त्यर्थं धनं देयं यथाक्रमम् ।
तदानीं शासनेनैवमाज्ञापत्रं प्रवर्तितम् ॥ ७९ ॥

अन्त्यादेशोऽन्यायमूल इत्येवं डिग्बयेऽलिखत् ।
तिलकः सार्वभौमेन कर्तव्यं परिमार्जनम् ॥ ८० ॥

पार्लमेंटेऽस्य प्रश्नस्य चर्चायाः समुपक्रमः ।
उपायः कोऽपि कर्तव्य उक्तदोषनिवारणे ॥ ८१ ॥

आङ्ग्लादीनां च साह्येन मन्त्रिमण्डलसंमुखम् ।
स्थापनीयः कृतो घातो विश्वासस्याधिकारिभिः ॥ ८२ ॥

विचाराणां विनिमयात् पत्रद्वारेण लब्धवान् ।
आनुकूल्यं हि तिलकः केषांचन सभासदाम् ॥ ८३ ॥

आङ्ग्लादिकानामाङ्ग्लानां पार्लमेंटसभागृहे।
संघो वै हिन्दपक्षीयो नूतनोऽतीव दुर्बलः ॥ ८४ ॥

न किंचिदपि कर्तुं तेऽशक्नुवन् मन्त्रिमण्डले।
हिन्दमन्त्रिप्रातिकूल्याद् निष्फलोऽभूत् परिश्रमः ॥ ८५ ॥

अन्यायदलितानां तु करुणाप्रेरितः सखा।
तिलकोऽयं पुण्यपुर्यामिति सर्वे व्यजानत ॥ ८६ ॥

धनाढ्यः क्राफर्डो नयरहितमार्गार्जितवसुः
स्थितो निर्दोषोऽसौ कथयति कथं न्यायनिपुणः।
कथं दण्ड्या जाताः प्रचुरमभयाश्वासितजना
जनः साशङ्कः सन् वदति कुटिला न्यायसरणिः ॥ ८७ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे क्राफर्डोपकृत्याविष्करणाख्यो द्वादशस्तरङ्गः।

# त्रयोदशस्तरङ्गः

शिक्षणव्यवसायं च त्यक्त्वा च सहकारिणः ।
आदधे तिलकश्चित्तं वृत्तपत्रप्रकाशने ॥ १ ॥

तिलकः केळ्करश्चापि नारायणसुतो हरिः ।
त्रयस्ते भागिनश्चासन् पत्रमुद्रणकर्मणि ॥ २ ॥

विभक्ता अभवन् सर्वे स्वल्पकालादनन्तरम् ।
पत्रे द्वे च तृतीयांशो द्वावंशौ मुद्रणालयः ॥ ३ ॥

सहितं वृत्तपत्राभ्यामृणं सप्तसहस्रकम् ।
लेभे स्वभागं तिलको गोखले मुद्रणालयम् ॥ ४ ॥

ऋणस्य प्रतिदानाय केसरीपत्रलाभतः ।
स्वं भागं तिलकः प्रादादुत्तमर्णाय वार्षिकम् ॥ ५ ॥

परीक्षामुक्तितीर्षुभ्यः प्रवादित्वपदाप्तये ।
तिलकोऽध्यापयामास विषयांश्च नियोजितान् ॥ ६ ॥

छात्रशुल्कमभूत् तस्य योगक्षेमस्य साधनम् ।
गृहस्थाश्रमधर्मस्य कुटुम्बभरणस्य च ॥ ७ ॥

कर्णाटके महाराष्ट्रे खानदेशेऽपि सर्वतः ।
प्रवादिव्यवसाये च तच्छिष्या मान्यतां गताः ॥ ८ ॥

पञ्चविंशायने युद्धे तिलकाङ्ग्लाधिकारिणोः ।
तिलकादेशकर्तारो विश्वासार्हाश्च निर्भयाः ॥ ९ ॥

उद्यमो वृत्तपत्रस्य राजपक्षविरोधकः ।
सत्ताधीशप्रातिकूल्याच् शतविघ्नसमाकुलः ॥ १० ॥

अध्यापनं च छात्राणां वृत्तपत्रे च लेखनम् ।
नालं पूर्त्यै जीविकाया व्यसने समुपस्थिते ॥ ११ ॥

एवं विचार्य तिलको निर्मातुं स्थिरसाधनम् ।
अन्यल्लाभप्रदं येत आङ्ग्लराज्याद् बहिःस्थितम् ॥ १२ ॥

तृतीयोद्योग आरब्धस्तिलकेन विपश्चिता ।
निजामशाहीसंस्थाने ग्रामे लातूरसंज्ञके ॥ १३ ॥

पृथक्कर्तुं च कार्पासात् तद्बीजं यन्त्रमानयत् ।
तत्स्थापनाय तिलको यन्त्रशालां विनिर्ममे ॥ १४ ॥

निजामराज्ये लातूरे दूरस्थे लोहवर्त्मनः ।
"कॉटन् जिनिंग् फॅक्टरी" ति तदुद्योगगृहाभिधा ॥ १५ ॥

तत्र द्वौ भागिनावास्तां पुण्यपत्तनवासिनौ ।
तिलकोऽदादृणं कृत्वा रूप्याणां शतगुणं शतम् ॥ १६ ॥

ददौ दशसहस्राणि प्रत्येकस्तद्विनिर्मितौ ।
उद्योगस्याभिवृद्ध्यर्थं भागिनोः पुण्यवासिनोः ॥ १७ ॥

भागिनेयो धुण्डिराजस्तिलकेन नियोजितः ।
आत्मप्रतिनिधित्वेन नवोद्योगसमीक्षणे ॥ १८ ॥

विद्यालयत्यागकाले तिलकस्य कुटुम्बकम् ।
पत्नी साध्वी सत्यभामा चापत्यानां चतुष्टयम् ॥ १९ ॥

विश्वनाथो ज्येष्ठपुत्रोऽनुपनीतस्तदग्रजा ।
कृष्णैका मथुरादुर्गेऽवरजे शैशवस्थिते ॥ २० ॥

भागिनेयौ शिक्षणाय मातुलावाससंस्थितौ ।
गङ्गाधरो धुण्डिराजः कोङ्कणात् तत्र चागतौ ॥ २१ ॥

धुण्डिराजः कृताध्यायो गृहकृत्ये विशेषतः ।
दक्ष आसीद् मातुलस्य प्रेम संपादयन् बहु ॥ २२ ॥

धोंडोपंतेतिनामासौ ख्यातिं प्राप व्यवस्थया ।
पत्रसंस्थाकुटुम्बानामापत्कालेऽपि भीषणे ॥ २३ ॥

सहस्रबुद्धे तिलकस्तृतीयश्च परांजपे।
सहस्रबुद्धे त्वभवत् तेषु संचालकस्त्रिषु ॥ २४ ॥

साहाय्यमकरोद् गत्वा धुण्डिराजोऽथ लातुरम्।
परांजपे गृहे स्वस्थो नागच्छल्लातुरं कदा ॥ २५ ॥

सहस्रबुद्धे तत्याज कालेऽतीते च लातुरम्।
अक्रीणात् तस्य भागं वै पुणेवासी परांजपे ॥ २६ ॥

तिलकस्य तृतीयांशो द्विगुणश्चान्यभागिनः।
तदुद्योगव्यवस्थायै न तु कोऽपि नियोजितः ॥ २७ ॥

उद्योगाद् न भवेल्लाभो निरीक्षकजनं विना।
विश्वासार्हं तथोद्यानाद् मालाकारं विना यथा ॥ २८ ॥

स्वामिनोरुभयोरेवमन्यस्थाननिवासिनोः।
न हि लाभप्रदो जातो भाति मे लातुरोद्यमः ॥ २९ ॥

तिलकेन समाज्ञप्तः समायातुं गृहं प्रति।
धुण्डिराजः पुण्यपुर्यां सङ्कटे समुपस्थिते ॥ ३० ॥

कृत्वा कुटुम्बभरणार्थमुपायमेवं
देशोन्नतिप्रदपथं तिलकोऽन्वगच्छत्।
अज्ञानदैन्यहतदुर्बललोकचिन्तां
धीरः परार्थघटकः सततं चकार ॥ ३१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे योगक्षेमचिन्तनं नाम त्रयोदशस्तरङ्गः।

# चतुर्दशस्तरङ्गः

विभूषणं समाजस्य शिक्षया संस्कृतो जनः ।
पूज्यते सभ्यशिष्टैश्च देशे द्वीपान्तरेष्वपि ॥ १ ॥

नोपयुङ्क्ते जडद्रव्यं संस्कारेण विनागदे ।
इच्छन् रोगप्रतीकारं दक्षः कोऽपि चिकित्सकः ॥ २ ॥

संजीवनी भवेद् वल्ली विषबीजापि संस्कृता ।
असंस्कृतः पुरोडाशो विषमात्राय कल्पते ॥ ३ ॥

भूम्यां संस्कारहीनायां बीजावापश्रमो वृथा ।
तस्यां संस्कारयुक्तायां बीजाद् धान्यं प्ररोहति ॥ ४ ॥

शरीरं मन आत्मा च त्रीणि तत्त्वानि देहिनः ।
दृश्यन्तेऽखिलपिण्डेषु ब्रह्माण्डे संप्रतिष्ठिते ॥ ५ ॥

स्त्रीपुंसयोः समत्वं च त्रिषु तत्त्वेषु विद्यते ।
तेषां समानाः संस्कारा इत्याहुः केऽपि पण्डिताः ॥ ६ ॥

व्यायामश्च शरीरस्य स्वाध्यायो मनसस्तथा ।
प्राज्ञाः संस्कार इत्याहुरात्मनो ब्रह्मचिन्तनम् ॥ ७ ॥

आङ्ग्लविद्यालयेष्वेव स्वीकृता शिक्षणप्रथा ।
बुद्धिप्रामाण्यभूयिष्ठा जाता लोकप्रिया शनैः ॥ ८ ॥

शिक्षितानां शासकीये स्थितिः सेवापदे स्थिरा ।
द्रव्यलाभप्रदा चासील्लोके संमानवर्धिनी ॥ ९ ॥

शिक्षणप्रथयाकृष्टास्तत्र ते द्विविधा जनाः ।
उत्सेधजीविनः केचिदपरे बुद्धिजीविनः ॥ १० ॥

सुशिक्षितजनो जातः कायश्रमपराङ्मुखः ।
बुद्धिजीवी प्रसक्तश्चाधिकारे द्रव्यलोलुपः ॥ ११ ॥

त्यक्त्वा जनपदाँल्लोका बुद्धिमन्तस्तदा खलु ।
प्रभुत्वं भृत्यतां चाप्तुं शिक्षार्थं नगरं ययुः ॥ १२ ॥

चिकीर्षा भावना ज्ञप्तिरित्येषा त्रिविधा स्थितिः ।
पाश्चात्यैर्मनसः प्रोक्ता मनोविज्ञानपारगैः ॥ १३ ॥

ज्ञानमूलं चाकलनं केवलं बुद्धिचोदकम् ।
भावनायाश्चिकीर्षाया विकासस्तत्र नैव तु ॥ १४ ॥

छात्राः सद्भावनाशून्याः कार्यं कर्तुमनीश्वराः ।
बुद्धिप्रामाण्यशरणाः सेवाधर्मपरायणाः ॥ १५ ॥

वाचालास्तार्किकाः प्रायो गणकाः सेवकास्तथा ।
संजाताः शिक्षणेनैवं हस्तोद्यमपराङ्मुखाः ॥ १६ ॥

कुलालचर्मकारादिहस्तोद्योगोपजीविनः ।
निरुद्योगा भृत्यवृत्तिगवेषणपरायणाः ॥ १७ ॥

ग्रामान् विहाय पर्याटन् नगराणि बुभुक्षिताः ।
पादत्राणविहीनाश्च कुवस्त्राः पादचारिणः ॥ १८ ॥

द्वारपाला इव श्वानः स्थिता नित्यं वणिग्गृहे ।
केचित् कच्छपटान् धृत्वान्वधावन्नधिकारिणाम् ॥ १९ ॥

समाजस्य व्यवस्थार्थं शिक्षणं क्रान्तिकारकम् ।
विपरीतं तु नाशार्थमिति शिक्षाविदां मतम् ॥ २० ॥

स्वदेशहितमिच्छन्तो नवशिक्षाप्रथोदयम् ।
चक्रुर्विद्यालयादीनि स्थापयित्वातिसत्वरम् ॥ २१ ॥

उपक्रमः प्रयोगस्य बालगोपालविष्णुभिः ।
कृतो यो विदितः सर्वैः पूर्वग्रन्थनिरूपणात् ॥ २२ ॥

यतः प्रभुत्वभृत्यत्वे वाञ्छिते सर्वैशिक्षितैः ।
नोचितं शिक्षणं स्त्रीणां विद्यापीठपुरस्कृतम् ॥ २३ ॥

खिस्तधर्मपरैर्नित्यं शिक्षाव्याजेन वञ्चिताः ।
रक्षितव्या आर्यकन्या हिन्दुधर्माभिमानिभिः ॥ २४ ॥

एवं मतप्रचारश्च तदा केसरिणा कृतः ।
यदोद्घाटितमासीत् तच्च शारदासदनं नवम् ॥ २५ ॥

तस्य संस्थापिकायास्तु पण्डितताया ब्रवीम्यहम् ।
चित्रां कथां रमायास्तां मनःसंतापकारिणीम् ॥ २६ ॥

सह्यपादस्थिते देशे कर्णाटाख्येऽस्ति खेटकम् ।
मंगळूरविभागे च मालहेरम्बनामकम् ॥ २७ ॥

डोंगरेकुलजस्तत्रानन्ताख्यो न्यवसद् द्विजः ।
सच्छिष्यो रामचन्द्रस्य शास्त्रिणः पुण्यवासिनः ॥ २८ ॥

बाजीरावे पदभ्रष्टे तत्यजुः पुण्यपत्तनम् ।
सर्वे तदाश्रिताः वृक्षं खगा उन्मूलितं यथा ॥ २९ ॥

पण्डिताश्च कलाभिज्ञा नटनर्तकबन्दिनः ।
शुष्के नीरे यथा मत्स्या जाता जीवन्मृतास्तदा ॥ ३० ॥

समायातास्तेन सार्धं ब्रह्मावर्ते द्विजोत्तमाः ।
मैसूरनगरं गत्वा केचित् तत्र कृतालयाः ॥ ३१ ॥

नाम्ना वाराणसीं पत्नीं बाजीरावस्य विश्रुताम् ।
गीर्वाणवाणीकुशलां दृष्ट्वानन्तेन निश्चितम् ॥ ३२ ॥

दातुं शिक्षां संस्कृतस्य स्वभार्यायै हितप्रदाम् ।
सा स्खलत्यध्वरे पत्नी या न जानाति संस्कृतम् ॥ ३३ ॥

महीसूरनृपालस्य पण्डितानां महासभाम् ।
श्रितोऽनन्तो धनं मानं लेभे च शिबिकामपि ॥ ३४ ॥

स्थित्वा दश समास्तत्र राज्ञामात्यैश्च पूजितः ।
आजगाम निजग्रामं प्राप्तमानधनः कृती ॥ ३५ ॥

गार्हस्थ्यमाचरन् विद्वान् सपत्नीको द्विजोत्तमः ।
सिषेवे पितरौ वृद्धावतिथींश्च गृहागतान् ।। ३६ ।।

पत्नीं स शिक्षयामास प्रियां चैव समुत्सुकाम् ।
वाणीं च संस्कृतां वेदशास्त्रसाहित्यसंपदम् ।। ३७ ।।

नेतुं स्वपितरौ काशीं प्रतस्थे भार्यया सह ।
मार्गे परिश्रमक्षीणा हन्त पत्नी दिवं गता ।। ३८ ।।

कृत्वा तीर्थविधिं काश्यां श्रद्धाभक्तिसमन्वितौ ।
शास्त्रोक्तं तस्य पितरौ स्वग्रामं पुनरागतौ ।। ३९ ।।

विद्याभ्यासार्थमुषितस्तत्रानन्तो गुरोः कुले ।
अधीत्याध्यात्ममीमांसादर्शनानि विशुद्धधीः ।। ४० ।।

नेपाले शूरसेनेषु गुर्जरे मरुधन्वसु ।
कृत्वाटनं शास्त्रवादं पण्डितानां सभासु च ।। ४१ ।।

प्रतिष्ठां प्राप्य महतीं दक्षिणं देशमागमत् ।
उवास पैठणे भार्यामुपयेमे द्विजोत्तमः ।। ४२ ।।

द्विजोऽभयंकरोपाह्वो यात्री पैठणमागतः ।
पिता तस्मै ददौ कन्यामष्टवर्षां यथाविधि ।। ४३ ।।

वेदवेदाब्दवयसे विद्यालंकारशोभिने ।
सुदृढाय सुशीलाय शास्त्रिणे ब्रह्मवर्चसे ।। ४४ ।।

कृतविद्यः प्राप्तधनः सपत्नीको गृहं गतः ।
अरण्ये शोभने तत्र गङ्गामूलाश्रमे स्थितः ।। ४५ ।।

पत्नीकन्यापुत्रशिष्यान् शिक्षयामास संस्कृतम् ।
चतुःषष्टिं कला विद्या आचार्यः स चतुर्दश ।। ४६ ।।

तदपत्येषु कन्ये द्वे पुत्र एकश्च बुद्धिमान् ।
पितरौ मोदयामासुस्त्रयस्ते प्राप्तयौवनाः ।। ४७ ।।

एका कृष्णाभिधा कन्या द्वितीयासीद् रमाभिधा।
पुत्रश्च श्रीनिवासाख्यः पितृवात्सल्यवर्धिताः ॥ ४८ ॥

कन्यादानविधानेन कृष्णोद्वाहं चकार सः।
न्यवसत् सोऽपि जामाता गङ्गामूलाश्रमे ततः ॥ ४९ ॥

उद्ध्वस्त आश्रमस्तेन जामात्रोद्वृत्तवर्तनात्।
निर्यातः स सपत्नीको त्यक्त्वा वृद्धौ निराश्रितौ ॥ ५० ॥

छात्राश्रमद्रव्यहीनो वृद्धः क्षीणोऽतिदुर्बलः।
चिन्ताग्रस्तोऽनन्तशास्त्री दुःखितो निधनं गतः ॥ ५१ ॥

तमेवानुगता पत्नी स्वर्गं लोकं पतिव्रता।
रमा च श्रीनिवासश्च निराधारौ बभूवतुः ॥ ५२ ॥

देशान्तरं जिगमिषू प्रतस्थाते पितुर्गृहात्।
देवभाषापटुत्वेन चिकीर्षू देहपोषणम् ॥ ५३ ॥

कालीस्थानपुरे प्राप रमा मान्यजनाश्रयम्।
पण्डिताश्च समाकृष्टास्तस्याः संस्कृतपाटवात् ॥ ५४ ॥

अध्यापकपदं तत्र समाप्नोत् तत्सहोदरः।
स्वतन्त्रजीविकौ जातौ भगिनीभ्रातरौ तदा ॥ ५५ ॥

तावुभौ तत्र लेभाते प्रसिद्धिं लोकमान्यताम्।
जीविकासाधनं चापि कालिकानगरे तदा ॥ ५६ ॥

दुर्दैवाच् श्रीनिवासोऽथ पञ्चत्वं सहसा गतः।
भ्रातुर्निधनदुःखेन रमा शोकाकुलाभवत् ॥ ५७ ॥

निजे निवासे रहसि प्रारोदीत् सातिदुःखिता।
नगरं तज्जनाकीर्णं संजातं निर्जनं वनम् ॥ ५८ ॥

न मे भ्राता सखा कश्चिद् धरायां विद्यतेऽधुना।
असाह्याहं संचरामि कथं संसृतिकानने ॥ ५९ ॥

मेधावी कामरूपस्थो युवा ब्रह्ममतानुगः ।
बभूव तत्परिचितः स्नेहबद्धा च साभवत् ॥ ६० ॥

परस्परानुरक्तौ तौ विवाहं चक्रतुः किल ।
ब्रह्मपुत्रावृते देशे सुखं न्यवसतां ततः ॥ ६१ ॥

अन्तर्वत्नी रमा जाता संसारसुखलालसा ।
हन्त पाशैरन्तकस्य प्राणान्तस्तत्पतेरभूत् ॥ ६२ ॥

रमायाः कन्यका जाता नाम्ना ख्याता मनोरमा ।
रमा प्राग्ज्योतिषं त्यक्त्वा दक्षिणापथमाययौ ॥ ६३ ॥

मुम्बापुरी शासनस्य केन्द्रं पश्चिमभारते ।
महाराष्ट्रे पुण्यपुरी केन्द्रं भारतसंस्कृतेः ॥ ६४ ॥

पुणेपुरीमध्युवास पण्डिता कन्यया सह ।
महिलासमाजमार्यं सा स्थापयामास तत्र च ॥ ६५ ॥

हर्फर्डाख्याङ्ग्लविदुषी कन्याशालानिरीक्षिका ।
पण्डितायाः सखी जाता तत्स्त्रीसेवाप्रशंसिनी ॥ ६६ ॥

उपेक्षिताः स्त्रियोऽनाथाः समाजे हिन्दुबन्धुभिः ।
विधर्मिणोऽपि कुर्वन्ति दयां स्नेहं च ताः प्रति ॥ ६७ ॥

एवं विचार्य संभ्रान्ता खिस्तधर्मानुयायिभिः ।
उपकृत्योपदिष्टा सा प्रविष्टा संशयाटवीम् ॥ ६८ ॥

तदा निकटसंपर्कात् खिस्तधर्मप्रचारिणाम् ।
बभूवुः सुहृदस्तस्या भारतद्वेषिणश्च ते ॥ ६९ ॥

विद्वेषिणी स्वधर्मस्य खिस्तधर्माभिमानिनी ।
साङ्ग्लदेशं गन्तुमैच्छत् सापत्योत्साहिता च तैः ॥ ७० ॥

प्राज्ञं पुनर्विवाहेच्छुं विधुरं सुप्रतिष्ठितम् ।
महिलानां प्रगत्यै वै यतमानं दिवानिशम् ॥ ७१ ॥

अलप्स्यताल्पकालेन यदि सा गृहिणीपदम् ।
भूयोऽभविष्यत् स्वीकर्तुं तत्परेति च मे मतम् ॥ ७२ ॥

न मेधावी महाराष्ट्रे कोऽपि दृष्टिपथं गतः ।
पण्डितायास्तदा तस्माद् दुर्लङ्घ्यो हि विधिक्रमः ॥ ७३ ॥

उपेक्षिता स्वधर्मीयैर्विधर्मीयैः प्रलोभिता ।
लुप्तश्रद्धा स्वधर्मे सा विधर्माभिमुखी तदा ॥ ७४ ॥

स्वीकृतौ ख्रिस्तधर्मस्य न तस्या निश्चयो दृढः ॥
श्रद्धाऽभावः स्वधर्मेऽपि यावत् सा भारतेऽवसत् ॥ ७५ ॥

ऐच्छद् विदेशं सा गन्तुमाङ्ग्लभाषाभिलाषिणी ।
साहाय्येनाङ्ग्लमित्राणां प्रतस्थे कन्यया सह ॥ ७६ ॥

विलोक्याथाङ्ग्ललोकानां वैभवं संस्कृतिं च सा ।
ख्रिस्तधर्मप्रभावोऽयमिति मुग्धा व्यचीचरत् ॥ ७७ ॥

धर्माचार्यस्य संगत्या तत्त्वज्ञानस्य चिन्तनात् ।
उत्पेदे हृदये तस्याः ख्रिस्तधर्मादराङ्कुरः ॥ ७८ ॥

विद्यालये नियुक्ता सा संस्कृताध्यापिकापदे ।
ख्यातिं प्रापाल्पकालेन विद्वद्वृन्देऽपि पण्डिता ॥ ७९ ॥

शिश्रिये ख्रिस्तधर्मं सा सापत्या च यथाविधि ।
बभूव तद्दिनादेव ख्रिस्तधर्मप्रचारिका ॥ ८० ॥

श्रीमद्भ्यो दानशूरेभ्यो द्रव्यं संपादितं तया ।
ख्रिस्तधर्मप्रचाराय स्त्रीणामुद्धरणाय च ॥ ८१ ॥

प्रयाताऽमेरिकाखण्डं जलयानेन पण्डिता ।
विद्यावैभवसंपन्ना सा रमा समनोरमा ॥ ८२ ॥

स्वागतातिथ्यसंतुष्टा ददर्शाखिलसज्जनान् ।
येषां परिचयार्थं वै सा पत्राण्यानयत् स्वयम् ॥ ८३ ॥

अमेरिकादेशनिवासिनो जनान्
देवोपमान् स्वर्गनिवासिनः सदा ।
मेने रमा सुन्दरवेषभूषितान्
क्रीडापरान् नाट्यविलासलोलुपान् ॥ ८४ ॥

ख्रिस्तधर्मप्रसाराय ये च तत्र समुत्सुकाः ।
भारते ब्रह्मदेशे च लङ्कायां च दयान्विताः ॥ ८५ ॥

श्रेष्ठांस्तानुपसंगम्य विनयेनाब्रवीद् रमा ।
ख्रिस्तधर्मप्रसाराय कालोऽयं भारते शुभः ॥ ८६ ॥

अनाथालयनिर्मित्या चिकित्सारोग्यमन्दिरैः ।
विद्यालयोद्घाटनेन स्त्रीसेवासदनादिभिः ॥ ८७ ॥

अन्नवस्त्रप्रदानेन शिशुसंवर्धनेन च ।
दुर्भिक्षग्रस्तभागेषु वन्योद्धारादिकर्मभिः ॥ ८८ ॥

प्रचारं ख्रिस्तधर्मस्य कर्तुमिच्छामि भारते ।
कृतेऽस्य शुभकार्यस्य द्रव्यं देयं दयापरैः ॥ ८९ ॥

यः सेवेत जनं दीनं नरो येशोः प्रियो भवेत् ।
कृतमात्मार्पणं येन दीनदुःखोपशान्तये ॥ ९० ॥

एवं संप्रार्थ्यमानास्ते उदारा धार्मिका जनाः ।
पण्डितायै ददुर्द्रव्यं तत्कार्यप्रतिपत्तये ॥ ९१ ॥

सज्जनोऽमेरिकावासी द्रव्यार्जनपरायणः ।
सत्कार्ये तद्व्ययं कृत्वा परं संतोषमश्नुते ॥ ९२ ॥

परार्थस्वार्थयोः सम्यङ् मेलनं तत्र जीवने ।
प्राप्यते तेन लोकानामैहिकामुष्मिकं सुखम् ॥ ९३ ॥

परित्यक्तेषणासौख्याः स्त्रियस्तत्र सहस्रशः ।
बालशिक्षादत्तचित्ताः सुस्थिता ज्ञानमन्दिरे ॥ ९४ ॥

सेवां कुर्वन्ति रुग्णानां सेविका रुग्णमन्दिरे ।
धार्मिका अपि सेवन्ते सेविका धर्ममन्दिरे ।। ९५ ।।

अनाथानपि सेवन्ते भगिन्यो वसुधातले ।
नारीणां ख्रिस्तधर्मे हि सेवाधर्मो महत्तमः ।। ९६ ।।

सेवासाधनमालम्ब्य भारते स्त्रीजनाय वै ।
ख्रिस्तोपासनसन्मार्गं दर्शयामीति सा ब्रवीत् ।। ९७ ।।

अमेरिकाबलासङ्घैः सत्कृता सा सकन्यका ।
प्रतस्थे पुनरायातुं भारतं धर्मसेविका ।। ९८ ।।

राजधानीमधिष्ठाय शारदासदनं नवम् ।
स्थापितं मुम्बईराज्ये विदुषां मतया तया ।। ९९ ।।

अनुकूलयितुं लोकानाह्वयत् पण्डिता रमा ।
विदुषो धनसंपन्नान् सज्जनान् सुप्रतिष्ठितान् ।। १०० ।।

शाखामुद्घाटयामास पुण्यग्रामेऽपि सत्वरम् ।
निराश्रिता निराधारा विधवाश्चोच्चवर्णजाः ।। १०१ ।।

आश्रयार्थं गतास्तत्र कुमार्यः सत्कुलोद्भवाः ।
लेभिरे तत्र ताः सर्वाः साहाय्यं वै यथेप्सितम् ।। १०२ ।।

संगोपनं शिक्षणं च प्रापुः सदनबालिकाः ।
ख्रिस्तधर्मोपदेशं च पठनं बायबलस्य च ।। १०३ ।।

एवं लोकेषु वितता वार्ता प्रक्षोभकारिणी ।
तिलकः केसरीपत्रे गर्हयामास पण्डिताम् ।। १०४ ।।

सदनस्य प्रशासित्र्याः समितेश्च सभासदः ।
माधवं रामकृष्णं च यौ तत्कार्याभिमानिनौ ।। १०५ ।।

सदनस्था हिन्दुबालाः पतिता धर्मसङ्कटे ।
तद्धर्मान्तरपापस्य भवेयुस्तेऽधिकारिणः ।। १०६ ।।

वायूबलाभ्यासिनी काचित् काचिद् धर्मान्तरोत्सुका ।
श्रुत्वैवं चुक्रुधुर्लोका रमायै पुण्यवासिनः ॥ १०७ ॥

केसरीपत्रलेखेषु निःसंदिग्धं प्रदर्शितम् ।
खिस्तधर्मीयसंस्थासु प्रेषितव्या न बालिकाः ॥ १०८ ॥

पालकैरुच्चशिक्षायै धर्मनिष्ठैर्विवेकिभिः ।
नैव पेयं पयः प्राज्ञैः सुराबिन्दुसमन्वितम् ॥ १०९ ॥

संधारणाय धर्मस्य शिक्षणं विहितं भवेत् ।
त्याज्या शिक्षान्यधर्मस्य दीक्षाहेतुस्तु या भवेत् ॥ ११० ॥

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।
शत्रवो भारतस्यैते परधर्मोपदेशकाः ॥ १११ ॥

समाश्रिताः खिस्तधर्मं काश्चित् कन्या निशम्य तु ।
प्रमुखा हिन्दुनेतारः संस्थासंबन्धमाजहुः ॥ ११२ ॥

दशवर्षात्यये पुण्यपत्तनाच्च शारदागृहम् ।
रमया खिस्तसेवायै केडग्राममनीयत ॥ ११३ ॥

तत्र धर्मप्रसारस्य प्रयत्नमकरोद् रमा ।
निनायाधोगतिं लोकान् कृत्वा खिस्तमतानुगान् ॥ ११४ ॥

तिलकोऽगणयच्च शत्रुं पण्डितां हिन्दुसंहतेः ।
येते छेत्तुं कुठारेण यार्यधर्मस्य पादपम् ॥ ११५ ॥

आर्यस्त्रीरत्नमालायां न रमा स्थानमर्हति ।
परधर्मप्रचारेण यया तदहितं कृतम् ॥ ११६ ॥

न स्त्रीशिक्षापुरस्कारो जातस्तस्याः प्रयत्नतः ।
धर्मान्तरप्रचारेण तिरस्कारस्तु वर्धितः ॥ ११७ ॥

कर्वेशिंदेठक्कराद्याः समाजस्योपकारिणः ।
तदा नारब्धवन्तस्ते सेवाकार्यं हितप्रदम् ॥ ११८ ॥

विनिन्द्यानार्ययत्नं तं सन्मार्गस्य विवेचनम् ।
अकरोत् तिलको लेखैः केसरीपत्रमुद्रितैः ॥ ११९ ॥

शृण्वन्तु पाठकाः सर्वे रमाख्यानफलश्रुतिम् ।
सर्वः स्वधर्मं संरक्षेद् यतो धर्मस्ततो जयः ॥ १२० ॥

न जातु कामाद् न भयाद् न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ॥
व्यासोक्तिमेतां तिलकोऽन्वशिक्षयद्
विगर्हयन् ख्रिस्तजनप्रयत्नान् ॥ १२१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे रमोपाख्यानं नाम चतुर्दशस्तरङ्गः ।

# पञ्चदशस्तरङ्गः

महाविद्यालयाचार्यपदत्यागादनन्तरम् ।
तिलकः प्राविशद् राजकारणक्षेत्रमुत्तमम् ॥ १ ॥

विस्तृतं बुद्धिमद्ग्राह्यं गूढं सङ्कटसंकुलम् ।
दुष्कण्टकाकुलपथं जनभाग्यनियामकम् ॥ २ ॥

विलापालापसंमिश्रं खेदहर्षप्रदं तथा ।
साम्ना दानेन भेदेन दण्डेन च चतुर्मुखम् ॥ ३ ॥

चारनेत्रं गुप्तमन्त्रं चतुरङ्गबलाश्रितम् ।
संपदापत्तिफलकं संधिविग्रहसंयुतम् ॥ ४ ॥

गोरक्षाकृषिवाणिज्यैः संप्राप्तद्रव्यसंग्रहम् ।
यद् ब्रह्मक्षत्रयोर्मूलं युक्तिशक्तिप्रचोदितम् ॥ ५ ॥

अन्यत्राध्यापनात् सत्यं तिलको न मनो दधे ।
स्वनिर्णयमनुस्मृत्य ह्याचार्यपदमास्थितः ॥ ६ ॥

नवाशीतितमे वर्षे चाष्टादशशतोत्तरे ।
आसीद् राष्ट्रसभाया वै पञ्चमाब्दं सुमङ्गलम् ॥ ७ ॥

मुम्बापुर्यां सभास्थानं सभामुख्यैर्विनिश्चितम् ।
विषण्णाश्चैव श्रुत्वा तद् बभूवुः पुण्यवासिनः ॥ ८ ॥

तिलको नामजोशी च पुण्यपत्तनवासिनाम् ।
गतौ प्रतिनिधित्वेन शीघ्रं मुम्बापुरीं प्रति ॥ ९ ॥

प्रान्तशाखाधुरीणांश्च तत्र दृष्ट्वा यथाक्रमम् ।
संदेशः कथितस्ताभ्यां पुण्यपत्तनवासिनाम् ॥ १० ॥

आद्याधिवेशनेनैव प्रापुर्मुम्बानिवासिनः ।
सत्कारातिथ्ययोर्योगं भारतस्य हितैषिणाम् ॥ ११ ॥

प्राप्तव्योऽब्दे स योगोऽस्मिन् पुणेपुरनिवासिभिः ।
यतोऽत्र राष्ट्रभक्तानां जनाः सत्कारतत्पराः ॥ १२ ॥

ग्रन्थिज्वरोद्भवेनैव सभास्थानान्तरं कृतम् ।
विदितं प्रथमेऽब्दे तद् मुम्बई पुण्यपत्तनात् ॥ १३ ॥

पुण्यपौरास्तदा सर्वे जाता भग्नमनोरथाः ।
सोत्साहा राष्ट्रसेवायां सन्तु युष्मदनुग्रहात् ॥ १४ ॥

प्रार्थितास्तिलकेनैवं मेथामुख्यसभासदः ।
स्वीकृता नैव तैः सा तु विज्ञप्तिः पुण्यवासिनाम् ॥ १५ ॥

समाकर्ण्योत्तरं तेषां प्रोवाच तिलकस्तदा ।
महासभायशःसिद्ध्यै सहकार्योत्सुका वयम् ॥ १६ ॥

दश रूप्यसहस्राणि समानीतं सभाधनम् ।
उपार्जितं महाराष्ट्रे तिलकेन सहानुगैः ॥ १७ ॥

रूप्यमुद्राः समानीय मन्ये भक्तिसमन्विताः ।
तिलकः पूजयामास सभाख्यां राष्ट्रमातरम् ॥ १८ ॥

मुम्बापुर्यां समारब्धं सभाया अधिवेशनम् ।
पञ्चमं तत्र सोत्साहं वेडर्बर्नः सभापतिः ॥ १९ ॥

उदारमतवादीति प्राप्तवानुत्तमं यशः ।
ब्राडलापि समागत्य लोकोत्साहं व्यवर्धयत् ॥ २० ॥

अधिवेशनवैशिष्ट्यं प्रेक्षका अद्भुतं विदुः ।
संख्या प्रतिनिधीनां या सा वर्षाङ्केन संमिता ॥ २१ ॥

लोकप्रतिनिधीकर्तुं संस्थां भारतशासिनीम् ।
प्रस्तावः कोऽपि तत्रैव विवादाय पुरस्कृतः ॥ २२ ॥

बालगोपालयोरासीत् संमता तस्य सूचना ।
मतसंघविनिर्मित्या उभाभ्यां च समर्थिता ॥ २३ ॥

प्रसङ्ग आद्य एवायं बालगोपालसंहतेः ।
हन्त राष्ट्रसभापीठे संजातश्चान्तिमस्तथा ॥ २४ ॥

प्रतिवर्षमुपातिष्ठत् तिलकस्तां महासभाम् ।
ततः सप्त सभाः सम्यक् पंढरीं वैष्णवो यथा ॥ २५ ॥

ज्ञानेश्वरतुकारामशिविकामनुगामिनः ।
पाण्डुरङ्गं द्रष्टुकामा आषाढैकादशीतिथौ ॥ २६ ॥

वर्षाणि षट् शतानीह समारोहेण पंढरीम् ।
यान्ति वारीकरा नित्यं श्रद्धाभक्तिसमन्विताः ॥ २७ ॥

सहस्रशः सहस्राणि नृत्यन्तः पद्चारिणः ।
धृत्वा ध्वजं स्वहस्तेन गायन्तो भगवद्यशः ॥ २८ ॥

गच्छेयुर्भारतीयाश्चेद् राष्ट्रसंसत्स्थलं तथा ।
सोत्साहं तन्मया भूत्वा पारतन्त्र्यविमुक्तये ॥ २९ ॥

स्वातन्त्र्यमविलम्बेन प्राप्नुयादेव भारतम् ।
यात्रामहोत्सवं दृष्ट्वा तिलकोऽप्यवदत् पुरा ॥ ३० ॥

अब्दे तथैकनवते चाष्टादशशतोत्तरे ।
अभवद् नागपुर्यां वै राष्ट्रसंसद उत्सवः ॥ ३१ ॥

अलंकृतं सभाध्यक्षपदमानन्दचार्लुभिः ।
विद्वद्वर्यैरान्ध्रचौलपाण्ड्यकेरलपूजितैः ॥ ३२ ॥

मेथावाच्छासुरेन्द्राणां वलयेन सुशोभितः ।
अध्यक्षः शुशुभे प्राज्ञः शशीवोडुगणैर्वृतः ॥ ३३ ॥

उपाविशत् तदाध्यक्षो नियते मञ्चकासने ।
निम्ने प्रतिनिधिस्थाने तिलकश्चासने बभौ ॥ ३४ ॥

मालवीयः प्रसिद्धोऽभूद् नागपूराधिवेशने ।
वक्तृत्वधार्मिकत्वाभ्यामयोध्यानाथशंसितः ॥ ३५ ॥

मन्ये परिचितो जातस्तिलकस्तत्र तेन च ।
स्वधर्मभक्तिसाधर्म्यात् तयोः स्नेहो व्यवर्धत ॥ ३६ ॥

संपादकौ पत्रिकायाः कलकत्तानिवासिनौ ।
तौ घोषभ्रातरौ तत्र संगतौ तिलकेन च ॥ ३७ ॥

ऐक्यबीजं सम्यगुप्तं मराठावङ्गदेशयोः ।
वङ्गभङ्गप्रतीकारान्दोलने वृक्षतां गतम् ॥ ३८ ॥

पंजाबमद्रदेशस्थान् सुहृदः स हि लब्धवान् ।
वेदाभिमानिनश्चार्यांश्चाचार्यादीननुक्रमात् ॥ ३९ ॥

राष्ट्रसंसत्कार्यजाते तस्मिन् पूर्णे यथाविधि ।
सामाजिक्याः परिषदो जातं तत्राधिवेशनम् ॥ ४० ॥

गणेशः कृष्णतनुजः खापर्डेकुलभूषणः ।
अलंचक्रे तदाध्यक्षपदं परिषदो महत् ॥ ४१ ॥

सूत्रधारः परिषदो माधवो विदुषां वरः ।
तिलकोऽप्यागतस्तत्राक्षिपद् " राष्ट्रीयता कथम् " ॥ ४२ ॥

यत् सदस्याः परिषदः स्वेच्छया यान्ति संततम् ।
नार्हन्ति प्रातिनिध्यं ते भारतस्य कदाचन ॥ ४३ ॥

नोचितं राष्ट्रियपदं सभानाम्नि प्रयोजितम् ।
प्रत्युत्तरे तदा तस्य न्यायविद् माधवोऽब्रवीत् ॥ ४४ ॥

न च निर्वाचिता लोकैः सभास्तारः सभागताः ।
प्रदत्तं प्रातिनिध्यं च न वै तेषां कथंचन ॥ ४५ ॥

भारतीयसमाजान्तर्दोषोपायाश्च चर्चिताः ।
व्याप्तिं विचार्य प्रश्नानां राष्ट्रियत्वं यथोचितम् ॥ ४६ ॥

वचनं यस्य कस्याप्यप्रमाणं तिलकोऽवदत् ।
तच्च् श्रुत्वा चुक्रुधुस्तस्मै साध्यक्षास्ते सभासदः ॥ ४७ ॥

यो नरोऽतिविरोधेन विघ्नमाधातुमिच्छति।
आज्ञापयितुमिच्छामि प्रयातु स इतो बहिः ॥ ४८ ॥

तदाध्यक्षो गणेशः स उवाच तिलकं प्रति।
परं तावल्पकालेन संजातौ तु सुहृत्तमौ ॥ ४९ ॥

उपप्लवस्य नान्तोऽस्ति तिलके सति जीवति।
विष्णुः किल जगर्जोच्चैर्भिडेनामा सुधारकः ॥ ५० ॥

भारते तिलकाद् नान्योऽभवच् श्रेष्ठतरो नरः ।
अब्रवीच् शतकेऽप्यस्मिन् गणेशो नित्यशो जनान् ॥ ५१ ॥

यदा राष्ट्रसभास्थानं प्रयातस्तिलकस्तदा ।
समन्ताद् दर्शनीयानि स्थलान्यपि जगाम सः ॥ ५२ ॥

तेन काश्यादितीर्थेषु सर्वेस्तीर्थविधिः कृतः ।
क्षौरपूर्वो यथाशास्त्रं पिण्डदानसमन्वितः ॥ ५३ ॥

राष्ट्रसंसन्निमित्तेन संचारः सर्वभारते ।
तस्मात् परिचयश्चाभूद् देशकार्यहितैषिणाम् ॥ ५४ ॥

गतेषु पञ्चवर्षेषु तिलकाय समर्पितम् ।
महासभाप्रान्तशाखाकार्यवाहपदं जनैः ॥ ५५ ॥

सुधीर्मैथाग्रणीस्तुष्टो राजनीतिनयेन सः ।
शशंस मुक्तकण्ठं च तिलकं निजभाषणे ॥ ५६ ॥

द्विर्नियुक्तोऽथ गोपालो लोकैः सतिलकश्च सः ।
चिकीर्षुभिर्हि पक्षैक्यं साचिव्ये प्रान्तसंसदः ॥ ५७ ॥

नेयेष किंतु गोपालस्तृतीयेऽब्दे पदं पुनः ।
तिलकेनाथ वैमत्याल्लुप्ता तत्सहकार्यधीः ॥ ५८ ॥

लाहोरे चाथ मद्रासे मैत्रं बालेन निर्मितम् ।
वेदाभिमानिभिश्चार्यैराचार्यैश्च यथाक्रमम् ॥ ५९ ॥

प्रान्तसंसत्समारोहाः पञ्चोत्साहविवर्धनाः ।
द्वानवत्यब्दपर्यन्तं बभूवुः पुण्यपत्तने ॥ ६० ॥

गुजराते बभूवैकोऽहमदाबादपत्तने ।
मुम्बापुर्यामभूदेकः समारोहस्ततः परम् ॥ ६१ ॥

ज्ञात्वा तिलकनैपुण्यं मुम्बाप्रान्तनिवासिभिः ।
मन्त्रिस्थानेऽविरोधेन नियुक्तिस्तस्य तैः कृता ॥ ६२ ॥

प्रान्तेऽखिले मान्यतासीत् तिलकाय विशेषतः ।
पञ्चवर्षैं हि लोकानां तस्य निःस्पृहसेवया ॥ ६३ ॥

पञ्चाधिकनवत्यब्दे पुण्यग्रामेऽधिवेशनम् ।
महासभेतिहासे यत् स्मरणीयं बभूव ह ॥ ६४ ॥

तस्यापि सचिवेष्वेकस्तिलकोऽभूद् नियोजितः ।
मतभेदात् पदं तेन संत्यक्तं तदनन्तरम् ॥ ६५ ॥

विद्यामन्दिरमित्रशिष्यनिवहं त्यक्त्वा सभामाविशद्
राष्ट्रप्रेमधिया सुधीश्च तिलको राष्ट्राग्रणीस्थापिताम् ।
विद्यापीठमभूच्च भारतमिदं छात्रास्तु सेवाव्रता
दास्याद् भारतमोचनं च विषयः प्राध्यापकः केसरी ॥ ६६ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकराजकारणप्रवेशो नाम पञ्चदशस्तरङ्गः ।

## षोडशस्तरङ्गः

आङ्ग्लविद्याप्रसारेण प्रचारेणान्यधर्मिणाम् ।
विद्वांसोऽपि हतश्रद्धाः पूर्वाचारपराङ्मुखाः ॥ १ ॥

भक्ष्याभक्ष्यजातिभेदस्पृश्यास्पृश्यानुशासनम् ।
शास्त्रप्रोक्तं च रूढं च शिष्टाचारस्य संमतम् ॥ २ ॥

नवविद्वन्मतेनासीत् तत्त्वशून्यं निरर्थकम् ।
उत्पादकं च रोषस्य राष्ट्रैक्यस्य विरोधकम् ॥ ३ ॥

तदुल्लङ्घनतो व्यक्तं जायते वादकारणम् ।
बहिष्कारोद्भवस्तस्मात् प्रायश्चित्तविमर्शनम् ॥ ४ ॥

संघर्षः सुमहाञ् जातो नवतर्कप्रवादिनाम् ।
प्राचीनपण्डितानां च वेदशास्त्राभिमानिनाम् ॥ ५ ॥

नवविद्वत्समाजे ये श्रुतिस्मृतिविशारदाः ।
आहुस्ते धार्मिकाचाराः सन्ति केचिदवैदिकाः ॥ ६ ॥

गच्छन्ति शरणं केचिद् निर्णयाय मठाधिपम् ।
अधिकारस्तदीयो नो संमतो नववादिनाम् ॥ ७ ॥

नियन्तासीच्चक्रवर्ती लोकाचारविचारयोः ।
धर्मस्यापि प्रभू राजा न शास्त्रं न मठाधिपः ॥ ८ ॥

अनवस्था समाजे तु वेदधर्मानुयायिनाम् ।
समुत्पन्ना प्रवृत्तश्च तत्र कोलाहलो महान् ॥ ९ ॥

धर्मो धारयते लोकान् कृत्वा सन्मार्गदर्शनम् ।
धर्मश्रद्धाविलोपेन जना यास्यन्त्यधोगतिम् ॥ १० ॥

श्रद्धानिबन्धनोच्छेदात् समाजः शिथिलो भवेत् ।
लोकानां संहतौ शक्तिः शक्तिहीनः प्रणश्यति ॥ ११ ॥

अल्पसंख्यः समाजोऽपि धर्मश्रद्धायुतो यदि ।
आदरार्हः स सर्वेषां तिरस्कार्यः कदापि न ॥ १२ ॥

हिन्दूयवनयोर्मध्ये प्रखरा धर्मभावना ।
यवनस्य, ततश्चासन्नाङ्ग्लास्तत्पक्षपातिनः ॥ १३ ॥

निषिद्धं भोजनं पानमन्यधर्मानुगैः सह ।
हिन्दूनामिति मर्यादा विहिता धर्मशास्त्रिभिः ॥ १४ ॥

निषिद्धं सेवनं मद्यमांसयोरग्रजन्मनाम् ।
ब्राह्मणैः शूद्रहस्ताच्च पानमन्नं च गर्हितम् ॥ १५ ॥

कालानभिज्ञाः शास्त्रज्ञा अनिर्बन्धाः सुधारकाः ।
तिलकस्तु तयोरासीत् सम्यगन्वयसाधकः ॥ १६ ॥

परराज्यस्य साहाय्यात् स्वमतस्य प्रवर्तनम् ।
कर्तुं समुत्सुका नित्यमग्रगण्याः सुधारकाः ॥ १७ ॥

हस्तक्षेपोऽपि नो योग्यो धर्मक्षेत्रेऽधिकारिणाम् ।
तिलकस्य मतं स्पष्टं वृत्तपत्रे प्रकाशितम् ॥ १८ ॥

उपेक्ष्यास्तन्मते दोषाः क्षुद्राः संसर्गसंभवाः ।
न प्रायश्चित्तमर्हन्ति शास्त्राज्ञोल्लङ्घनं विना ॥ १९ ॥

पीठस्थैः शंकराचार्यैः समितिस्तैश्च निर्मिता ।
प्रमाणं वै समस्यानां धार्मिकीणां विनिर्णये ॥ २० ॥

स्त्रीकार्या न्यायरीतिः सा संमता न्यायमूर्तिभिः ।
प्रगतश्रेष्ठराष्ट्रेषु नियुक्ता न्यायकर्मणि ॥ २१ ॥

धर्माचारविचाराणां युक्तायुक्तविचारणा ।
देशकालानुसारेण प्राचीनानामसंमता ॥ २२ ॥

श्रुतिस्मृतिपुराणानामाधारोऽत्र निरर्थकः ।
सुधारणाधुरीणानां मते वै संशयात्मनाम् ॥ २३ ॥

स्वपत्रे संमतिवयोविधेयकनिषेधतः ।
सुधारणाविरोधीति तिलको नूतनैर्मतः ॥ २४ ॥

मेनिरे धार्मिकास्तं हि प्रच्छन्नोऽयं सुधारकः ।
खिस्तैः सार्धं चहापानादपाङ्क्तस्तिलकः कृतः ॥ २५ ॥

कृतः केन समारम्भश्चहापानस्य पत्तने ।
के गतास्तं समारोहं किं बहिष्कारकारणम् ॥ २६ ॥

मनस्तापप्रदं सर्वं वर्णयिष्ये यथाक्रमम् ।
नृसिंहरचितग्रन्थाधारेणाहं समासतः ॥ २७ ॥

जोशीत्युपाह्वो गोपाल आसीद् वक्रमतिर्नरः ।
आनन्दी विदुषी भार्या यस्य लोके सुविश्रुता ॥ २८ ॥

प्रतिष्ठितानां सभ्यानां मानभङ्गस्य योजनाम् ।
कर्तुं मनः सदा मग्नमेवासीत् तस्य दुर्मतेः ॥ २९ ॥

धार्मिको दाम्भिको सर्वो वाचालश्च सुधारकः ।
उभयोस्तन्मते कोऽपि तत्त्वनिष्ठो न वर्तते ॥ ३० ॥

स युक्तिं योजयामास निर्मातुं सङ्कटं नवम् ।
सुधारकोद्धारकाणां तत्त्वनिष्ठां परीक्षितुम् ॥ ३१ ॥

पंचहौदाख्यमिशने मुख्यो रेविंग्टनाभिधः ।
खैस्तः स्वकार्यनिरतो गोपालस्य सुहृत्तमः ॥ ३२ ॥

समाह्वयज्जनाञ् शिष्टान् स गोपालप्रचोदितः ।
व्याख्यानं रुचिरं श्रोतुमात्मनः खिस्तमन्दिरे ॥ ३३ ॥

व्याख्यानलोलुपाः शिष्टाः पुण्यग्रामनिवासिनः ।
आहूताः प्रायशः सर्वे सभास्थानमुपस्थिताः ॥ ३४ ॥

कार्यान्तरान्तरायेण केचिदन्ये न चागताः ।
कृतोपेक्षामन्त्रणस्य केश्चिद् बुद्धिपुरःसरम् ॥ ३५ ॥

गताः काश्चित् स्त्रियस्तत्र यथाकालं निमन्त्रणात् ।
पुरुषाध्यासितस्थानादुपविष्टाः पृथक्स्थले ॥ ३६ ॥

रेविंगूटनः प्रवचनं प्रोवाचासौ प्रचारकः ।
स्वयं हितोपदेशाय निमन्त्रितसभासदाम् ॥ ३७ ॥

कषायपेयचषका आनीता बिस्किटान्विताः ।
श्रोतॄणां प्रातराशाय सेवकैः स्थापिताः पुरः ॥ ३८ ॥

नास्पृशन् खाद्यपेयानि स्त्रियः सर्वाः समागताः ।
केचिच्चक्रुश्चहापानं केवलं पुरुषास्तदा ॥ ३९ ॥

कृतपानाशनाः केचित् केचिन्निष्पानभोजनाः ।
कृतपानास्तदा केचित् त्रिविधाश्च सभासदः ॥ ४० ॥

कैश्चिद् मृन्मयपात्राणि न स्पृष्टान्युद्धृतानि वा ।
स्वकरैर्धार्मिकैस्तत्र सभास्थानासनस्थितैः ॥ ४१ ॥

सभाविसर्जनं जातं हस्तान्दोलनपूर्वकम् ।
वितीर्णाः यजमानाय धन्यवादा निमन्त्रितैः ॥ ४२ ॥

न्यवर्तन्त गृहं सर्वे जनास्त्यक्त्वा सभागृहम् ।
उच्चैर्हसित्वा गोपालः प्रतस्थे मुद्रणालयम् ॥ ४३ ॥

स्वजाले प्रसृते मत्स्यान् प्रविष्टानवलोकयन् ।
गोपालो धीवर इव संतोषं परमाप्तवान् ॥ ४४ ॥

पुणेवैभवपत्रे तत् सभावृत्तं प्रकाशितम् ।
नामान्युल्लिख्य सर्वेषां सभ्यानां च यथाक्रमम् ॥ ४५ ॥

निवेदितं पत्रलेखे चहापानं सबिस्किटम् ।
उक्तं यैश्च कृतं पानं प्रायो बिस्किटभक्षणम् ॥ ४६ ॥

नाधिकाः पञ्चषेभ्यः स्युः पानाशनपराङ्मुखाः ।
नास्पृशन् चषकं तत्र नापि बिस्किटभाजनम् ॥ ४७ ॥

आकर्ण्य गोलिप्रक्षेपस्फोटं व्याघ्रो गुहाश्रितः ।
सरोषं गर्जनं कृत्वा बहिर्याति जिघांसया ॥ ४८ ॥

धार्मिकाणां तथा सघो क्रुद्धोऽब्रह्मण्यवार्तया ।
बहिष्कारायुधो यातो युद्धाय कृतनिश्चयः ॥ ४९ ॥

कुलीनो धार्मिकस्तेषां सैनापत्ये नियोजितः ।
नातूवंशोद्भवः श्रीमान् बाळासाहेबसंज्ञितः ॥ ५० ॥

अन्येऽपि वेदशास्त्रज्ञा धर्मकार्यार्थमाययुः ।
आसीद् नातू धर्मवीरः प्रबलेन दलेन सः ॥ ५१ ॥

विद्वांसो ये हेतुपूर्वं धर्मादेशातिवर्तिनः ।
कार्यस्तेषां प्रतीकार आचार्यैश्च पदस्थितैः ॥ ५२ ॥

अर्पितं प्रार्थनापत्रमाचार्यकरपद्मयोः ।
नातूमुख्यजनैः पुण्यग्रामस्थैर्धर्मरक्षकैः ॥ ५३ ॥

द्वौ शास्त्रिणावधिकृतावाचार्यैः सुसमीक्षणे ।
प्रयोजनप्रमाणानां पक्षयोरुभयोरपि ॥ ५४ ॥

वादिनो रुद्रसंख्याका ऋतुवेदमिताः परे ।
वादिनामग्रणीर्नातू तिलकः प्रतिवादिनाम् ॥ ५५ ॥

माधवो रानडेवंश्यः श्रेष्ठो वादिविरोधकः ।
बहिष्कारविधौ जातस्तिलकप्रमुखैः सह ॥ ५६ ॥

बालमाधवयोर्योगः सहकार्यस्य दुर्लभः ।
जनानां हर्षदो जातः कपिलाषष्ठियोगवत् ॥ ५७ ॥

गुरुशुक्रौ च संयुक्तावेतौ मन्येऽतिसङ्कटे ।
समुद्रमन्थने पूर्वकल्पे वामृतलब्धये ॥ ५८ ॥

सार्धत्रिमासपर्यन्तं पौषकृष्णाद्यवासरात् ।
शास्त्रिणौ चक्रतुर्यत्नं पक्षद्वयपुरस्कृतम् ॥ ५९ ॥

साक्षिणां कथनं श्रोतुं शास्त्राधारं परीक्षितुम् ।
लेखितुं च तदाधाराद् निश्चितं मतमात्मनः ॥ ६० ॥

अर्पयांचक्रतुर्लेखमाचार्यकरपद्मयोः ।
आदेशाद् निर्णयस्ताभ्यां पुण्यग्रामे प्रकाशितः ॥ ६१ ॥

शास्त्रिभ्यां निर्णयो दत्तो न सिद्धं बिस्किटाशनम् ।
यथार्थसाक्षिणोऽभावात् कस्यापि प्रतिवादिनः ॥ ६२ ॥

नोपस्थिताः सभास्थानं निर्णीतमिति ये जनाः ।
अन्यन्यायालयाधीशैः शुद्धास्ते संशयातिगाः ॥ ६३ ॥

सभामुपस्थितैर्यैस्तु चहापानं च नो कृतम् ।
ब्रह्मकूर्चोपवासस्तैः कर्तव्योऽत्र सदक्षिणः ॥ ६४ ॥

संसर्गजन्यपापस्य क्षालनायेति निर्णयः ।
शास्त्रिणोर्मतमाश्रित्य मठाचार्यैः प्रकाशितः ॥ ६५ ॥

चतुर्भिश्च कृतं पानं तिलकस्तेषु दोषभाक् ।
निम्नोक्तमुत्तरं तेन प्रदत्तं न्यायमन्दिरे ॥ ६६ ॥

दोषस्य परिहाराय प्रायश्चित्तं मया कृतम् ।
वाराणस्यां ब्रह्मवृन्दसंमत्या विधिपूर्वकम् ॥ ६७ ॥

तैः प्रदत्तं शुद्धिपत्रं न्यायाधीशाय दर्शये ।
इत्युक्त्वा तिलकः प्रादात् पत्रं तद्विप्रसंमतम् ॥ ६८ ॥

कृते द्विजाज्ञया तेन कृच्छ्रे द्वे पुण्यपत्तने ।
प्रायश्चित्तमतस्तत्र मतं नावश्यकं खलु ॥ ६९ ॥

चान्द्रायणं सान्तपनं तथा चान्ये जनास्त्रयः ।
कुर्युरित्येव निर्णीतं जोशी साने परांजपे ॥ ७० ॥

अष्टभी रानडेमुख्यैः सादरं प्रार्थना कृता ।
परिहाराय दोषस्य ज्ञाताज्ञातस्य भूसुरैः ॥ ७१ ॥

प्रायश्चित्तं प्रदातव्यं धर्माचरणसिद्धये ।
शुद्ध्यर्थं माधवः सर्वप्रायश्चित्तं समाचरेत् ॥ ७२ ॥

सप्तान्ये प्रार्थिनस्तद्वत् कुर्युश्च समदोषिणः ।
आदिष्टमेतदाचार्यैर्वेरीवर्त्यनुशासनम् ॥ ७३ ॥

तन्निर्णयादसंतुष्टैर्नातूपक्षीयधार्मिकैः ।
दुराग्रहाकुलस्वान्तैराचार्याज्ञावमानिता ॥ ७४ ॥

पुण्यपुर्यां द्विजातीनां निर्णयोऽयमसंमतः ।
तिलकस्यानुकूलौ तावास्तां शास्त्रिवरावुभौ ॥ ७५ ॥

पुनर्विचारः कर्तव्य आचार्यैरिति सूचना ।
कृतासीत् तत्प्रकरणे नातूप्रमुखधार्मिकैः ॥ ७६ ॥

निर्बन्धाद् नातुमुख्यानां स्थापितं न्यायमण्डलम् ।
विचार्य वादविषयं पुनर्दातुं च निर्णयम् ॥ ७७ ॥

संस्थानयोरधिपती कुरुंद्वाडकरावुभौ ।
भङ्कम्करस्तृतीयश्च मध्यस्था न्यायमण्डले ॥ ७८ ॥

संप्रेषितः प्रतिनिधी रानडेप्रमुखैर्जनैः ।
शास्त्रार्थस्य विवादाय तिलकस्तु स्वयं गतः ॥ ७९ ॥

तेन प्रदर्शिता सम्यग् वादिनां च विसंगतिः ।
कानिट्कराय तैर्दत्तं प्रायश्चित्तं यथाविधि ॥ ८० ॥

स्वीकृत्य निर्णयं पूर्वं मठाचार्यैः प्रकाशितम् ।
तेषां नैवाधिकारोऽस्ति तद्विरोधस्य संप्रति ॥ ८१ ॥

चहापानं कृतं चेति तिलकस्यापि संमतम् ।
बिस्किटानि पुरःपात्रे स्थापितानि यथाविधि ॥ ८२ ॥

नातूपक्षेण तिलको बिस्किटाशनदोषभाक् ।
मन्तव्यो मण्डलेनेति साग्रहं प्रतिपादितम् ॥ ८३ ॥

वचोभिर्युक्तियुक्तैस्तत् तिलकेन निराकृतम् ।
मार्मिकैस्तर्कशुद्धैश्च वादकौशलदर्शकैः ॥ ८४ ॥

उपलब्ध्या पदार्थस्य पात्रे भोजनसाधने ।
तद्भक्षणानुमानं तु जातुचिद् नोपपद्यते ॥ ८५ ॥

प्रान्ताधिपप्रदत्ते च भोजने तत्र गच्छतः ।
नातोः पुरः सुरापात्रं स्थापयन्ति च सेवकाः ॥ ८६ ॥

नातो नातु सुरापस्तु केनाप्येवं हि तर्क्यते ।
न प्रमाणं विना कोऽपि सुरापानस्य दोषभाक् ॥ ८७ ॥

नातूपक्षस्य तर्कोऽस्ति सर्वथानर्थसूचकः ।
छिन्नदाम्नी यथा धेनुस्तथा धीः स्वैरिणी भवेत् ॥ ८८ ॥

उभयोः कथनं श्रुत्वा विचारार्थं गृहं गताः ।
सदस्या ऐकमत्यं न संप्रापुरिति शुश्रुम ॥ ८९ ॥

आचार्याः संशयग्रस्ताः सदस्यानां पृथग्मतैः ।
दीर्घकालं विचिन्त्यापि नादिशन् निर्णयान्तरम् ॥ ९० ॥

अप्रवृत्तेर्नवाज्ञायाः सुस्थितः पूर्वनिर्णयः ।
व्यावृत्तं विप्रवर्गेभ्यो ग्रामण्यं कर्णयोः स्थितम् ॥ ९१ ॥

कालाद् लुप्तमपाङ्क्तत्वं वैमनस्यं विनाशितम् ।
कालाद् वादोऽप्यभूत् स्तब्धो ग्रामण्यं विलयं गतम् ॥ ९२ ॥

कृतः श्रमोऽस्मिन् विषये रानडेतिलकादिभिः ।
मतेनाधुनिकानां स कालापव्यय एव च ॥ ९३ ॥

गोखलेऽगरकरादीनामौदासीन्यं प्रशंसितम् ।
ग्रामण्यविषये त्वस्मिन् बहुभिर्नव्यलेखकैः ॥ ९४ ॥

बालमाधवयोर्दृष्टिः समष्टिहितदर्शिनी ।
सा तु गोपालयोरासीद् व्यष्टिस्वातन्त्र्यतत्परा ॥ ९५ ॥

अस्ति राष्ट्रस्य घटकः प्रमुखो वैदिको जनः।
हिन्दुनाम्ना प्रसिद्धोऽयं सर्वसृष्ट्यां पुरातनः ॥ ९६ ॥

जातिसंस्थासुसंबद्धजातिपंचजनानुगः।
भिन्नजातिसमाजानां धर्मशास्त्रं हि बन्धनम् ॥ ९७ ॥

प्रायश्चित्तादिविषयो धर्मशास्त्रसमुद्भवः।
विचारनिर्णयार्थं तदवश्यं न्यायमन्दिरम् ॥ ९८ ॥

ब्राह्मणानां सभाचार्यास्तथाधिकृतपण्डिताः।
महाजना जातिमुख्या ब्राह्मणेतरशासकाः ॥ ९९ ॥

यतितव्यं समाजस्य संहृत्यर्थं च तज्जनैः।
समाजकार्यशक्तत्वं विद्वन्मान्यतया भवेत् ॥ १०० ॥

तिरस्कुर्वन्ति ये लोकान् स्वजातीयान् सुधारकाः।
कार्यस्य प्रगतिस्तेषामसंभाव्येति तन्मतम् ॥ १०१ ॥

सुसंघटितसंघस्य शक्त्या राष्ट्रोन्नतिर्भवेत्।
व्याख्यानैर्लेखनैर्वापि तार्किकाणां न केवलैः ॥ १०२ ॥

अङ्गाङ्गिभावसंबन्धः सुधारकसमाजयोः।
रानडेतिलकाभ्यां तद् नैकवारं प्रकाशितम् ॥ १०३ ॥

अधिकारोऽस्ति दण्डस्य शिष्टाचारातिवर्तिनाम्।
समाजसंसदः सम्यङ् न्यायतत्त्वानुसारतः ॥ १०४ ॥

रानडेतिलकाभ्यां तत् तत्त्वं सामाजिकोन्नतेः।
दर्शितं सुखबोधार्थमेतन्मार्गानुयायिनाम् ॥ १०५ ॥

राजशक्त्यानुकूल्येन रूढीनां परिवर्तनम्।
कार्यमित्थं माधवस्य मतं विद्वन्मणेश्च यत् ॥ १०६ ॥

विरोधी तत्र तिलको धर्मस्वातन्त्र्यघातकम्।
तदित्यवोचदखिलं पारतन्त्र्यविनाशधीः ॥ १०७ ॥

धर्मकार्ये राजनीतिर्द्वे एते तु पृथक् पृथक् ।
अन्योन्याक्रमणं निन्द्यं राजनीतिविदां मते ॥ १०८ ॥

सुसंस्कृतपुरोगामिराष्ट्रेषु परिपालितः ।
विभागोऽयं तयोर्नित्यं राष्ट्रकार्यधुरंधरैः ॥ १०९ ॥

सम्राज्ञीघोषणापत्रतत्त्वानां च विघातकः ।
धर्मक्षेत्रे करक्षेपो राज्ययन्त्राधिवर्तिनाम् ॥ ११० ॥

राज्यं न परकीयानां लोकानां हि सुखावहम् ।
स्वराज्यप्राप्तये यत्नः कर्तव्यो देशबान्धवैः ॥ १११ ॥

लोककल्याणघाताय लब्धश्चावसरो यदि ।
धर्मस्वातन्त्र्यदानस्य कथं वा स्यात् समर्थनम् ॥ ११२ ॥

सुधारकप्रयत्नोऽयं तन्मूलोच्छेदको भवेत् ।
शीतोष्णं युगपच् श्वासं मतिमान्द्याच् श्वसन्ति ते ॥ ११३ ॥

धर्मे राजकरक्षेपे लोकक्षोभोऽभिजायते ।
क्षुब्धेभ्यो नैव साहाय्यं विधेयस्योपपद्यते ॥ ११४ ॥

विधेयकं जनैर्निन्द्यं मृतपत्रसमं किल ।
अज्ञशिक्षितयोर्मध्ये वैमनस्यस्य कारणम् ॥ ११५ ॥

राजाश्रयेण यैर्लोकभावनाश्च तिरस्कृताः ।
योद्धुं न ते शक्नुयुर्वै राजशक्त्यातिदुष्टया ॥ ११६ ॥

लोकसाह्यं विना नैव राष्ट्रोत्थानस्य संभवः ।
त्याज्यः सुज्ञजनैः पन्था लोकविद्वेषकारकः ॥ ११७ ॥

समाजान्तर्गता शुद्धिः समाजाराधनेन वै ।
संपादिता धुरीणैश्चेद् भवेद् लोकहितप्रदा ॥ ११८ ॥

राजसाहाय्यमाश्रित्य त्वरयातिदुराग्रहात् ।
परिवर्तनमाचारे भवेद् नैवोपकारकम् ॥ ११९ ॥

लोकेऽप्यनुभवात् सिद्धं स्पष्टं दृष्टिमतामिदम् ।
तार्किकास्तन्न पश्यन्ति प्रायो येऽदूरदर्शिनः ॥ १२० ॥

अपवादं वदाम्येकं तिलकेनेह भाषितम् ।
पालनं सर्वरूढीनां नास्ति तच्छास्त्रसंमतम् ॥ १२१ ॥

अन्याय्यं पालनं तासां तच्च द्रोहस्वरूपकम् ।
सतां हि तत्त्वनिष्ठानां तत्त्वद्रोहस्तु दुःसहः ॥ १२२ ॥

स्वातन्त्र्यं स्वमताचारे लब्धुं प्रयतते च यः ।
तस्मै तथा ह्यनुष्ठातुं दद्यादनुमतिं नृपः ॥ १२३ ॥

एवमुक्तमसंदिग्धं स्वलेखेषु मुहुर्मुहुः ।
सुधारणोत्सुकैस्तस्य सर्वथानादरः कृतः ॥ १२४ ॥

सुधारणोत्सुकैः कार्यः संघ एकः सभासदाम् ।
कार्यः सुधारणोल्लेखस्तथा शपथपूर्वकम् ॥ १२५ ॥

बद्धः परिकरोऽस्माभिरनुष्ठातुं सुधारणाः ।
क्रियतां शासनेनार्थियोग्यं नवविधेयकम् ॥ १२६ ॥

नामावल्या समुल्लेखः परिशिष्टे प्रकाश्यताम् ।
तत्र न्यूनाधिकं कर्तुं अधिकारोऽधिकारिणाम् ॥ १२७ ॥

असौ ब्रह्मसमाजेन पुरा मार्गः प्रदर्शितः ।
सुधारकाश्चानुकुर्युस्तं मार्गं तिलकोऽब्रवीत् ॥ १२८ ॥

तिलकेन विरोधो न स्वातन्त्र्यस्य कृतः कदा ।
आचारे तत्त्वनिष्ठानां स्पष्टमेतद्विवेचनात् ॥ १२९ ॥

पूर्णस्वातन्त्र्यमाचारे हिन्दूनां धार्मिके सदा ।
संरक्षितुं पुरोयातस्तिलकः शास्त्रवित् खलु ॥ १३० ॥

पूर्वग्रन्थे सुकथितो मलबारीपरिश्रमः ।
बालोद्वाहप्रथालोपे प्रौढोद्वाहोदये तथा ॥ १३१ ॥

कृतो निषेधो बहुभिः पण्डितैश्च सुशिक्षितैः ।
महाजनैश्च जातीनां सर्वप्रान्तनिवासिभिः ॥ १३२ ॥

तिलकान्दोलनेनैव विरोधो भीषणोऽभवत् ।
गुजराते महाराष्ट्रे तथा कर्णाटकेऽपि च ॥ १३३ ॥

विधेश्च धार्मिकं रूपं विरोधस्य च तीव्रताम् ।
प्रतिकूलं जनमतं ज्ञात्वा डफरिनोऽब्रवीत् ॥ १३४ ॥

प्रतिकूलेषु लोकेषु लोकाचारनियन्त्रणे ।
धर्मक्षेत्रे करक्षेपो शासनस्य च नोचितः ॥ १३५ ॥

अयशस्वी बभूवैवं मलबारीप्रचोदितः ।
परिवर्तनयत्नोऽयं बालोद्वाहविधेस्तदा ॥ १३६ ॥

उप्तं मलबारिणा बीजं जातस्तस्याङ्कुरोद्भवः ।
तज्जातं संमतिवय्योविधेयं केन्द्रसंसदि ॥ १३७ ॥

सूर्यग्रहमिते वर्षे चाष्टादशशतोत्तरे ।
केन्द्रसंसदि चानीतं स्कोबलेन विधेयकम् ॥ १३८ ॥

मैथुनं बालया सार्धमपूर्णद्वादशाब्दया ।
दोषो भवेदतो दण्ड्यः संगन्तापि पतिर्यदि ॥ १३९ ॥

स बलात्कृतसंभोगो विज्ञेयो न्यायदर्शिभिः ।
मर्यादा वयसः पूर्वं दश वर्षाणि वै स्मृता ॥ १४० ॥

दण्डशासनशास्त्रस्य शोधनाय विधेयकम् ।
संपाद्य स्कोबलेनैवं स्थापितं केन्द्रसंसदि ॥ १४१ ॥

अतिक्रमं न धर्मस्य करोतीदं विधेयकम् ।
धर्मशास्त्रे न चोल्लेखः क्वाप्यस्ति वयसः स्त्रियाः ॥ १४२ ॥

आद्यसंभोगकालस्य पुरुषेण तया सह ।
तस्माद् न धर्मशास्त्रस्य कुर्म उल्लङ्घनं वयम् ॥ १४३ ॥

रमेशचन्द्रदत्तेन स्वो विरोधः प्रदर्शितः ।
अतिक्रमणमस्त्येव धर्मस्यात्रेति सोऽब्रवीत् ॥ १४४ ॥

कन्यान्त आ हिमवतो दक्षिणोत्तरविस्तृतः ।
पूर्वापराब्धिविस्तीर्णः प्रक्षुब्धो जनसागरः ॥ १४५ ॥

उपप्लवः समुद्भूतः क्षोभमारुतरंहसा ।
प्लावितानि सभोत्तुङ्गतरङ्गैः पत्तनान्यपि ॥ १४६ ॥

निषेधघोषणाभिश्च पूरितं सर्वमम्बरम् ।
ग्रामखेटकपल्लीभ्यो धिक्कारध्वनिरुत्थितः ॥ १४७ ॥

म्लेच्छा यथा तथैवाङ्ग्ला धर्मस्योच्छेदकारिणः ।
अभवन्निति चोत्पन्नं भारते व्यसनं महत् ॥ १४८ ॥

अङ्गवङ्गकलिङ्गेषु मगधोत्कलयोस्तथा ।
जनक्षोभः समुद्भूतः प्रचण्डो दत्तयत्नतः ॥ १४९ ॥

लोकैः काश्यां प्रयागे च मालवीयपुरःसरैः ।
दर्शितो जनसंक्षोभः सभासंमेलनादिषु ॥ १५० ॥

मध्यदेशमहाराष्ट्रसह्याद्र्यब्धितटादिषु ।
आविर्भूतः क्षोभपूरस्तिलकस्य प्रयत्नतः ॥ १५१ ॥

राज्यकर्तृनिषेधाय सहस्राणि सहस्रशः ।
जना अज्ञाश्च सुज्ञाश्च समायान्ति सभास्थलम् ॥ १५२ ॥

सुधारकाश्चिकीर्षन्तो विधेयकसमर्थनम् ।
न शक्नुयुः सभां कर्तुमुत्सुका अपि कुत्रचित् ॥ १५३ ॥

सुधारकाः पुणेपुर्यां क्रीडाभुवनसंगताः ।
प्रायो द्विशतसंख्याका विधेयकसमर्थने ॥ १५४ ॥

सहस्रशस्ततो लोकाः प्रतिकूला समाययुः ।
प्रतिषिद्धप्रवेशास्ते चुक्रुधुः स्वैरवर्तिनः ॥ १५५ ॥

धूलिक्षेपादिकै रोषाच्चक्रुः कोलाहलं जनाः ।
बहिःस्थानां तदा तेषामुद्ध्वस्ता व्यत्ययैः सभा ॥ १५६ ॥

तिलको नामजोशी च सभास्थानमुपस्थितौ ।
अध्यक्षः प्रार्थयामास तौ शान्तिः स्थाप्यतामिति ॥ १५७ ॥

गणयन्ति जना एते मामेवापि सुधारकम् ।
अब्रवीत् तिलकस्तत्र सभाध्यक्षं महामतिः ॥ १५८ ॥

समापितं सभाकार्यमध्यक्षेण निराशया ।
न सिद्धिं गत उद्देशो व्यत्ययाद् विघ्नकारिणाम् ॥ १५९ ॥

बहिर्गतः सभाध्यक्षो रक्षितः शान्तिरक्षकैः ।
भाण्डार्करो गृहं नीतो विषण्णश्चाधिकारिभिः ॥ १६० ॥

संदेशं वैद्युतं प्रेष्य सभावृत्तान्तबोधकम् ।
सुधारकाग्रणीर्दर्पं तिलकाय प्रदत्तवान् ॥ १६१ ॥

टाइम्सवृत्तपत्राय शासकस्तोत्रपाठिने ।
द्रोहिणे भारतीयानां तिलकस्य विशेषतः ॥ १६२ ॥

सभागृहबहिःस्थेषु सभाव्यत्ययकारिषु ।
शान्तताभङ्गदोषार्थं नराः पञ्च निरोधिताः ॥ १६३ ॥

शान्तिसंरक्षकैः शीघ्रं नीतास्ते न्यायमन्दिरम् ।
न्यायाधीशोऽकरोत् तेषां यथाविधि समीक्षणम् ॥ १६४ ॥

दोषिणां दोषसिद्ध्यर्थं समाहूताश्च साक्षिणः ।
वादिना शासनेनैव रामकृष्णादिसज्जनाः ॥ १६५ ॥

निर्णये प्राड्विवाकेन नराः पञ्च निरागसः ।
दोषः स्पृशति नैतांश्च मतमेवं प्रदर्शितम् ॥ १६६ ॥

लोकानां मतमाक्षिप्य सभायां तद् विधेयकम् ।
मतं बहुमतेनेति शासनेन च घोषितम् ॥ १६७ ॥

जाते प्रान्तसभायाश्च पुण्यग्रामेऽधिवेशने ।
प्रशासननिषेधस्य प्रस्तावः संमतोऽभवत् ॥ १६८ ॥

विधेयकं तु संमत्य भारतीयमतं खलु ।
नादृतं शासकैर्यत् तच्छोच्यमित्थं सभामतम् ॥ १६९ ॥

विधेयकस्य चास्यैवान्दोलनेन प्रदर्शितः ।
वर्धिष्णुस्तिलकस्यासीत् प्रभावो राजकारणे ॥ १७० ॥

तिलकस्य प्रभावेण शङ्कितास्ते सुधारकाः ।
बभूवुः स्वास्पदस्थैर्यं गोखलेमाधवादयः ॥ १७१ ॥

तिलकस्यादरो लोके वर्धिष्णुर्दुःसहोऽभवत् ।
श्रेष्ठस्यागरकरस्यापि तत्रान्येषां तु का कथा ॥ १७२ ॥

जाता प्रसिद्धिर्लोकेषु तिलको धर्मरक्षकः ।
विदुषामितरेषां च नैवासौ धर्मकण्टकः ॥ १७३ ॥

भक्षितं तिलकेनान्नं स्थानके पुण्यपत्तने ।
यवनैः सेवकैर्दत्तमित्थमुक्तं च केनचित् ॥ १७४ ॥

चिकीर्षुणा यशोहानिं तिलकस्य प्रकाशितम् ।
सुधारकेऽगरकरेण पत्रे संपादिते स्वयम् ॥ १७५ ॥

मृषैतद् विद्यते सर्वं घोषितं यत् सुधारके ।
म्लेच्छान्नं न मया भुक्तमित्याह तिलकस्तदा ॥ १७६ ॥

उपेक्ष्यागरकरस्तस्य निषेधं हि सुधारके ।
प्रकाशितं प्रमादेनेत्यलिखन्नापि खेदतः ॥ १७७ ॥

आगरकरो निषेधं तमविचार्य सुधारके ।
तूष्णीमव्यक्तखेदः सन् तस्थौ बुद्धिपुरःसरम् ॥ १७८ ॥

न्यायालये प्रकरणं नेतुं संकल्पितं तदा ।
तदर्थं प्रार्थनापत्रमलिखत्तिलकः स्वयम् ॥ १७९ ॥

ज्ञात्वा कलह उत्पन्नो बालगोपालयोरिति।
माधवो विग्रहान्ताय मित्रयोः समुपस्थितः ॥ १८० ॥

न देयं प्रार्थनापत्रं भवद्भिर्न्यायमन्दिरे।
साम्ना समापनीयोऽयं वाद इत्यब्रवीत्तदा ॥ १८१ ॥

प्रत्युत्तरं ददौ बालो माधवाय शमोत्सुकः।
मिथ्यारोपः कृतः सर्वो गोपालेन सुधारके ॥ १८२ ॥

मयाऽसत्यं विधानं यत् प्रमादेन प्रकाशितम्।
तद् ज्ञात्वाऽस्मि भृशं खिन्नस्तेनैवं लिख्यतां पुनः ॥ १८३ ॥

वादस्य कारणे नष्टे सर्वं शान्तं भविष्यति।
नाहं समुत्सुको गन्तुं कदापि न्यायमन्दिरम् ॥ १८४ ॥

आगरकरः क्षमालेखं तथा चैवालिखत् स्वयम्।
माधवस्योपदेशेन वादश्चोपशमं गतः ॥ १८५ ॥

जना ददुर्धन्यवादान् माधवाय यशस्विने।
शान्तोऽभूत्कलहाग्निस्तु सामवारिनिषिञ्चनात् ॥ १८६ ॥

स्वकारावासवृत्तान्ते विचारा ये प्रदर्शिताः।
गोपालेनोपयुक्तास्ते वृत्तपत्रस्य लेखने ॥ १८७ ॥

न चैव विश्वसेच्छब्दे ख्यातस्यापि महात्मनः।
कार्यं स्वाधीनमादौ तु तदाधारप्रमाणकम् ॥ १८८ ॥

उपेक्षितं च कालेऽस्मिन् तत्त्वमागरकरेण तत्।
क्रोधावेशाद्विलुप्ता धीर्नीरक्षीरविवेकिनी ॥ १८९ ॥

हिन्दूनां यवनानां च दृष्टमैक्यं विधेयके।
म्लेच्छाः सभासु मुम्बय्यां संयुता हिन्दुभिः सह ॥ १९० ॥

आन्दोलनेन समवाप्तदिगन्तकीर्ति-
रादर्श एव खलु भारतसभ्यतायाः।

योद्धाप्यधीतनिगमः स्मृतिशास्त्रवेत्ता
मान्यः स्वधर्मतिलकस्तिलकः स्वदेशे ॥ १९१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे स्वधर्मरक्षणाख्यः षोडशस्तरङ्गः ।

## सप्तदशस्तरङ्गः

श्रीसयाजीमहाराजो गायक्वाडकुलोद्भवः ।
आसीद् वटोदराराज्ये नृपः सिंहासनस्थितः ॥ १ ॥

प्रजासु वत्सलो भूपः सदा लोकहिते रतः ।
राजनिष्ठा प्रजा तस्य संतुष्टोत्कर्षलालसा ॥ २ ॥

विद्यालया हि बहवः स्थापितास्तन्निदेशतः ।
विद्यार्जनं विना शुल्कमकुर्वंस्तत्र बालकाः ॥ ३ ॥

नगरे खेटके चापि ग्रन्थालयविनिर्मितिः ।
राज्ञा वटोदराराज्ये कृता विद्याभिलाषिणा ॥ ४ ॥

तद्राज्ञीं चिमणानाम्नीमन्नपूर्णामिव प्रजाः ।
अपूजयंश्च राजानं विश्वेश्वरमिवापरम् ॥ ५ ॥

सार्वभौमप्रतिनिधेर्निवासोऽभूद् वटोदरे ।
हितबोधाय समये संस्थानाधिपतेः किल ॥ ६ ॥

स्वयं विद्वान् कलावेत्ता राजनीतिविशारदः ।
पाश्चात्त्यदेशसंचाराद् व्यापकां दृष्टिमाप्तवान् ॥ ७ ॥

संस्कृतेर्भारतीयानामभिमान्युन्नतिप्रियः ।
प्रजोत्कर्षविधानानामनुष्ठाने सदोत्सुकः ॥ ८ ॥

स्वमतेनैव संस्थाने शासनं चाकरोन्नृपः ।
अयाचितं प्रतिनिधेरुपदेशं न चाग्रहीत् ॥ ९ ॥

अन्तर्गतव्यवस्थायां स्वराज्यस्य स्वतन्त्रता ।
संस्थानिकस्य संपूर्णा समयस्यानुसारतः ॥ १० ॥

तदाचारस्तथैवासीत् तेन शल्यसमुद्भवः ।
हृदि प्रतिनिधेः प्रायः पूर्वसौहार्दबाधकः ॥ ११ ॥

संस्थानशासिनीं रीतिं काकदृष्ट्या व्यलोकयत् ।
बिडालकः प्रतिनिधिश्छिद्रान्वेषणतत्परः ॥ १२ ॥

पशुमूर्ध्नि स्थितः काको न च शंसति तद्वपुः ।
करोत्यथापि सूक्ष्मस्य व्रणस्यैव गवेषणम् ॥ १३ ॥

उत्कृत्य किन्तु तच्चञ्च्वा लेढि पूयं च लोहितम् ।
कृतकृत्यं च मन्वानो मोदते पीडिते पशौ ॥ १४ ॥

गर्हणीयः स्वभावोऽयं खलानां काकचक्षुषाम् ।
कारणं व्यसनानां यः सात्त्विकानां निरागसाम् ॥ १५ ॥

भूमापनं सर्वराज्ये समारब्धं नृपाज्ञया ।
इलीयटः सखा राज्ञस्तत्कार्यस्य निरीक्षकः ॥ १६ ॥

सहायकोऽभवत् तस्य वासुदेवाभिधो युवा ।
चतुरः कार्यकुशलो विप्रो बापटवंशजः ॥ १७ ॥

इलीयटः समाकृष्टो गुणैस्तस्य विशेषतः ।
अधिकारपदं श्रेष्ठं तेनासौ प्राप बुद्धिमान् ॥ १८ ॥

संस्थानेशोऽपि तत् कार्यं दृष्ट्वा संतोषकारकम् ।
अमंस्त तं कृपापात्रं पूर्णविश्वासभाजनम् ॥ १९ ॥

शीघ्रं तस्य समुत्कर्षाद् वासुदेवस्य धीमतः ।
असूया हृदि संजाता केषांचिन्मन्त्रिणामपि ॥ २० ॥

द्रुममूलस्थितात् सर्पान्न बिभेति कपिः कदा ।
द्रुमाग्राद् लब्धधैर्यस्तु साटोपं तं स पश्यति ॥ २१ ॥

यो भूपस्य कृपाछत्रमाश्रितस्तस्य भीः कुतः ।
निश्चिन्तो वासुदेवोऽभूत् स्वकर्तव्यपरायणः ॥ २२ ॥

तद्दत्तैर्निर्णयैर्ये वै दुःखिता भूमिधारकाः ।
पत्राणि प्रेषयामासुस्तदाक्षेपकराणि च ॥ २३ ॥

तद्वरिष्ठाधिकारी च मतं श्रुत्वा प्रवादिनाम् ।
समीक्ष्येलीयटः सर्वं न्यायविन्निर्णयं ददौ ॥ २४ ॥

इलीयटे गते देशं युक्तो मेकानकिस्तदा ।
मापनायोगमुख्यस्य पदे मुख्येन मन्त्रिणा ॥ २५ ॥

यूरोपस्य च यात्रार्थं प्रतस्थे नृपतिः स्वयम् ।
तदा तस्य प्रतिनिधिर्मुख्यमन्त्री बभूव ह ॥ २६ ॥

सर्वाधिकारसंपन्नो मुख्यमन्त्रिपदस्थितः ।
मणिभाईतिनाम्ना यः प्रसिद्धः सर्वभारते ॥ २७ ॥

धूर्तास्त्रयः संमिलिता मेकानकिबिडालफौ ।
मणिभाई त्रयोऽप्येते संस्थानहितशात्रवः ॥ २८ ॥

संनिपातस्त्रिदोषाणां प्राणसङ्कटकारकः ।
धूर्तत्रयस्य संयोगः संस्थानापायकारकः ॥ २९ ॥

विद्वत्त्वविनयौदार्यगुणैः सर्वत्र पूजितः ।
राजा न तत्प्रहाराणां लक्ष्यं भवितुमर्हति ॥ ३० ॥

तदङ्कितविनाशेन जायते तन्मनोव्यथा ।
तस्माद् बापटदोषाणां कर्तव्या सिद्धिरेव नः ॥ ३१ ॥

इति मन्त्रोऽभवत् तेषां कूटश्चाणक्यशंसितः ।
आरेभिरे प्रयत्नांस्ते तत्पूर्त्यर्थं दिवानिशम् ॥ ३२ ॥

संस्थानान्तर्व्यवस्थाया अप्राशस्त्यस्य सिद्धये ।
सिद्धिर्बापटदोषाणां भवेत् प्रबलसाधनम् ॥ ३३ ॥

क्षिप्तेनैकेन बाणेन म्रियेते द्वौ हि पक्षिणौ ।
बापटस्य विनाशश्च राज्यस्याप्ययशस्तथा ॥ ३४ ॥

बापटो निःसहायोऽभूत् प्रतिकूलेऽधिकारिणि ।
उदासीनानि मित्राणि शत्रूणां वर्धितं बलम् ॥ ३५ ॥

केतुना भास्करे ग्रस्ते सेवितुं तं बुधादयः ।
सतारकाः प्रवर्तन्ते तस्यैवानुनये रताः ॥ ३६ ॥

सुहृद्वरश्च तिलकः केसरीपत्रचालकः ।
मित्रापत्तिमजानीताधिकारिजननिर्मिताम् ॥ ३७ ॥

सुरक्षा बापटस्यासीत् शङ्कनीया वटोदरे ।
ज्ञात्वा शीघ्रं तमानेतुं पुण्यग्राममियेष सः ॥ ३८ ॥

वासुदेवाभिधो जोशी तिलकस्य सुहृद्वरः ।
तमाह तिलको गत्वा शीघ्रमानय बापटम् ॥ ३९ ॥

गत्वाथ वासुदेवोऽसौ न्यवसद् बापटालये ।
शोचनीयां दशां तस्य ददर्श च विचक्षणः ॥ ४० ॥

आयातुं न जनः कोऽपि प्रभवेत् तस्य संनिधिम् ।
मुख्यमन्त्रिभयात् सर्वो बभूव च पराङ्मुखः ॥ ४१ ॥

भयप्रलोभनद्रव्यदानैस्तत्राधिकारिणः ।
साक्षिकार्यमनुष्ठातुं चोदयन्त्यधमाञ् जनान् ॥ ४२ ॥

त्रिभिर्धूर्तैर्मणीभाईमेकानकिबिडालफैः ।
हठात् संपादितं चासीत् सर्वं कपटनाटकम् ॥ ४३ ॥

न्यायस्य संभवो नात्र दुराग्रहसमुद्यमे ।
विषवृक्षः प्रयच्छेत् किं सुधास्वादुफलं खलु ॥ ४४ ॥

अधिकारिषु दुष्टेषु श्रेयांस्त्यागः स्थलस्य वै ।
बापटं च बहिर्नेतुं तस्माद् जोशी मनो दधे ॥ ४५ ॥

गमनागमने तस्य चारैर्नित्यं निरीक्षिते ।
तथा साहायकस्यापि गुप्तवेषैर्वटोदरे ॥ ४६ ॥

प्रस्थितः स्थानकं जोशी गन्तुं पुण्यपुरीं प्रति ।
अन्वयाद् बापटस्तं च शिष्टाचारपरीक्षया ॥ ४७ ॥

समायातेऽग्निशकटे जोशी चान्तर्विवेश सः ।
वार्तालापं प्रकुर्वाणो बापटस्तत्पुरः स्थितः ॥ ४८ ॥

तत्प्रस्थानक्षणे शीघ्रमुत्प्लुत्य रथमाविशत् ।
पुण्यग्रामं समागच्छद् बापटो जोशिना सह ॥ ४९ ॥

नाशक्नुवन्निरोद्धुं तं तत्र राज्याधिकारिणः ।
आङ्ग्लराज्याङ्किता भूमिरग्नियानपथावृता ॥ ५० ॥

लाक्षागृहाद् विनिर्याता जनन्या सह पाण्डवाः ।
विदुरप्रोक्तयन्त्रेण वर्णितं चेति भारते ॥ ५१ ॥

तथा तिलकमन्त्रेण बापटोऽपि बहिर्गतः ।
प्रज्वलद्द्वेषसंक्षोभाद् भयावहवटोदरात् ॥ ५२ ॥

अज्ञातवासे पक्षाणां बापटोऽयापयत् त्रयम् ।
तिलकोऽचिन्तयत् तस्योपायमापद्विभञ्जकम् ॥ ५३ ॥

रत्नागिर्यां समुत्पन्नौ विप्रौ तिलकबापटौ ।
समुद्भूतं तयोर्बाल्यादेव यत् स्नेहबन्धनम् ॥ ५४ ॥

प्रौढे वयसि संवृद्धं सुमित्रोचितकर्मभिः ।
एकप्राणा भिन्नदेहाः खरेतिलकबापटाः ॥ ५५ ॥

ख्यातिं विद्यालये प्रापुस्त्रयस्ते स्नेहबन्धनात् ।
स्नेहद्रुर्वृद्धिमापन्नो निषिक्तः प्रेमवारिणा ॥ ५६ ॥

आचरन् प्रेमबद्धास्ते गार्हस्थ्ये भ्रातृसंनिभाः ।
राजद्वारे श्मशाने च साह्यं कर्तुं समुत्सुकाः ॥ ५७ ॥

श्रेष्ठी बापटमाध्यस्थ्यात् तिलकाय वटोदरे ।
ऋणं पञ्च सहस्राणि ददावित्येव नः श्रुतम् ॥ ५८ ॥

अदर्शनेन सहसा बापटस्य वटोदरात् ।
दिङ्मूढाश्चकिताश्चासन् संस्थानस्य निवासिनः ॥ ५९ ॥

व्यर्थीभूताः प्रयत्नाश्च बापटान्यायसिद्धये ।
अतोऽधिकारिणां सर्वं जातं तज्जलताडनम् ॥ ६० ॥

समीपं हि समानीतं श्वापदं हन्तुमिच्छतः ।
व्याधस्य शस्त्रहस्तस्य चित्तक्षोभो यथा भवेत् ॥ ६१ ॥

शीघ्रं तस्मिंस्तिरोभूते प्रविश्य गहनं वनम् ।
वटोदरे तथैवासीच्चित्तक्षोभोऽधिकारिणाम् ॥ ६२ ॥

बापटस्यानुपस्थित्या मत्वा न्यायसमीक्षणम् ।
अशक्यमित्युपायं ते त्रयोऽथान्यमयूयुजन् ॥ ६३ ॥

न्यायतत्त्वानुपद्धत्या बापटान्यायशोधनम् ।
कर्तुं नियोजितैका तैः समिती राजशासनात् ॥ ६४ ॥

समुद्रग्रहदिक्पालभूमितेऽब्दे ततोऽभवत् ।
त्रयोदशदिने मासेऽष्टमे समितिघोषणा ॥ ६५ ॥

समितिस्थापनावार्तां तां ज्ञात्वा बापटोऽगमत् ।
वटोदरमुपातिष्ठत्समितेश्च पुरः स्वयम् ॥ ६६ ॥

दोषा मृषा निष्प्रमाणा उक्ता ये वादिपत्रके ।
इति दर्शयितुं धीमान् शुद्धं शीलं तथात्मनः ॥ ६७ ॥

विपरीतान् ग्रहान् पूर्वान् मुख्यानामधिकारिणाम् ।
विचारार्थं स्थापयितुं समितेश्च सभासदाम् ॥ ६८ ॥

विख्याता अभिवक्तारो मेथाब्रानसनादयः ।
आनीता वै शासनेन मुम्बापुर्या वटोदरम् ॥ ६९ ॥

तिलको बापटस्यार्थे यत्नांश्चक्रे दिवानिशम् ।
प्रतिपक्षीयसाक्ष्याणामविश्वास्यत्वसिद्धये ॥ ७० ॥

प्रवादिने बापटस्य नित्यं प्रश्नावलिं ददौ ।
गुर्जरीलिपिलेखांस्तु बापटोऽवाचयत्तदा ॥ ७१ ॥

आयव्ययस्य लेखानां कृत्वा सूक्ष्मनिरीक्षणम् ।
तत्रस्था असदुल्लेखाः शोधिताश्च प्रयत्नतः ॥ ७२ ॥

परिपृष्टान् समित्या तान् परिप्रश्नान् विमर्शितुम् ।
चतुर्मासाधिकः कालो व्यतीतो मित्रमोचने ॥ ७३ ॥

दृष्ट्वा चातुर्यनैपुण्ये तिलकस्य च दक्षताम् ।
प्रदीर्घोद्योगसामर्थ्यं प्रत्युत्पन्नां मतिं तथा ॥ ७४ ॥

मण्डने खण्डने चापि स्वपक्षप्रतिपक्षयोः ।
विषयाकलनं शीघ्रं समयोचितभाषणम् ॥ ७५ ॥

प्रवादिनौ स्वपक्षीयौ आपटे च तथा खरे ।
मेथाभाईशंकरश्च तृतीयो ब्रान्सनस्तथा ॥ ७६ ॥

प्रतिपक्षीयविद्वांसो विधिशास्त्रविशारदाः ।
तिलकं कर्मनिरतं मुक्तकण्ठं प्रतुष्टुवुः ॥ ७७ ॥

अन्ते साक्षिपरीक्षायाः सम्मरोपे प्रवादिनोः ।
जातेऽपि बापटस्यार्थे लेख एकः समर्पितः ॥ ७८ ॥

बापटो नास्ति दोषीति तिलकेनात्र दर्शितम् ।
सविस्तरं सप्रमाणं कृत्वा साक्ष्यविवेचनम् ॥ ७९ ॥

दर्शिताः प्रथमं दोषाः षट्त्रिंशद् वादिना खलु ।
चतुर्णां विंशतेश्चापि न कर्तव्यं समीक्षणम् ॥ ८० ॥

इत्युक्तं वादिना पश्चात् ते तेनैव निराकृताः ।
समितिर्द्वादशानां च शेषाणां निर्णयं ददौ ॥ ८१ ॥

एकादशानां दोषाणामनुष्ठातास्ति बापटः ।
वर्ततेऽदोष एकस्मिन्नेवं समितिनिर्णयः ॥ ८२ ॥

सूचितं तत्र भूपाय निम्नोक्तं तस्य दण्डनम् ।
कारानिवासः षण्मासमयुतद्रव्यसंयुतः ॥ ८३ ॥

समाप्तिकाले कार्यस्य समितेर्देशमागमत् ।
राजा सयाजी यूरोपाद् न्यायवेत्ता दयानिधिः ॥ ८४ ॥

निर्णयस्य सदोषत्वं तिलकेन प्रदर्शितम् ।
समर्पिते वै भूपाय पत्रे तेन सविस्तरम् ॥ ८५ ॥

समितेर्निर्णयस्यापि समीक्षार्थं समादिशत् ।
पण्डितं च दलालं च राजा न्यायविदां वरौ ॥ ८६ ॥

अभिप्रायं तयोर्ज्ञात्वा निरागस्त्वं विशेषतः ।
तत्र मुख्येषु दोषेषु पुनर्दोषान् परीक्षितुम् ॥ ८७ ॥

दिवाणं न्यायमूर्तिं च संस्थानस्य न्ययुङ्क्त सः ।
राज्ञेऽर्पितं मतं ताभ्यामल्पकालेन वै पृथक् ॥ ८८ ॥

ज्ञात्वा चैव तयोः सम्यङ् मतं तत्र सुनिश्चितम् ।
संपरीक्ष्य स्वबुध्द्या तच्चान्तिमं निर्णयं ददौ ॥ ८९ ॥

नापराधी बापटोऽस्ति निर्दोषश्चैव सर्वथा ।
देयं तस्मै शतं सार्धं शुल्कं सेवानिवृत्तितः ॥ ९० ॥

बापटस्तिलकस्नेहात्पुण्यपुर्यामुवास सः ।
यावज्जीवं प्रीतियुक्तो दारापुत्रसमन्वितः ॥ ९१ ॥

बापटो वासुदेवोऽसौ नैकविघ्नसमाकुलः ।
राज्ञा दत्तेन शुल्केन योगक्षेममुवाह ह ॥ ९२ ॥

यावदायुः कृपाछत्रं राज्ञस्तस्योपरि स्थितम् ।
तस्मिन् मृते सुतायापि ददौ राजा निजाश्रयम् ॥ ९३ ॥

रूप्याणि त्रिंशतं तस्मै प्रतिमासं ददौ नृपः ।
तिलकस्य प्रयत्नेन शिक्षणार्थं महामनाः ॥ ९४ ॥

वटोदरजलाशये गज इव स्थितो बापटो
नृपाङ्गणगतः खलो जलचरोऽग्रहीत् तं बलात् ।

मुमुक्षुरकरोत् स्तवं तिलकदेवविष्णोर्निज-
ममोचयदिभोपमं तिलक आशु मित्रोत्तमम् ॥ ९५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे बापटगजेन्द्रमोक्षो नाम सप्तदशस्तरङ्गः ।

# अष्टादशस्तरङ्गः

पारतन्त्र्यवशो भाति भारतीयोऽल्पपौरुषः ।
रुद्धवीर्यो यथा व्याघ्रः पञ्जरे श्वापदालये ॥ १ ॥

अत्ति मांसं पिबत्यम्बु प्रदत्तं रक्षकेण यत् ।
परान्नभोजी दुर्दैवादाबाल्याच्च हतात्मधीः ॥ २ ॥

ज्ञानं तस्य न वंशस्य स्वभावस्य स्वकर्मणः ।
कान्ताराश्रितसत्त्वानामधिराजपदस्य च ॥ ३ ॥

दृष्ट्वा तमामिषं प्राप्तं मध्याह्ने स बुभुक्षितः ।
पुच्छं धुनोति सानन्दं स्वल्पेनापि च तोषितः ॥ ४ ॥

मन्यते परमं मित्रं जनं स्वातन्त्र्यहारिणम् ।
नखदंष्ट्रायुधोऽप्यज्ञश्चिरं वसति बन्धने ॥ ५ ॥

अज्ञानं पारतन्त्र्यस्य ज्ञानं मोक्षस्य कारणम् ।
तिलकोऽज्ञाननाशाय संबभूव प्रयत्नवान् ॥ ६ ॥

सत्यं रूपं किमाङ्ग्लानामागताः कथमत्र ते ।
कुतस्तेषां जयप्राप्तिः कुतोऽस्माकं पराजयः ॥ ७ ॥

के दोषा भारतीयानां राष्ट्रस्वातन्त्र्यघातकाः ।
अहोरात्रं च तत् सर्वं तिलको ह्यचिन्तयत् ॥ ८ ॥

बहुधा भिन्नचित्तानां लोकानां संग्रहाय सः ।
योजयामास विविधानुपायानैक्यवर्धिनः ॥ ९ ॥

पर्वते पतितं तोयं प्रवाहेषु गतं पृथक् ।
संमीलितं च तत्सर्वं बृहत्स्रोतोऽभिजायते ॥ १० ॥

प्राप्यते तत्प्रपातेन यथा शक्तिश्च विद्युतः ।
लोकशक्तिस्तथा प्राप्ता तिलकेनापि धीमता ॥ ११ ॥

गणेशार्चासमारोहः शिवजन्मदिनोत्सवः ।
तरुणोत्साहवृध्द्यर्थं क्रीडागृहविनिर्मितिः ॥ १२ ॥

लोकशक्तिसमुत्पत्तिः प्रतिकाराय चापदाम् ।
राष्ट्रैक्यभावनोत्कर्ष इति साधनपञ्चकम् ॥ १३ ॥

भारतोद्धारसिध्द्यर्थं तिलकेन प्रपञ्चितम् ।
कृतः परिश्रमस्तस्य प्रचारार्थमहर्निशम् ॥ १४ ॥

महाराष्ट्रे विदर्भे च कर्णाटे कोसले तथा ।
विचाराः प्रसृतास्तस्य राष्ट्रचैतन्यवर्धकाः ॥ १५ ॥

साध्यमिग्लंडवर्चस्वाद् भारतस्य विमोचनम् ।
साधनानां च निर्देशः कृतः पूर्वं समासतः ॥ १६ ॥

घटनाश्रितमार्गेण साधनानामुपाश्रयः ।
कर्तव्यो रोषसंतोषौदासीन्यैरधिकारिणाम् ॥ १७ ॥

त्यागिभिर्जनतामुख्यैर्देशसेवापरायणैः ।
शान्तचित्तेन धैर्येण संयमेन च निर्भयैः ॥ १८ ॥

केसरीपत्रलेखेभ्य उक्तिभ्यश्चानुमीयते ।
सिद्धान्तस्तिलकस्यात्र राजनीतिनिदर्शकः ॥ १९ ॥

करिष्ये वर्णनं तेषां संक्षेपेण यथाक्रमम् ।
साधनानां तदुक्तानां स्वल्पमीमांसया सह ॥ २० ॥

भाद्रमासे सिते पक्षे चतुर्थ्यां हिन्दुसद्मसु ।
पूजयन्ति गणेशस्य प्रतिमां मृन्मयीं जनाः ॥ २१ ॥

पूजामहोत्सवं कृत्वा गाणपत्या यथाविधि ।
विसर्जयन्ति मूर्तिं तां चतुर्दश्यां जलाशये ॥ २२ ॥

वेदघोषेण संगीतपुराणहरिकीर्तनैः ।
दीपोत्सवान्नदानाभ्यां रमन्ते चोत्सवे जनाः ॥ २३ ॥

गाणपत्या इति ख्याताः पटवर्धनवंशजाः ।
संस्थानिकास्तदन्येऽपि वितन्वन्ति महोत्सवम् ॥ २४ ॥

श्रेष्ठिनो धनिकाः केचिद् भूमिधारकसज्जनाः ।
समारोहेण चार्चन्ति विदर्भेषु गजाननम् ॥ २५ ॥

गोदादेशेऽपरान्ते च महाराष्ट्रविदर्भयोः ।
मन्दिराणि गणेशस्य पुराणोक्तानि कानिचित् ॥ २६ ॥

चिन्तामणिर्विदर्भे च कदम्बेऽस्ति शुभप्रदः ।
विनायकः सुविख्यातश्चादाशग्राममन्दिरे ॥ २७ ॥

मयूरेशश्चिंचवडे महाराष्ट्रे प्रतिष्ठितः ।
सुविख्याते पुळेक्षेत्रे कोङ्कणे च गजाननः ॥ २८ ॥

गणेशः पूज्यते भक्त्या संकष्टीव्रतधारिभिः ।
कृष्णपक्षे चतुर्थ्यां च चन्द्रोदयशुभे क्षणे ॥ २९ ॥

विनायकव्रतं येषां चतुर्थी शुक्लपक्षगा ।
तेषामुपास्यपूजायै विहितागमकोविदैः ॥ ३० ॥

पठन्तोऽथर्वशीर्षस्थमन्त्रांस्ते सस्वरं द्विजाः ।
एकविंशतिदूर्वाभिः पूजयन्ति गणाधिपम् ॥ ३१ ॥

मोदकानामपूपानां नैवेद्ये वैकविंशतिम् ।
समर्पयन्ति सद्भक्त्या देवाय ब्राह्मणाय च ॥ ३२ ॥

कामादयः षडरयो विषयाः पञ्च वै तथा ।
इन्द्रियैर्दशभिर्युक्ता एकविंशतिहेतवः ॥ ३३ ॥

तमोरजोविवृद्धेश्च सत्त्वहानेर्नरस्य च ।
तद्देवायार्पणं दूर्वापूपरूपेण सूचितम् ॥ ३४ ॥

धृतदेवशरीरोऽयं प्रणवो गणनायकः ।
चत्वारः सोपवेदाङ्गा वेदाः स्वतनुमाश्रिताः ॥ ३५ ॥

इतिहासः पुराणानि साहित्यं दर्शनानि च ।
अलंकारा यथा भान्ति गणेशे मंगलास्पदे ॥ ३६ ॥

लोलुपस्ताण्डवे नृत्ये गणेशोऽपि शिवो यथा ।
नृत्यन्तं द्रष्टुमायान्ति विबुधास्तं कलानिधिम् ॥ ३७ ॥

गणानां त्वेतिमन्त्रस्य द्रष्टा गृत्समदो मुनिः ।
गणेशावाहने तस्य विनियोगः प्रकीर्तितः ॥ ३८ ॥

लङ्कासु ब्रह्मदेशेषु कम्बोजमलयेष्वपि ।
यववालिसयामेषु लवास्वन्नामभूमिषु ॥ ३९ ॥

मन्दिराणि गणेशस्य प्रतिमाश्चाश्मनिर्मिताः ।
भारताद् बहिराग्नेय्यां विद्यन्ते जलभूमिषु ॥ ४० ॥

उमाशिवगणेशानां मूर्तयो मन्दिराणि च ।
मध्यपातालदेशानां विद्यन्ते काननेऽधुना ॥ ४१ ॥

गणेशार्चासंप्रदायः प्राचीनो विश्वसंमतः ।
अस्तीति सर्वे विद्वांसः कथयन्ति पुराविदः ॥ ४२ ॥

विद्याकलानिधिं देवं पाशाङ्कुशधरं शुभम् ।
वन्दते चाखिलं विश्वमेकदन्तं गणाधिपम् ॥ ४३ ॥

नागरग्राम्यवन्यानामस्ति पूज्यो गणाधिपः ।
अज्ञानामपि सुज्ञानां वेदावेदानुयायिनाम् ॥ ४४ ॥

पूजां गृहेषु कुर्वन्ति प्रतिवर्षं जनाः पृथक् ।
सामुदायिकपूजायाः पद्धतिर्निर्मिता नवा ॥ ४५ ॥

हिन्दूनामैक्यवृद्ध्यर्थं जातिभेदावलम्बिनाम् ।
राजमार्गो विरचितस्तिलकेन महात्मना ॥ ४६ ॥

कुटुम्बस्यैव सौख्याय पूजाकर्म गृहे गृहे ।
समुदायकृतं कर्म देशधर्महिताय तु ॥ ४७ ॥

बालसंगीतसंघानां निर्मितिर्मोददायिनी ।
समस्तानां हि लोकानां नवोत्सवविशिष्टता ॥ ४८ ॥

यष्टिद्वयाघाततालैः सहगीतानि बालकाः ।
स्वदेशभक्तियुक्तानि स्वनैर्गायन्ति मञ्जुभिः ॥ ४९ ॥

अयुताधिकपीठेभ्यो गणेशस्य महोत्सवे ।
धर्मचर्चां प्रकुर्वन्ति पण्डिता ये बहुश्रुताः ॥ ५० ॥

विद्वत्सहस्रवदनैर्वक्ति ज्ञानं गजाननः ।
लोकेभ्यो राजधर्मस्य मोक्षबन्धनयोरपि ॥ ५१ ॥

वर्णाश्रमसदाचारभक्तिवैराग्यकर्मणाम् ।
राष्ट्रधर्मादितत्त्वानां पवित्रं व्याससंमतम् ॥ ५२ ॥

ज्ञानसत्रमशेषाणां लोकानामैक्यवर्धनम् ।
भूतप्रस्तुतसंयोगि स्वकर्तव्यप्रबोधकम् ॥ ५३ ॥

महाकार्यस्य यशसेऽधिष्ठानं परमात्मनः ।
अवश्यमिति निर्दिष्टं दासबोधे हि साग्रहम् ॥ ५४ ॥

गणेशपूजारूपेण तिलकेन विनिर्मितम् ।
राष्ट्रोत्थानमहोद्योगयशसे तत् सुमङ्गलम् ॥ ५५ ॥

विसर्जनाय नीयन्ते मिलित्वा सर्वमूर्तयः ।
समारम्भेण ग्रामस्थैश्चतुर्दश्यां दिनात्यये ॥ ५६ ॥

दृश्यतेऽब्धिरिवोत्तुङ्गतरङ्गैरतिसंकुलः ।
उपस्थितो दर्शनार्थं पौरजानपदार्णवः ॥ ५७ ॥

गणनायकमर्चन्ति करुणावरुणालयम् ।
विसर्जयन्त्यप्सु मूर्तीरुक्त्वा ते ' मोरया ' जनाः ॥ ५८ ॥

गम्यतामद्य देवेश पुनरागमनाय च ।
संप्रार्थ्यैवं निवर्तन्ते जनाः सर्वे गृहं प्रति ॥ ५९ ॥

आगणेशोत्सवारम्भाद् विमुखा हिन्दवोऽभवन् ।
संमेलनात् सह म्लेच्छैस्तदा मोहरमोत्सवे ॥ ६० ॥

वाद्यवादननिर्बन्धो मशीदस्थानसंनिधौ ।
अधिकारो गोवधस्य यवनानां निरङ्कुशः ॥ ६१ ॥

दुराग्रहेण म्लेच्छानामेतयोर्हिन्दुबान्धवाः ।
पीडिता निश्चयं चक्रुर्बहिष्कर्तुं तदुत्सवम् ॥ ६२ ॥

तिलकप्रमुखैः सुज्ञैः समारब्धो नवोत्सवः ।
उत्सवप्रियतापूर्तिः पीडितानां ततोऽभवत् ॥ ६३ ॥

हिन्दुधर्मोत्सवोच्छेदं यवनाः कर्तुमुद्यताः ।
शासकाः पक्षपातात् तु नैच्छंस्तान् विनियन्त्रितुम् ॥ ६४ ॥

मुम्बापुर्यां येवले च ग्रामे म्लेच्छैः कृतो महान् ।
धर्मद्वेषोत्थ उत्पातो जनतापायकारकः ॥ ६५ ॥

यवनाः पीडिताः पश्चात् प्रतिकारेण हिन्दुभिः ।
अग्निना भस्मसात् कृत्वा मशीदानालयांस्तथा ॥ ६६ ॥

अधिकारी तु सत्यस्यान्वेषणे विमुखः किल ।
अग्रहीद् ग्रामवासिभ्यो रक्षादण्डं निरर्थकम् ॥ ६७ ॥

वर्षे त्रिनवतिमिते ह्यष्टादशशतोत्तरे ।
हिन्दूयवनयोर्जातो मुम्बय्यां विग्रहो महान् ॥ ६८ ॥

तस्मिन् वर्षे समुत्पन्नः पुण्यपुर्यां नवाङ्कुरः ।
तस्मात् प्रवृद्धो विस्तीर्णो नवोत्सवसुरद्रुमः ॥ ६९ ॥

ज्ञानेश्वरतुकारामशिबिके पंढरीं प्रति ।
दर्शनार्थं विठ्ठलस्य नीयेते परमात्मनः ॥ ७० ॥

आषाढशुक्लैकादश्यां सद्भक्तैः पादचारिभिः ।
पावनं भगवन्नाम गर्जद्भिरयुताधिकैः ॥ ७१ ॥

ज्ञानेशतुकयोर्नाम स्वरेणोच्चैर्मुहुर्मुहुः ।
प्रतिवर्षं प्रगायद्भिः संप्रदायानुयायिभिः ॥ ७२ ॥

आळंदीदेहुविख्यातक्षेत्राभ्यां शिबिके क्रमात् ।
आगच्छतश्च प्रस्थाय ज्येष्ठे पुण्यपुरीं प्रति ॥ ७३ ॥

उषित्वैकदिनं तत्र द्वादश्यां ते प्रगच्छतः ।
यात्रायै पूजिते भक्तैः पुण्यपत्तनवासिभिः ॥ ७४ ॥

काले तयोः प्रयाणस्य गीतवादित्रपूर्वकम् ।
अनुव्रजन्ति सीमान्तं पौरास्ते वैष्णवैः सह ॥ ७५ ॥

आगमे च प्रयाणे च वाद्यध्वनिसमन्वितम् ।
समारोहं शिबिकयोश्चिरं कुर्वन्ति हिन्दवः ॥ ७६ ॥

मुम्बय्यां विग्रहं श्रुत्वा पुण्यपत्तनवासिनः ।
म्लेच्छा न्यषेधयन् दर्गासमीपं दुन्दुभिध्वनिम् ॥ ७७ ॥

शिबिकोत्सवसंभूतं वाद्यनादं च सर्वथा ।
तन्निषेधमनादृत्य हिन्दुभिर्वादनं कृतम् ॥ ७८ ॥

इष्टिका अक्षिपन् म्लेच्छा दर्गास्थानस्थितास्तदा ।
शिबिकायां महोत्साहमिलितेषु जनेषु च ॥ ७९ ॥

प्रतिकर्तुं जना म्लेच्छान् प्राहरन्निष्टिकाश्मभिः ।
कालेनाल्पेनोपशमं भीषणः कलहो गतः ॥ ८० ॥

ज्ञानेशशिबिकां म्लेच्छास्तिरस्कुर्वन्ति दुर्जनाः ।
गन्तव्यं हिन्दुमात्रेण नैव तेषां महोत्सवम् ॥ ८१ ॥

ताजापंजासवारीभ्यो न नैवेद्यं समर्पयेत् ।
माषतण्डुलसंयुक्तं खिचडासंज्ञकं जनः ॥ ८२ ॥

परधर्मासहिष्णुत्वं म्लेच्छानामाततायिनाम् ।
प्रत्युत्तरं तद् हिन्दूनां मोहोरमबहिष्कृतिः ॥ ८३ ॥

न द्वेष्टि तिलको म्लेच्छान् संमानयति महम्मदम् ।
धर्मसंस्थापकं श्रेष्ठं येशुखिस्तसमं सुधीः ॥ ८४ ॥

हारीसाय ददौ बालो म्लेच्छानां पक्षपातिनम् ।
क्रीडासक्तं प्रान्तपतिं दोषं न्याय्यपथच्युतेः ॥ ८५ ॥

उपेक्षा दण्डनीयानां कृता बुद्धिपुरःसरम् ।
हारीससमये प्रायस्तद्वशैरधिकारिभिः ॥ ८६ ॥

कलहे म्लेच्छहिन्दूनां बीजमेवाधिकारिणः ।
तत्पक्षपातिनी बुद्धिरित्येवं तिलकोऽब्रवीत् ॥ ८७ ॥

एकं बीजं लोकशान्तेरुद्वृत्तानां प्रधर्षणम् ।
कालेऽधिकारिभिः कार्यं न्यायनिष्ठुरवृत्तिभिः ॥ ८८ ॥

विभक्तीकरणाद् हिन्दुम्लेच्छयोः सुलभं भवेत् ।
शासनं भारतस्यैवं प्रावदन्नाङ्ग्लमन्त्रिणः ॥ ८९ ॥

स्वीकारात् तस्य तत्त्वस्य भारते हिन्दुम्लेच्छयोः ।
वर्धितः कलहो नित्यं देशस्वातन्त्र्यघातकः ॥ ९० ॥

उत्सवस्तिलकेनायं म्लेच्छद्वेषात् प्रवर्तितः ।
आक्षेपो व्यर्थ एवायं तत्प्रतिस्पर्धिभिः कृतः ॥ ९१ ॥

पक्षे हि तिलकस्यासन् म्लेच्छा अप्यनुयायिनः ।
दिल्लीपंजाबवङ्गेषु महाराष्ट्रविदर्भयोः ॥ ९२ ॥

उत्सवेन समाकृष्टा सर्वे देशहितैषिणः ।
सुजनास्ते देहगेहचिन्ताभिः पीडिता भृशम् ॥ ९३ ॥

महाराष्ट्राद् बहिःप्रान्ते विदर्भाख्ये नवोत्सवः ।
प्रसृतोऽत्यल्पकालेन तैलबिन्दुरिवाम्भसि ॥ ९४ ॥

वर्षे हि पञ्चनवते ह्यष्टादशशतोत्तरे ।
नागपुर्यां मया दृष्टः पूर्वमेव महोत्सवः ॥ ९५ ॥

नवोत्सवे गणेशस्य मूर्तयः पञ्चविंशतिः ।
पृथक् पृथग् विभागेषु नगरस्य विलोकिताः ॥ ९६ ॥

गीतयष्ट्याघातदक्षबालसंघा दशाधिकाः ।
पञ्चाशदधिकान्यासन् व्याख्यानानि महोत्सवे ॥ ९७ ॥

न्यूनमेकं मया दृष्टं नागपूरमहोत्सवे ।
न नवोत्सवमूर्तीनामेकीकृत्य विसर्जनम् ॥ ९८ ॥

दशवर्षावधिर्वासो कृतो नागपुरे मया ।
दृष्टा चतुर्गुणा वृद्धिर्मूर्तीनां दशवर्षके ॥ ९९ ॥

वक्तारो नागपूरस्था हरिः पण्डितवंशजः ।
भवाळ्करः केशवाख्यः सीतारामसुतोऽच्युतः ॥ १०० ॥

कृष्णरावो देशपांडेवंशजः केशवौ गुरू ।
एकस्ताम्हनवंशाख्यो जोशीवंशभवोऽपरः ॥ १०१ ॥

शामरावाभिधो विद्वान् 'जकाते' उपनामकः ।
विनायको दृश्यकाव्यनीरजोल्लासलेखकः ॥ १०२ ॥

तेलंगः कृष्णशास्त्रीति विश्रुतः शास्त्रपारगः ।
कृष्णाख्यो हरिदासश्च कीर्तनानन्दवर्धनः ॥ १०३ ॥

येषां कलाविलासेन बभूव जनरञ्जनम् ।
नामानि कथये तेषां लोकप्रियकलाविदाम् ॥ १०४ ॥

बापूजिर्गायनाचार्यो जोशीसद्वंशभूषणः ।
तद्भागिनेयशिष्यश्च बाळकृष्णाख्यदीक्षितः ॥ १०५ ॥

नारायणो गानपटुः संगीत इति विश्रुतः ।
खंडूसिंगः पंचपट्टी निष्णातः कोकिलस्वनः ॥ १०६ ॥

जुम्डेवंश्यो विठोबाख्यो डाऊरावाभिधानकः ।
दिवाकरो गायकानां तब्लावाद्यसहायकः ॥ १०७ ॥

पेटीवाद्यपटुर्नाना नागोजिर्गानलोलुपः ।
वजीरखापट्टशिष्य आबाजिर्वैद्यभूषणः ॥ १०८ ॥

सदोत्तरे वयसि या शंभोराराधने रता ।
सुस्वरालापिनी शिष्या कमलाख्या कलावती ॥ १०९ ॥

तबलाविद् बळीरामो वूटः पेटीविदां वरः ।
विपुलं कौशलं प्रापुः सतारे चापराजितः ॥ ११० ॥

घाटेबेदरकराकान्ता मान्या गानकलाविदः ।
कथाकारेषु गोपालव्यंकटेशौ जनप्रियौ ॥ १११ ॥

समाप्यार्चां गणेशस्य शिवजन्ममहोत्सवम् ।
तिलकेन समारब्धं वर्णयिष्ये यथामति ॥ ११२ ॥

दुर्गो रायगडः ख्यातो शिवराज्याभिषेकभूः ।
स्वातन्त्र्यस्यादिमं पीठं स्थापितं यच्च शिवाजिना ॥ ११३ ॥

राजधानी स्वराज्यस्य महाराष्ट्रे विराजिता ।
वैभवेन प्रभावेण शिवकाले च सर्वदा ॥ ११४ ॥

न मृदा नापि पाषाणैर्दुर्गो रायगडः कृतः ।
देशभक्तिक्षात्रतेजोधर्मनिष्ठागुणैः परम् ॥ ११५ ॥

स्वातन्त्र्यप्रेरणास्रोतः समुद्गतमितोऽवहत् ।
सजवं भारतेऽखण्डं देशे सार्धशतं समाः ॥ ११६ ॥

स्थिता रायगडे सर्वे वृक्षपाषाणनिर्झराः ।
कथयन्ति कथा रम्या वीराणां रोमहर्षणाः ॥ ११७ ॥

शिवपादरजःपूता म्लेच्छैर्मूर्ध्नाभिवन्दिता ।
भूमी रायगडस्येयं भूषणादिकविस्तुता ॥ ११८ ॥

अभ्युदायन् पयोधारा जलयन्त्रादखण्डिताः ।
यत्रोद्याने नेत्ररम्ये पुष्पवृक्षसुशोभिते ॥ ११९ ॥

दुर्गोऽयं स्वर्ग एवेति शंसितुं स्वर्नदीं प्रति।
यन्त्रेभ्य आप उत्पेतुः साभिमानं गडोद्भवाः ॥ १२० ॥

तत्रोपवनमुत्सन्नं शिवे भूपे गते दिवम्।
विलुप्ता ऊर्ध्वगा धारा जाता निम्नगनिर्झराः ॥ १२१ ॥

बदरीबर्बुरद्रूणां कण्टकीनां च काननम्।
प्ररूढं पनसाम्राणां यत्रासन् घनराजयः ॥ १२२ ॥

यत्रानुशासनं भूपः समर्थस्याशृणोद् हितम्।
कथा गीताः प्रवीराणां प्रौढभाषणबन्दिभिः ॥ १२३ ॥

घूकानां भीषणः शब्दो दिवाद्य श्रूयते जनैः।
कोलाहलोऽशिवस्तत्र शिवानां कर्णकर्कशः ॥ १२४ ॥

प्रासादो महिषीसद्म राजकार्यसभागृहम्।
राजसिंहासनस्थानं देवतातिथिमन्दिरम् ॥ १२५ ॥

शिबिरं दुर्गसैन्यस्यायुधानां संग्रहालयम्।
स्वराज्यस्थापकस्यापि समाधी राष्ट्रपूजिता ॥ १२६ ॥

उपेक्षया नियुक्तानां दुर्दशास्थानकोऽभवत्।
कालप्रभावतो रायगडोऽपि विकृतिं गतः ॥ १२७ ॥

टेंपल्डगलसाभ्यां वै पाश्चात्याभ्यां प्रदर्शितः।
विषादो दुःस्थितिं दृष्ट्वा समाधेः शिवभूपतेः ॥ १२८ ॥

कृपया यस्य साम्राज्यं पूर्वजैः समुपार्जितम्।
विस्मरन्ति कथं भूपा कृतघ्नाः शिवभूपतिम् ॥ १२९ ॥

डग्लसग्रन्थस्थवाक्येन ताडिते मर्मभेदिना।
उपाक्रमत कर्तव्यविचारो राजमण्डले ॥ १३० ॥

गोविन्देन कृतो यत्नो वसईवासिनैकदा।
जीर्णां समाधिमुद्धर्तुं प्राप्तुं द्रव्यनिधिं तथा ॥ १३१ ॥

रेनाम्ना प्रान्तमुख्येन प्रत्यब्दं रौप्यपञ्चकम् ।
समाधिस्थानरक्षार्थं प्रदत्तं सादरं तदा ॥ १३२ ॥

तत्पश्चाद् दशमे वर्षे आदिशत् तिलको जनान् ।
समाधिजीर्णोद्धारार्थं दातव्यं सज्जनैर्धनम् ॥ १३३ ॥

मेमासस्य दिने त्रिंशे मिलिता महती सभा ।
जीर्णोद्धारविचाराय समाधेः शिवभूपतेः ॥ १३४ ॥

हिराबाग इति ख्याते स्थाने महति विस्तृते ।
पुण्यपुर्यां जनास्तत्र सर्ववर्णा उपस्थिताः ॥ १३५ ॥

संस्थानिका मानवन्तः सरदारकुलोद्भवाः ।
धनिका लोकनेतारो पण्डिताश्च सुशिक्षिताः ॥ १३६ ॥

अग्रासनं सभास्थाने चाफळस्वामिनेऽर्पितम् ।
औंधाधिपः सभाध्यक्षः पंतप्रतिनिधिस्तदा ॥ १३७ ॥

सभायां वाचितं पत्रं प्रेषितं न्यायमूर्तिना ।
माधवेन प्रसिद्धेन सभोद्देशप्रशंसकम् ॥ १३८ ॥

दाभाडे च कुरुंद्वाडेचल्करंजीकरोत्तरौ ।
संस्थानिका च विश्रामस्तिलकश्च बभाषिरे ॥ १३९ ॥

समितिः स्थापिता तत्र शतार्धस्य सभासदाम् ।
अधिकृन्मण्डलं चैव सभासद्भिर्नियोजितम् ॥ १४० ॥

लोकप्रतिनिधीभूताश्चत्वारस्तिलकादयः ।
कार्यमावश्यकं कर्तुं हेतुपूर्त्यै नियोजिताः ॥ १४१ ॥

जना रूप्यसहस्राणि ददुः षोडशसंख्यया ।
समाधिजीर्णोद्धारार्थं निधये दशमासके ॥ १४२ ॥

संवत्सरेऽस्मिन् कर्तव्यः शिवजन्मदिनोत्सवः ।
रायदुर्गे समीपे च समाधेः शिवभूपतेः ॥ १४३ ॥

सूचना तिलकस्येयं महाडग्रामवासिभिः ।
पञ्चक्रोश्यां स्थितैश्चान्यैः सज्जनैरनुमोदिता ॥ १४४ ॥

काशीनाथो महाडस्थो जुघोष किल पण्डितः ।
राधे मासे द्वितीयायां भवेदिति महोत्सवः ॥ १४५ ॥

कोल्हापूरविजापूरपुणेसातारतस्तथा ।
खानदेशविदर्भेभ्यः शिवभक्ताः सहस्रशः ॥ १४६ ॥

कर्णाटककारवारकोङ्कणेभ्यः समागताः ।
जन्मोत्सवाय सोत्साहं रायदुर्गे महाजनाः ॥ १४७ ॥

येसाजिबाजीतानाजीवंशजा मावळस्थिताः ।
नारिकेलं करे धृत्वा संप्राप्ता वन्दितुं शिवम् ॥ १४८ ॥

सुशोभितं गडस्थानं पताकातोरणध्वजैः ।
विस्तीर्णं मण्डपं तत्र कदलीस्तम्भमण्डितम् ॥ १४९ ॥

रचयामास समितिरुत्सवस्य सभागृहम् ।
विनिर्मितं मध्यभाग उच्चैर्मुख्यासनद्वयम् ॥ १५० ॥

तत्र संस्थापिते सम्यग् मूर्ती शिवसमर्थयोः ।
अलंकृते पुष्पहारैर्महावस्त्रसुशोभिते ॥ १५१ ॥

पौराणिकाः पठन्ति स्म पुराणं व्यासनिर्मितम् ।
जगुर्गुणानुवादं च हरिभक्तिपरायणाः ॥ १५२ ॥

वेदघोषो वैदिकानामभवद् मङ्गलप्रदः ।
तदोदयोऽस्त्वित्यूचुर्वै भवानीपूजका मुदा ॥ १५३ ॥

पुण्यश्लोकनृपालस्य तथा तत्सहकारिणाम् ।
गाथाभिर्वीरकृत्यानि जगर्जुः श्रेष्ठबन्दिनः ॥ १५४ ॥

स्वतन्त्रं भारतं कर्तुं तत्राकाङ्क्षा समुत्थिता ।
स्वातन्त्र्यदातुर्वीरस्य जयघोषस्तदा कृतः ॥ १५५ ॥

प्रतीकं मेनिरे लोकाः स्वातन्त्र्यस्य मनोहरम् ।
स्फूर्तिप्रदं जन्मभूमेर्नाम छत्रपतेः शुभम् ॥ १५६ ॥

रामेण कपिभिः सार्धं मावळैश्च शिवाजिना ।
रक्षोयवनदास्याच्च जन्मभूमिर्विमोचिता ॥ १५७ ॥

कर्तुः सत्त्वे क्रियासिद्धिः साधने नैव सा मता ।
कर्ता यदृच्छया प्राप्तं कौशलेनोपयोजयेत् ॥ १५८ ॥

यथा कवीनामाद्यानां वाचमर्थोऽनुधावति ।
साधनान्यनुधावन्ति देशभक्तं धृतव्रतम् ॥ १५९ ॥

सूर्योदये यथा प्राची सुप्रसन्ना निशात्यये ।
चकाशे दुर्गभूस्तद्वच् शिवजन्मदिनोदये ॥ १६० ॥

नावशिष्टा निशा घोरा शिवविस्मृतिसंभवा ।
उदैत् कृतज्ञतासूर्यो जन्मोत्सवविराजितः ॥ १६१ ॥

संस्थापनं स्वराज्यस्य परदास्यविनाशनम् ।
चरिते शिवराजस्य सारो ध्येयो मुमुक्षुभिः ॥ १६२ ॥

संप्राप्ताः पुण्यनगराद् विद्वांसस्तिलकादयः ।
अध्यापयितुकामास्ते चरितं शिवभूपतेः ॥ १६३ ॥

नावदत् तिलकः किंचित् शङ्कास्पदमिहोत्सवे ।
राजद्रोहस्य वान्यस्य दोषस्यापि कथंचन ॥ १६४ ॥

क्रामवेलो यथाङ्ग्लानां बोनापार्टश्च फ्रान्सिसः ।
पूज्यस्तथा विभूतित्वाच् शिवो भारतवासिनाम् ॥ १६५ ॥

स्वातन्त्र्योपासको वक्ता शिवरामः स्वतन्त्रधीः ।
श्रोतॄनरञ्जयत् तत्र वक्रव्याजापरोक्तिभिः ॥ १६६ ॥

वृत्तान्तं वर्णयामास विद्वद्वर्यो मनोरमम् ।
कानिट्करश्च दुर्गाणां युद्धे तदुपयुक्तताम् ॥ १६७ ॥

स्वातन्त्र्योपासना लोके तिलकेन प्रवर्तिता ।
शिवोत्सवप्रचारेण दुःसहा साधिकारिणाम् ॥ १६८ ॥

रायदुर्गसमारम्भे वृत्तिरैक्यस्य वर्धिता ।
कृषीवलेषु चाज्ञेषु प्राज्ञेषु पुरवासिषु ॥ १६९ ॥

दृढीभूतेतिहासे च श्रद्धा लोकेषु भारते ।
संशोधनाध्याययोश्च प्राप्ता दृष्टिर्नवा जनैः ॥ १७० ॥

जितजेतृत्वसंबन्धान्नाङ्ग्ला निःस्पृहलेखकाः ।
शत्रुभावनया तद्वद् दूषिता म्लेच्छलेखकाः ॥ १७१ ॥

भारतस्येतिहासस्य लेखनायास्ति योग्यता ।
तद्भूम्यामेव जातस्य नान्यदेशनिवासिनः ॥ १७२ ॥

लेख्यलेखकयोर्मध्ये तादात्म्यं ग्रन्थनिर्मितौ ।
दिशायन्त्रमिवावश्यं तितीर्षोर्दुस्तराम्बुधिम् ॥ १७३ ॥

भारते प्रसृता शीघ्रं शिवजन्मोत्सवप्रथा ।
यूनां चित्तेषु ववृधे स्वातन्त्र्येच्छाद्रुमोऽसा ॥ १७४ ॥

उत्सवौ कुरुते यो द्वौ स्वदेशीव्रतमाचरन् ।
तिलकस्यानुयायी स ज्ञातो भारतवासिभिः ॥ १७५ ॥

तरुणानां महाराष्ट्रवङ्गपञ्चनदेष्वपि ।
स्वातन्त्र्यप्राप्तये संघाः समुद्भूताः स्थले स्थले ॥ १७६ ॥

शिवोत्सवमन्वकुर्वन् राजस्थाननिवासिनः ।
प्रतापोत्सवमारभ्य मरुदेशजनप्रियम् ॥ १७७ ॥

परदास्यजनैराश्ययक्ष्मणा जर्जरार्यभूः ।
योजितं यक्ष्मनाशाय शिवजन्मोत्सवौषधम् ॥ १७८ ॥

परदास्यघृणा तीव्रा युवकानां मनःस्वभूत् ।
असंतोषः पितेत्युक्तं राज्यक्रान्तेर्विदां वरैः ॥ १७९ ॥

क्रान्तिस्यन्दनचक्रस्य गतिदोऽभूत् शिवोत्सवः ।
भावनैकधियां यूनां चित्तानि परिवर्तयन् ॥ १८० ॥

आधारभूताः स्तम्भा वै युवानो भारतस्य ये ।
तेषां विकासनोपायास्तिलकेन विचिन्तिताः ॥ १८१ ॥

नीतिबुद्धिशरीराणां वर्धनं छात्रमण्डले ।
पूर्वे वयसि कर्तव्यं नियुक्ताध्यापकैः किल ॥ १८२ ॥

तज्ज्ञानां संमतं तत्त्वं शिक्षकैर्नैव पाल्यते ।
शारीरशिक्षणोपेक्षा प्रायः सर्वत्र दृश्यते ॥ १८३ ॥

नीतिर्धर्मस्याङ्गभूता तदभावात् क्षयो द्वयोः ।
नाधार्मिको नीतिमान् स्याद् नीतिभ्रष्टो न धार्मिकः ॥ १८४ ॥

धर्मस्य भारते देवोऽधिष्ठानमिति गण्यते ।
नीतिर्देवविहीनानां भारते न प्ररोहति ॥ १८५ ॥

ह्रासस्य कारणं मुख्यं धर्मयोर्जिनबुद्धयोः ।
नीतेर्नासीदधिष्ठानं तयोर्नैश्वरवादिनोः ॥ १८६ ॥

धर्मावलम्बिनी नीतिर्लतेव द्रुमसंश्रिता ।
उन्मूलिते धर्मवृक्षे पतत्येव निराश्रिता ॥ १८७ ॥

धर्मशिक्षाभावदोषाद् नीतिलेशो न विद्यते ।
छात्रहृत्पद्मकोशेषु संतप्तायसि बिन्दुवत् ॥ १८८ ॥

लभते पोषणं बुद्धिर्यूनो विद्यालये सदा ।
धर्मनीतिशरीराणामन्नाभावादपोषणम् ॥ १८९ ॥

कल्पितः पुरुषः साङ्गश्छात्रशिक्षाक्रमस्य चेत् ।
मस्तिष्के बुद्धिरारूढा धर्मशिक्षा हृदि स्थिता ॥ १९० ॥

देहगा व्यानवन्नीतिर्व्यवहारेषु वर्तते ।
शरीरोपासनास्थानं पादयोस्तस्य विद्यते ॥ १९१ ॥

पङ्गुश्च विकलाङ्गश्च हृच्छून्यश्च सुशिक्षितः।
दुर्बलोऽपुरुषार्थी च भवेद् यद्यपि बुद्धिमान् ॥ १९२ ॥

धर्मनीतिविचाराणां शिक्षणायोत्सवद्वयम् ।
शरीराणां विकासाय क्रीडाशालाविनिर्मितिः ॥ १९३ ॥

कार्यक्षमशरीरस्य वर्णनं कविना कृतम् ।
कृशोदरं मेदहीनं लघूत्थानक्षमं च यत् ॥ १९४ ॥

वपुः कार्यक्षमं ज्ञेयं शीतातपसहिष्णु च ।
दृढं बलयुतं कष्टप्रियं पुष्टं निरामयम् ॥ १९५ ॥

साध्यं व्यायाममृगयाक्रीडाभिर्युवकस्य तत् ।
मल्लविद्यासंमताभिः शक्तिवर्धनरीतिभिः ॥ १९६ ॥

शरीरबलवृद्ध्यर्थं मल्लयुद्धस्य शिक्षणम् ।
यष्टिसंभ्रमणं प्रोक्तं प्रतीकारस्य साधनम् ॥ १९७ ॥

मल्लस्तम्भे क्रीडनं हि चापल्याय प्रशंसितम् ।
गतेः खड्गप्रहाराणां ज्ञानं संरक्षणाय च ॥ १९८ ॥

या यष्टिकन्दुकक्रीडाः सर्वा आरोग्यदायकाः ।
जलाशयेषु तरणं शरीरोत्साहवर्धनम् ॥ १९९ ॥

बलस्योपासना यत्नात् कर्तव्या युवकैः सदा ।
लभ्यो वै बलहीनेन नायमात्मेति च श्रुतिः ॥ २०० ॥

मल्लशालाविनिर्माणे तिलकस्यानुयायिभिः ।
दक्षिणापथदेशेषु यशः प्राप्तं सुपुष्कलम् ॥ २०१ ॥

शासकः परकीयो योऽधिकारींग्लंददेशजः ।
प्रजाहितं न जानाति सत्तामदविमोहितः ॥ २०२ ॥

विचारपूर्वकं कर्म कृत्वा लोकहितप्रदम् ।
राजा सुकृतमाप्नोति राजप्रतिनिधिस्तथा ॥ २०३ ॥

कृत्यं तु विपरीतं यत् प्रजाक्षोभस्य कारणम् ।
विचारमन्थनं श्रेयो राज्याधिपजनेशयोः ॥ २०४ ॥

नियोजितास्तदर्थं च केचिल्लोकसभासदः ।
राज्ययन्त्रविधानेन मुम्बाप्रान्तीयसंसदि ॥ २०५ ॥

लोकैर्वृतो हि तिलकः कौन्सिलं प्राविशत् तदा ।
गरुडं च पराजित्य खानदेशनिवासिनम् ॥ २०६ ॥

बाणग्रहाख्यभूख्याते वर्षे खैस्तशके शुभे ।
तिलको नामदारोऽभूत् सदस्यः प्रान्तसंसदः ॥ २०७ ॥

द्वे विधे कार्यजातस्य सभास्थितसभासदाम् ।
स्वशक्तीच्छानुसारेण विधायकविनाशके ॥ २०८ ॥

न तदोपक्रमः शक्यो वैनाशिकचमत्कृतेः ।
पार्नेलेन कृतो योऽभूदाङ्ग्ललोकसभागृहे ॥ २०९ ॥

समीक्षा राज्यकार्यस्य सुविचारपरिप्लुता ।
भाषणे तिलकेन स्वे कृता भूरिपरिश्रमा ॥ २१० ॥

वन्यग्रामीणलोकानां दैन्यनाशाय सूचिताः ।
अर्थपत्रकचर्चायामुपायास्तेन भाषणे ॥ २११ ॥

कार्यक्षेत्रं प्रतिनिधेः केवलं न सभागृहम् ।
उपेक्षितजनावासाः पल्ल्यश्चापि वने स्थिताः ॥ २१२ ॥

निरीक्षणं स्थितेस्तेषामज्ञानस्य निवारणम् ।
निराकर्तुं तदापत्तिं कर्तव्यं मार्गदर्शनम् ॥ २१३ ॥

संपर्करक्षणं कार्यं स्वीयैश्च मतदातृभिः ।
सर्वान् प्रतिनिधेर्धर्मांस्तिलकः प्रत्यपालयत् ॥ २१४ ॥

तिलकस्य च कार्येण संतुष्टा मतदायिनः ।
वव्रुस्तं स्वप्रतिनिधिं नवनिर्वाचने पुनः ॥ २१५ ॥

पुणेनगरसंस्थायाः सदस्यत्वं समर्पितम् ।
प्रचण्डमतदानेन तिलकाय जनैस्तदा ॥ २१६ ॥

सभा या सार्वजनिका तस्या नेता बभूव सः ।
कार्यवाहपदं चैव शिवरामो व्यभूषयत् ॥ २१७ ॥

मत्वोत्कर्षमसह्यं तं तिलकस्य सभागृहे ।
पदाद् निवृत्तो गोपालः संतत्याज सभामपि ॥ २१८ ॥

अस्थापयत् प्रतिस्पर्धिसमितिं दक्षिणाभिधाम् ।
माधवानुनयं कृत्वा तस्य संमतिपूर्वकम् ॥ २१९ ॥

तिलकः केसरीपत्रे वचनैर्मर्मभेदिभिः ।
प्राहरद् माधवं तीव्रैर्विषदिग्धैरिवेषुभिः ॥ २२० ॥

वयोवृद्धिवशाद् नष्टो विवेको माधवस्य किम् ।
संपृष्टस्तिलकेनैवं प्रश्नः संवृद्धमन्युना ॥ २२१ ॥

तिलकाय ददौ दोषं नृसिंहस्तिलकायने ।
अपशब्दप्रयोगेण मर्यादातिक्रमः कृतः ॥ २२२ ॥

लिलेख तिलकेनेति पर्यायेण समर्थनम् ।
चकार संप्रदत्तायाः संमतेर्माधवेन च ॥ २२३ ॥

न गाम्भीर्यं प्रमादस्य माधवस्य यथार्थतः ।
अजानाद् नरसिंहस्तु तिलकस्य मनोव्यथाम् ॥ २२४ ॥

न चाहमुत्सहे कर्तुमुग्रभाषासमर्थनम् ।
आविष्कर्तुमिहेच्छामि तिलकस्य मनोरुजम् ॥ २२५ ॥

कर्तव्यं देशभक्तानामन्योन्यसहकारिता ।
मार्गेष्वपि प्रभिन्नेषु समानोद्देशसिद्धये ॥ २२६ ॥

भारते सर्वपक्षाणामाङ्ग्लशासननाशनम् ।
सर्वथाभीप्सितमिति सहकार्यं सदेष्यते ॥ २२७ ॥

चिन्तनीयमिति श्रेष्ठैः सततं लोकनेतृभिः ।
उच्चमार्गाच्च्युतिस्तेषां देशस्यानर्थकारिणी ॥ २२८ ॥

समाजोद्धारकार्येषु भिन्ना दृष्टिः प्रवर्तते ।
माधवात् तिलकस्येति न तथा राजकारणे ॥ २२९ ॥

समाना गोखलेमेथातिलका राजकारणे ।
हिन्दराष्ट्रसभाभवता इति लोकमतस्थितिः ॥ २३० ॥

केसरीपत्रलेखैश्च कृतेनान्दोलनेन च ।
तिलकद्वेषिणो जाताः सप्रान्तेशाधिकारिणः ॥ २३१ ॥

टाइम्सप्रमुखैः पत्रैः मुम्बापुर्यां प्रकाशितैः ।
तिलकस्य विरोधार्थं कृतः कोलाहलो महान् ॥ २३२ ॥

माधवेन कृता या वै काले तस्मिन् भयावहे ।
" वयं विभिन्नास्तिलकात् " घोषणासीदनर्थका ॥ २३३ ॥

दर्शितं माधवेनैव सभां निर्माय दक्षिणाम् ।
तिलकस्यात ऊर्ध्वं हि वयं न सहकारिणः ॥ २३४ ॥

पूर्वत्यागनवोत्पत्त्योः शिष्याणां माधवस्य च ।
कारणं तिलकद्वेष इति ज्ञात्वाधिकारिणः ॥ २३५ ॥

दण्डनाय प्रवर्तेरन् शासनेनानुमोदिताः ।
अप्रियप्रायसंस्थानां यथेच्छं कर्मकारिणः ॥ २३६ ॥

पश्चाद् नवसभोत्पत्तेः सभा पूर्वापमानिता ।
अयोग्याऽश्रवणीयेति शासनं वै समादिशत् ॥ २३७ ॥

प्रमादो माधवस्यायं भवितानर्थको महान् ।
तिलको भाव्यनर्थस्य सूचकं वाक्यमब्रवीत् ॥ २३८ ॥

प्राबल्यं तिलकस्यासीद् मताधिक्यात् सभागृहे ।
अथाप्यनुचितोपायस्तेन नालम्बितः क्वचित् ॥ २३९ ॥

बहुसंख्यस्याधिकारः प्रजातन्त्रप्रथागतम् ।
सर्वेषां संमतं तत्त्वं लोकप्रगतिकारकम् ॥ २४० ॥

लोकाराधनबीजं च निहितं तत्प्रथागतम् ।
राष्ट्रस्योदयहेतुत्वात् पाश्चात्त्यैराहृतं बहु ॥ २४१ ॥

संख्याल्पत्वात् सभात्यागवृत्तिर्नैषा हितप्रदा ।
नवचैतन्यनिर्मात्रा हेया सा सर्वथा भवेत् ॥ २४२ ॥

नूत्नसंस्थासमुत्पत्तिर्जाता विप्लवकारिणी ।
परिपोषाद् भेदवृत्तेरैक्यसंभवघातिनी ॥ २४३ ॥

द्रष्टा राष्ट्रहितस्यासीत् सर्वेषां माधवो गुरुः ।
तत्कृतेन प्रमादेन संक्रुद्धस्तिलकोऽभवत् ॥ २४४ ॥

दुराग्रहेण शिष्याणां गुरुर्मोहवशं गतः ।
पुण्यग्रामे गृहं रम्यं कलिना निर्मितं ततः ॥ २४५ ॥

सौम्योग्राणां प्रभेदस्य बीजमुप्तं सभासदाम् ।
हिराबागस्य चोद्याने विषवृक्षस्य वै ननु ॥ २४६ ॥

दुर्भिक्षं भारते जातं पर्जन्यस्यातिवर्षणात् ।
संवत्सरे दुर्मुखाख्ये लोकसंहारकारकम् ॥ २४७ ॥

क्षेत्राणि सस्यहीनानि निःसाहाय्याः कृषीवलाः ।
मूल्यं तथान्नधान्यानां जातं त्रिगुणिताधिकम् ॥ २४८ ॥

श्रूयते च जनाः केचिद् महाराष्ट्रे क्वचित् स्थले ।
आदुर्जठरपूर्त्यर्थमन्नाभावात् तृणाङ्कुरान् ॥ २४९ ॥

जग्मुर्निरशनाः केचिदल्पकाले यमालयम् ।
तृणाद्यभावतोऽकाले बहवः पशवो मृताः ॥ २५० ॥

नागपूरादिदेशेषु दरिद्राश्च बुभुक्षिताः ।
प्रविश्य पण्यस्थानानि बलाद् धान्यान्यपाहरन् ॥ २५१ ॥

धान्यक्रयासमर्था ये यष्टिहस्ताः क्षुधातुराः ।
आट्टमार्गे च मार्गे च छिन्धिभिन्धीतिवादिनः ॥ २५२ ॥

जीवितं शङ्कितं मत्वा धनप्राणरिरक्षया ।
धनिका धान्यसंपन्ना नगरात् ते पलायिताः ॥ २५३ ॥

नगरं संकुलं चोरैर्हिंसकैरकुतोभयैः ।
अराजकं समुत्पन्नं नागपूरे दिनत्रयम् ॥ २५४ ॥

दर्शयित्वा सैन्यबलं पुरं प्रकृतिमानयत् ।
शासकः पङ्किलं चूर्णस्पर्शात् तोयं जनो यथा ॥ २५५ ॥

दृष्ट्वाऽनर्थान् नागपूरकानपूरसमुत्थितान् ।
तिलकोऽसूचयद् मार्गं निराकर्तुमुपप्लवम् ॥ २५६ ॥

पुण्यदेशे महाराष्ट्रे लोकदुःखेन दुःखितः ।
लोकाधिकारिभिर्योग्यं कर्तव्यं विषमापदि ॥ २५७ ॥

उद्घाटिताः स्वल्पमूल्यधान्यपण्यालयास्तदा ।
दुर्भिक्षक्लेशनाशाय तिलकस्य प्रयत्नतः ॥ २५८ ॥

प्रान्तस्य यद्विभागेषु जाता दुर्भिक्षदुःस्थितिः ।
तन्नामानि विनिर्दिश्य तत्रस्थानां प्रशान्तये ॥ २५९ ॥

दुर्भिक्षस्य प्रतीकारोपायानामवलम्बनम् ।
प्रान्ताधीशेन कर्तव्यं केसरी प्रत्यपादयत् ॥ २६० ॥

व्यवसायेन रहिता तन्तुवायाः सहस्रशः ।
कर्तव्यं पुनरुत्थानं वस्त्रनिर्माणकर्मणः ॥ २६१ ॥

अहितं क्लेशदं तेषां रथ्याप्रस्तरभञ्जनम् ।
स्थाने ते ह्युपयोक्तव्यास्तदभिज्ञातकर्मभिः ॥ २६२ ॥

देयं लक्षद्वयं द्रव्यमृणमित्यधिकारिभिः ।
प्रस्थापयितुमुद्योगान् प्रतिभूयुग्मसंमतम् ॥ २६३ ॥

योजना तिलकस्येयं सोलापूरमहाजनैः ।
प्रशंसिताधिकारिभ्यः प्रेषिता सभया ततः ॥ २६४ ॥

मानटीथः कार्यवाहो मुम्बईसचिवालये ।
लिलेख प्रान्ताधीशस्य "ऋणदानमसंमतम् ॥ २६५ ॥

नोचितं शासनद्रव्यमितरस्य करे स्थितम्" ।
तस्मात् तस्य मतेऽग्राह्या प्रार्थना सभया कृता ॥ २६६ ॥

तस्य प्रत्युत्तरं दत्तं तिलकेन यथोचितम् ।
शक्यं न बोधनं मिथ्यासुप्तस्यास्ति कथंचन ॥ २६७ ॥

सभा च प्रेषयामास ज्ञातुं प्रतिनिधीन् स्थितिम् ।
दुर्भिक्षग्रस्तभागेषु तिलकस्य प्रचोदनात् ॥ २६८ ॥

ज्ञात्वा जनस्थितिं तेभ्यः शोचनीयां च दुःसहाम् ।
वैधोपायान् दर्शयितुं स्वपत्रे तिलकोऽलिखत् ॥ २६९ ॥

सभाकृतान्दोलनेन केसरीपत्रलेखनात् ।
अधिकारिगणः क्रुद्धो बभूव द्वेषकश्मलः ॥ २७० ॥

एकसंबेकरोपाह्वः सभाप्रतिनिधिर्वृतः ।
तेन प्रचारकार्यार्थं पत्रमेकं प्रकाशितम् ॥ २७१ ॥

तत्कृतानि विधानानि निराधाराणि कानिचित् ।
ज्ञात्वालिखत् सभाध्यक्षं प्रान्तकार्यालयाधिपः ॥ २७२ ॥

"विधानोत्तरदायित्वं क्रियते सभया न वा" ।
असंतुष्टः प्रान्तपतिरुत्तरेण समादिशत् ॥ २७३ ॥

वर्तमानपरिस्थित्यामपात्रमिति मन्यते ।
लोकप्रतिनिधित्वाय सभा प्रान्ताधिकारिणा ॥ २७४ ॥

तिलकद्वेषरोगस्य जातं प्रथमदर्शनम् ।
प्रशासनहृदिस्थस्य स्वनाशस्य च सूचकम् ॥ २७५ ॥

आदेशः प्रान्तपालस्य परिपाकः सभाकृतेः ।
सभोत्तरं न सरलं सभ्यं वानुनयान्वितम् ॥ २७६ ॥

मतं प्रदर्शितं चैतद् नरसिंहस्य पुस्तके ।
स्वकर्मणः प्रमादेन सभा सिन्धुतलं गता ॥ २७७ ॥

दूषयन्ति च तं सर्वे तिलकप्रतिपक्षिणः ।
सत्यांशो दूषणे तस्मिन्निति केळकरोऽवदत् ॥ २७८ ॥

न मूलाङ्ग्लोत्तरं दृष्टं पठितः सार एव च ।
मया मराठीभाषायां चरिते च समुद्धृतः ॥ २७९ ॥

शब्दो ह्येकोऽप्यसभ्यो न मया दृष्टः सभोत्तरे ।
लिखितानि विधानानि न तत्संमतिपूर्वकम् ॥ २८० ॥

लेखकेनेति सुस्पष्टमुक्तमुत्तरपत्रके ।
न करोति सभा तेषां निषेधं वा समर्थनम् ॥ २८१ ॥

न तस्योत्तरदायित्वं सभया स्वीकृतं ननु ।
उल्लेखितं प्रतिनिधिप्रोक्तं कारणमुत्तरे ॥ २८२ ॥

सभया शंसिता वृत्तिः प्रमादस्य निदर्शने ।
पत्रस्थस्य प्रतिनिधेरधिकारिप्रदर्शिता ॥ २८३ ॥

विश्वासो लोकवार्तायां पत्रप्रतिनिधेरभूत् ।
सभोत्तरे संप्रदत्तं संभाव्यं तस्य कारणम् ॥ २८४ ॥

सभोत्तरस्य द्विविध उद्देशः संप्रतीयते ।
तत्पत्रकविधानानां सभासंमतिदर्शनम् ॥ २८५ ॥

अन्यः प्रतिनिधेर्मार्गो रक्षितव्यः सुरक्षितः ।
विषमे समये कर्तुं स्वविधानसमर्थनम् ॥ २८६ ॥

न तत्रानुचितं किंचित् पत्रलेखे सभासदाम् ।
वक्तृत्वासभ्यताक्षेपौ निराधारौ निरर्थकौ ॥ २८७ ॥

विपत्काले परित्यागोऽनुयातॄणां विघातकः ।
स्वसंकल्पितकार्यस्य तिलकस्य दृढं मतम् ॥ २८८ ॥

सभाकार्यस्य नो हानिर्जातादेशेन वस्तुतः ।
सुयशः सभया प्राप्तं लोकशक्तिप्रबोधने ॥ २८९ ॥

स्वातन्त्र्यसंगरस्यासीद् बीजावापस्तदा कृतः ।
अनुनेतुं कुतस्तस्मिन्नवकाशः समुद्यमे ॥ २९० ॥

पोषणं स्वाभिमानस्य युयुत्सा भयशून्यता ।
वैधेऽप्यान्दोलनेऽवश्याः यशःप्राप्त्यै हि सद्गुणाः ॥ २९१ ॥

वृत्तान्तं कथयिष्येऽहं धीरोदात्तं मनोहरम् ।
आन्दोलनस्यापूर्वस्य तिलकप्रेरितस्य वै ॥ २९२ ॥

क्रोधादेशकुठारेण प्रान्तेशस्याहता सभा ।
अपुष्यत् कार्यविस्तारैश्छिन्नपर्णा लता यथा ॥ २९३ ॥

व्रजग्रामेषु संचेरुः सभाज्ञप्ताः सुशिक्षिताः ।
उपायांश्चिन्तयामासुर्दुर्भिक्षानर्थनाशकान् ॥ २९४ ॥

दत्ताच्युतौ परांजपे च चिपुट्कारुळ्कराभिधौ ।
व्याचख्युर्ग्रामवासिभ्य उंबरग्रामभागके ॥ २९५ ॥

अच्युतस्य करिष्येऽहं संक्षेपेणैव वर्णनम् ।
साठेवंशसमुत्पन्नः सीतारामसुतः सुधीः ॥ २९६ ॥

तन्निवासो नागपूरे तत्र विद्यार्जनं कृतम् ।
एमेपरीक्षामुत्तीर्ण आङ्ग्लवाङ्मयकोविदः॥ २९७ ॥

वक्तृत्वनिपुणो विद्वान् नागपूरजनप्रियः ।
संप्राप्य बीएल्पदवीं पुण्यग्रामं समागतः ॥ २९८ ॥

आङ्ग्लाचार्यपदं प्राप महाविद्यालये नवे ।
शिवरामो यत्र चासीत् संस्कृताचार्य एव सः ॥ २९९ ॥

सभा या सार्वजनिका तस्याः कार्यमुवाह सः ।
प्रशंसितः पुण्यपुरे स्वल्पकालेन चाभवत् ॥ ३०० ॥

व्याख्याता सोऽच्युतो ग्रामे खत्तलावाटसंज्ञके ।
द्विसहस्राधिका लोकाः समायाताः सभां प्रति ॥ ३०१ ॥

जिल्हाधिपतिना युक्ता सुरक्षादलसैनिकाः ।
गृहीतनलिकायन्त्राः सभास्थाने धृतायुधाः ॥ ३०२ ॥

दुर्भिक्षेण समुत्पन्नां वर्णयित्वातिदुःसहाम् ।
दुर्दशां कर्षकाणां स उपायानप्यसूचयत् ॥ ३०३ ॥

अच्युतः कथयामास पोतो दुर्भिक्षसागरम् ।
तरितुं निर्मितो लोकहितार्थं शासनाधिपैः ॥ ३०४ ॥

दुर्भिक्षविधिनामायं कुरुध्वं भोस्तदाश्रयम् ।
व्यसनाब्धेः परं पारं यूयं गच्छत गच्छत ॥ ३०५ ॥

उपायाः सूचितास्तत्र दुःखोपशमकारकाः ।
व्याख्यात्रा जनबोधार्थं सुस्पष्टं विशदीकृताः ॥ ३०६ ॥

यस्य क्षेत्रे सस्यहानिर्न देयस्तेन भूकरः ।
ग्रहीतव्यो बलिर्नैति प्रार्थनीयः प्रजाधिपः ॥ ३०७ ॥

राजाज्ञैव विधिश्चायं वन्द्योऽभूदधिकारिणः ।
याच्ञा तदनुसारेण न तस्यासंमता भवेत् ॥ ३०८ ॥

एवमुत्तेजिता लोकास्तेन स्वोद्धारकर्मणे ।
करदानाद् विमुक्त्यर्थं जाता यत्नपरास्तदा ॥ ३०९ ॥

शिवाजीजयशब्दस्य घोषणेन विसर्जिता ।
सभा, जगर्जुर्लोकाश्च न दास्यामो करं वयम् ॥ ३१० ॥

ते प्रणम्य च वक्तारं धन्यवादान् प्रदाय च ।
अभिज्ञातस्वकर्तव्याः सभास्थानाद् विनिर्गताः ॥ ३११ ॥

आन्दोलनेन संतप्तः प्रान्तेशस्तु समादिशत् ।
वक्तृदोषस्य कर्तव्या न्यायागारे गवेषणा ॥ ३१२ ॥

पेणग्रामेऽभियोगोऽभूद् दत्तस्येवाच्युतस्य च ।
पिंपूटकरमुख्यानां कुलाबान्यायमन्दिरे ॥ ३१३ ।

प्रोद्दीपितोऽभियोगाग्निः प्रान्तेशेन समेधितः ।
तिलकान्दोलनं कर्तुं प्रान्ते झटिति भस्मसात् ॥ ३१४ ॥

नास्ति स्वराज्ययज्ञस्य सिद्धिः स्वार्थाहुतिं विना ।
तिलकस्योपदेशोऽयं स्वजनेभ्यो निरन्तरम् ॥ ३१५ ॥

ज्ञानदाने न दोषः स्यादच्युतो निर्भयोऽवदत् ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ ३१६ ॥

परिणामोऽभियोगस्य भवेल्लोकहितप्रदः ।
ममाद्य तु समं भाति बन्धनं वा विमोचनम् ॥ ३१७ ॥

समादेशाद् यदा पञ्च वक्तारस्तेऽधिकारिणा ।
निगृहीतास्तदा नासीत् तिलकः पुण्यपत्तने ॥ ३१८ ॥

काशीपुरे गतो राष्ट्रसभायाः सोऽधिवेशनम् ।
श्रुत्वागतः पुण्यपुरीमधिकारिकृतोद्यमम् ॥ ३१९ ॥

अधिवक्ता खरेसंज्ञस्तिलकस्य प्रियः सुहृत् ।
समायातोऽभियुक्तानां न्यायान्वेषणकर्मणि ॥ ३२० ॥

व्याख्याने तिलकोऽवोचत् प्राचार्योऽबोधयज्जनान् ।
दुर्भिक्षवैधनियमान् को दोषस्तत्र वर्तते ॥ ३२१ ॥

एकं प्रवचनं कृत्वाऽभियोगार्होऽच्युतो भवेत् ।
विध्यर्थस्य च व्याख्यानमुद्योगश्चास्ति मे सदा ॥ ३२२ ॥

अपराधशतं ह्येवं प्रतिमासं करोम्यहम् ।
कर्तव्यमभियोगानां शतमेवाधिकारिभिः ॥ ३२३ ॥

वचनैर्धीरगम्भीरैः प्रफुल्ला अनुयायिनः।
नवचैतन्यसंचारो जातो हृत्सु सभासदाम् ॥ ३२४ ॥

न्यायाधीशो ब्रूकनामा न्यायकार्यं प्रचक्रमे ।
दिनाङ्के निश्चिते पूर्वं दत्ताख्याच्युतयोर्यदा ॥ ३२५ ॥

न्यायाधीशायाधिवक्ता तत्र दोषमदर्शयत्।
एकाभियोगे चायुक्तं द्वयोर्दोषगवेषणम् ॥ ३२६ ॥

दोषारोपस्य भिन्नत्वात् पृथगन्वेषणं हितम् ।
संमतोऽभूत् तदाक्षेपो, न्यायाधीशोऽकरोत् तदा ॥ ३२७ ॥

अन्वेषणं च दोषाणामुभयोस्तु पृथक् पृथक् ।
अच्युतस्याभियोगं स प्रारेभेऽथ यथाविधि ॥ ३२८ ॥

साक्षिणो वै चतुष्पञ्चा न्यायालयपुरस्कृताः।
नासीत् तत्कथने किंचिदभियोगोपकारकम् ॥ ३२९ ॥

निर्दोषो ह्यभियुक्तोऽयं न्यायाधीशः स्वनिर्णयम् ।
अवदच्च् शुशुभे सोऽथ राहोर्मुक्तो यथा शशी ॥ ३३० ॥

समारेभे ततः पश्चाद् न्यायाधीशो गवेषणम् ।
दत्तात्रेयापराधस्य साक्षिणां च परीक्षणम् ॥ ३३१ ॥

साक्षिणामभियोक्ता तद् दृष्ट्वा साक्ष्यं निरर्थकम् ।
न्यायाधीशं ययाचेऽसावानेतुं नवसाक्षिणः ॥ ३३२ ॥

न्यायाधीशोऽभियोक्तुस्तां प्रार्थनामन्वमोदत ।
तत्साक्षिणामुपस्थित्यै निश्चिकाय दिनं तदा ॥ ३३३ ॥

तद्दिने साक्षिणः श्रुत्वा निर्णिन्ये न्यायशासकः ।
कारावासो वर्षभोग्यो दत्ताख्यस्यापराधिनः ॥ ३३४ ॥

कारागारं गतो दत्त आद्यः स्वातन्त्र्यसैनिकः ।
उच्चैः करे ध्वजं धृत्वा देशस्वातन्त्र्यसूचकम् ॥ ३३५ ॥

उग्रदण्डनिमित्तेन दुन्दुभिः शासनाहतः ।
विनाशं चण्डदण्डेन करिष्यामो विरोधिनाम् ॥ ३३६ ॥

विश्रुतः कुक्कुटारावो मङ्गलोदयसूचकः ।
उदयो भारतस्यास्तु निर्भया अब्रुवञ् जनाः ॥ ३३७ ॥

प्रशंसन्तो दत्तवीर्यं देशभक्ति च तस्य वै ।
नत्वा तिलकपादाब्जे व्यवर्तन्त जनास्तदा ॥ ३३८ ॥

अभियुक्तास्तथा चान्ये कारूळ्करमुखास्तदा ।
उपतस्थुर्यथाकालं कुलाबान्यायमन्दिरे ॥ ३३९ ॥

उपस्थितानां साक्षित्वे न्यायाधीशो निवेदनम् ।
चक्रे निर्णयमाकर्ण्यैत्यभियुक्ता न दोषिणः ॥ ३४० ॥

त्रयोऽपि मोचितास्तेन सर्वलोकाभिनन्दिताः ।
अभियोगैर्देशकार्ये श्रद्धोत्पन्ना द्रढीयसी ॥ ३४१ ॥

लोकः सहायस्तस्य स्याद् यत्नवान् यो भवेत्सदा ।
दैष्टिकोऽयत्नवान् नित्यं लोके गच्छति तुच्छताम् ॥ ३४२ ॥

अपकारस्य कर्तव्यः प्रतीकारः सदा जनैः ।
यथाशक्ति स्वयं तेषां सज्जनाः सहकारिणः ॥ ३४३ ॥

पञ्चमं साधनं श्रेष्ठमेकराष्ट्रीयभावना ।
मार्गस्य परमोत्कर्षस्तिलकस्य मयोदितः ॥ ३४४ ॥

प्रतीकं भारतैक्यस्य सा राष्ट्रीयसभा महत् ।
प्रविशन्तु सभां सर्वे जना राष्ट्रहितैषिणः ॥ ३४५ ॥

सभाज्ञया प्रवृत्तस्य प्रचारो भारतेऽखिले ।
संघट्टनस्य कर्तव्यः श्रद्धयेति तदाग्रहः ॥ ३४६ ॥

सभायाः प्रान्तशाखायाः कार्यवाहोऽभवत् स्वयम् ।
नामजोशीद्वितीयेनः बह्व्यः परिषदः कृताः ॥ ३४७ ॥

विद्यालयाचार्यपदं त्यक्त्वागृह्णाद् व्रतं हि सः ।
महासभायाः सेवाया यावदायुरपालयत् ॥ ३४८ ॥

श्रीदादाभाइनानीता सभासुरभिनन्दिनी ।
दिलीपेनेव संसेव्या भारतीयैरहर्निशम् ॥ ३४९ ॥

यच्च चीर्णं दिलीपेन नन्दिनीपालनव्रतम् ।
रघुवंशे वल्गुशब्दैः कालिदासेन वर्णितम् ॥ ३५० ॥

अन्वगच्छद् नृपो धेनुं तच्छायेव निरन्तरम् ।
अनुसेव्या सभा तद्वद् भारतीयैश्च निष्ठया ॥ ३५१ ॥

रक्षिता सिंहदंष्ट्राया धेनू राज्ञा वने तदा ।
तिरस्कृत्य सुखेनैव स्वपिण्डमपि तत्कृते ॥ ३५२ ॥

पुत्रप्राप्तिर्दिलीपस्य तद्व्रतस्य फलश्रुतिः ।
स्वातन्त्र्याप्तिर्भारतस्य सभासेवाफलश्रुतिः ॥ ३५३ ॥

तपसा स्यात् कार्यसिद्धिः राष्ट्रसेवा महत् तपः ।
कार्यो न तपसस्त्यागो दण्डनैर्वा प्रलोभनैः ॥ ३५४ ॥

भेदभावं हि संत्यज्य राष्ट्रभावेन भावितः ।
तत्परः सन् लोकहिते राष्ट्रभक्तो भजेत् सभाम् ॥ ३५५ ॥

जगाम तिलकः प्रायः प्रतिवर्षं सभां प्रति ।
अकरोत् केसरीलेखैस्तदादेशप्रसारणम् ॥ ३५६ ॥

वर्षे पञ्चनवाष्टैके सभाया अधिवेशनम् ।
समारोहेण सोत्साहं संजातं पुण्यपत्तने ॥ ३५७ ॥

प्रान्ते सभाकार्यवाह इत्युवाह धुरं स्वयम् ।
वृषस्कन्धश्च तिलकः प्रयेते च दिवानिशम् ॥ ३५८ ॥

स्थापिता तिलकेनैका समितिः कार्यकारिणी ।
द्रव्यसंपादनार्थाय मण्डलं च विनिर्मितम् ॥ ३५९ ॥

पुणेवासिजना ऊचुः पुराणमतवादिनः ।
सामाजिकसभाया वै वयं सर्वे विरोधिनः ॥ ३६० ॥

सभाधिवेशनं नैव कार्यं राष्ट्रसभागृहे ।
समाजधर्मनिन्दायाः सत्रं तन्निरपत्रपम् ॥ ३६१ ॥

निनिन्दुः कटुभिर्वाक्यैर्धार्मिकांस्ते सुधारकाः ।
सहकार्यमभूत् तेन वादोत्पत्त्यातिदुष्करम् ॥ ३६२ ॥

कार्यवाहपदत्यागमकरोत् तिलकस्तदा ।
तथापि न जहौ यत्नं राष्ट्रकार्थहितप्रदम् ॥ ३६३ ॥

नियुक्तश्चाध्यक्षपदे सुरेन्द्रो वङ्गकेसरी ।
बृहस्पतिसमो वक्ता विख्यातः सर्वभारते ॥ ३६४ ॥

आदौ मण्डपवादान्तः कर्तव्यः कार्यकारिभिः ।
विचाराणां विनिमयैः शीघ्रं नगरनेतृभिः ॥ ३६५ ॥

पदस्य स्वीकृतेः पूर्वं सुरेन्द्रः प्राह साग्रहम् ।
श्रेष्ठं च स्वागताध्यक्षं पुण्यपत्तनवासिनम् ॥ ३६६ ॥

दातेकुलोद्भवो नेता पुराणमतवादिनाम् ।
साहसी निर्भयो विद्वान् श्रीधरो विठ्ठलात्मजः ॥ ३६७ ॥

सामाजिकसभायास्तु हठाद् वै यदि मेलनम् ।
महासभामण्डपस्थं न त्यजेयुः सुधारकाः ॥ ३६८ ॥

भस्मीभवेद् मण्डपोऽयं राष्ट्रकार्याय निर्मितः ।
क्रोधानलेन लोकानामवदच् श्रीधरस्तदा ॥ ३६९ ॥

अभद्रवार्तामाकर्ण्य निर्णीतं दूरदर्शिना ।
माधवेन सभायाश्च भिन्ने स्थानेऽधिवेशनम् ॥ ३७० ॥

आध्यक्ष्यं समलंकर्तुं समये पूर्वनिश्चिते ।
सुरेन्द्रः सप्रतिनिधिः प्रस्थितः सह बान्धवैः ॥ ३७१ ॥

पुणेपुरीं गन्तुकामः स्थानकाद् हावडाभिधात् ।
मुम्बईगामिना वह्निवाहनेनातिरंहसा ॥ ३७२ ॥

अध्यक्षस्यागमार्थं च दौंडमार्गो विनिश्चितः ।
महासभास्वागतस्य समित्या मनमाडतः ॥ ३७३ ॥

प्रथमं स्वागतं तस्य कृतं वै तिलकानुगैः ।
हडप्सराभिधे स्थाने संस्थितेऽस्याग्निवाहने ॥ ३७४ ॥

अलंकृता पुण्यपुरी चूतपल्लवतोरणैः ।
पताकाभिर्ध्वजैरुच्चैः कदलीस्तम्भसंस्थितैः ॥ ३७५ ॥

सुरेन्द्रसंप्रवेशस्य समये स्थानकाङ्गने ।
जातोऽग्निगोलकस्फोटोऽध्यक्षागमनसूचकः ॥ ३७६ ॥

सदस्याः कार्यकारिण्याः सभाध्यक्षपुरःसराः ।
पुष्पाणामर्पयामासुः स्रजमापादलम्बिनीम् ॥ ३७७ ॥

ददुर्हस्ते पुष्पगुच्छं नानावर्णोपशोभितम् ।
उच्चैरुदीरयामासुर्जयशब्दं तदा जनाः ॥ ३७८ ॥

स्थानकाद् बहिरायातमारूढं रथमुत्तमम् ।
अध्यक्षं प्रणताः सर्वे संप्राप्ता दर्शनोत्सुकाः ॥ ३७९ ॥

मस्तके पुष्पवृष्टिं च चक्रुर्नगरबालिकाः ।
समारोहेण नीतस्य राजमार्गैः सुशोभितैः ॥ ३८० ॥

जयशब्दनिनादेन पूरितं सर्वमम्बरम् ।
गिरौ दुन्दुभयो नेदुः पर्वतीमन्दिरे स्थिताः ॥ ३८१ ॥

सुमङ्गलरवाञ् शङ्खान् प्रदध्मुर्देवपूजकाः ।
गीतवादित्रतूर्याणामुद्घोषस्तुमुलोऽभवत् ॥ ३८२ ॥

सुप्रीतोऽहं स्वागतेन पुण्यपत्तनवासिभिः ।
अद्भुतेन कृतेनाद्य स्वातिथ्यनिपुणैर्जनैः ॥ ३८३ ॥

संवर्धते राष्ट्रकार्यमैक्येनैव ततो महान् ।
यत्नः कर्तव्य ऐक्यस्य स्थापनाय मुमुक्षुभिः ॥ ३८४ ॥

एवमुक्त्वा नमस्कृत्य सर्वोपस्थितबान्धवान् ।
स्वनिवासं गतोऽध्यक्षः श्रान्तो मार्गपरिश्रमैः ॥ ३८५ ॥

प्रान्तप्रतिनिधित्वेन भारतीयाः समागताः ।
संख्याब्धिवसुबाणैकमिता तेषां निदर्शिता ॥ ३८६ ॥

असंख्याश्च सभास्थाने प्रेक्षकाः समुपस्थिताः ।
विख्यातः स्वागताध्यक्षो भिडेवंशविभूषणः ॥ ३८७ ॥

सभाजनास्तेन साकं सभास्थानं समागते ।
सुरेन्द्र उत्थिता उच्चैस्तालसंवादनैः सह ॥ ३८८ ॥

सादरं स्वागतं चक्रुर्जयशब्दैः सभासदः ।
भिडेमहाशयस्तस्मै पुष्पमालां समार्पयत् ॥ ३८९ ॥

ऊढाध्यक्षधुरा योग्या वयं चोपकृताः खलु ।
सुरेन्द्रेणेति सुप्रज्ञ आह मोरेश्वरात्मजः ॥ ३९० ॥

आनन्दाचार्लुरभवत् सूचको देशसेवकः ।
रङ्गनाथो विदर्भस्थोऽभवत् तदनुमोदकः ॥ ३९१ ॥

सुरेन्द्रं हि प्रार्थयन्त बाहादुर्जिश्च पुष्टिदः ।
जनाः केचिद् मराठ्यां वै तत्प्रस्तावसमर्थकाः ॥ ३९२ ॥

अलंकरोत्वत्रभवानध्यक्षपदमुत्तमम् ।
नेतृत्वेनोपदेशेनानुगृह्णातु सभामिमाम् ॥ ३९३ ॥

शृण्वंस्तालनिनादं च जयघोषं नभोगतम् ।
भिडेदत्तकरः श्रीमानारोहच्च शुभमासनम् ॥ ३९४ ॥

व्याख्यानं प्रहरं यावदध्यक्षोऽस्खलितं ददौ ।
ललितालंकृताङ्ग्लायां भाषायां राष्ट्रचोदकम् ॥ ३९५ ॥

आलोचितं राष्ट्रकार्यं सभाया दशवार्षिकम् ।
" कृतो मृदां चयाद् राष्ट्रचैतन्यपुरुषस्तया " ॥ ३९६ ॥

लॉंगफेलोकवेः काव्यात् स्पेनविद्यार्थिसंज्ञकात् ।
एकं वचनमुद्धृत्य साभिमानमुवाच सः ॥ ३९७ ॥

दिनत्रयसमारोहे चर्चिता एकविंशतिः ।
प्रस्तावाः संमताः सर्वे संख्याताः षट् च विंशतिः ॥ ३९८ ॥

प्रस्तावद्वयचर्चायां तिलको भाषणे ददौ ।
भूधारणव्यवस्थायाः शाश्वतत्वं सदा भवेत् ॥ ३९९ ॥

इत्युक्तं तिलकेनात्र प्रस्तावमनुमोदितुम् ।
खोतानां कोङ्कणस्थानामन्यायपरिमार्जनम् ॥ ४०० ॥

प्रशासनं न कुरुत इत्यवोचत् स्वभाषणे ।
भाषणस्य द्वितीयस्य न सार उपलभ्यते ॥ ४०१ ॥

चक्रुः सभाजनं सर्वे प्रेरणा चान्ते सभापतेः ।
श्रोतारः प्रतिनिधयस्तथा संचालका अपि ॥ ४०२ ॥

गुरुबाबागृहे राजगृहे चापि निमन्त्रिताः ।
उद्यानस्वागतार्थं तेऽतिथयोऽध्यक्षसंयुताः ॥ ४०३ ॥

नानाप्रान्तागताः सभ्यास्तिलकस्यानुयायिनः ।
आतिथ्येनातिसंतुष्टाः शशंसुः पुण्यवासिनः ॥ ४०४ ॥

राष्ट्रीयसंसत्सप्ताहे शिवोत्सवसभा कृता ।
तदा श्रेष्ठा अतिथयस्तिलकेन निमन्त्रिताः ॥ ४०५ ॥

आङ्ग्लभाषाप्रभुर्वक्ता सुरेन्द्रो वङ्गभूषणः ।
महामना मालवीयः शशिशुभ्रयशोन्वितः ॥ ४०६ ॥

अन्येऽपि बहवो मान्या भिन्नप्रान्तागता जनाः ।
शिवस्मृत्यादरं कर्तुं सभास्थानमुपस्थिताः ॥ ४०७ ॥

सुरेन्द्रमालवीयादिदर्शनाकाङ्क्षिणो जनाः ।
अगण्यसंख्याः संप्राप्ताः पौरजानपदास्तथा ॥ ४०८ ॥

शिवाजिना कृतं कार्यं देशधर्महितप्रदम् ।
तिलकेन सुरेन्द्रेण मालवीयेन च स्तुतम् ॥ ४०९ ॥

श्रीशिवाजीजयारावैः सभान्ते पूरितं नभः ।
हृदाकाशं च लोकानां देशभक्तिस्वरैस्तथा ॥ ४१० ॥

दत्त्वा साधनपञ्चकं भरतभूद्धारस्य संदर्शय-
न्नादौ कष्टमयं परंतु सुखदं मार्गं निदाने तथा ।
योऽसंतोषतरोरुवाप हृदये बीजं जनानां दृढं
स्थानं चात्मनिवासयोग्यमकरोद् बालाय तस्मै नमः ॥ ४११ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे तिलकमार्गसाधनपञ्चक-
विवरणाख्योऽष्टादशस्तरङ्गः ।

## एकोनविंशस्तरङ्गः

संचरन् वै भवाटव्यां कालव्याघ्रः क्षुधातुरः ।
व्यापादयति सत्वानि नित्यमत्ति च निर्घृणः ॥ १ ॥

भूरादिसत्यलोकान्तां सृष्टिं यो निर्ममेऽद्भुताम् ।
स ब्रह्मापि न शक्नोति त्रातुं कालाननात् प्रजाः ॥ २ ॥

कल्पान्ते च प्रलीयन्ते ब्रह्मविष्णुमहेश्वराः ।
उत्पद्यन्ते च कल्पादौ सदीक्षामूलमायया ॥ ३ ॥

विकारा वै शरीरस्य जन्ममृत्युजरामयाः ।
शरीरिणो भवन्त्येते कारणं सुखदुःखयोः ॥ ४ ॥

प्रतीयते जडात्मैक्यं संशयग्रस्तबुद्धिना ।
न पश्यति नरोऽज्ञश्च द्वन्द्वातीतत्वमात्मनः ॥ ५ ॥

आप्तस्य मरणं श्रुत्वा जनः शोके निमज्जति ।
उन्मज्जति पुनस्तस्मात् प्रकृतिं स्वामधिष्ठितः ॥ ६ ॥

ज्ञानप्लवेन शोकाब्धिं जनो व्यतितरिष्यति ।
नावि चुम्बकवद् देहे जीवोऽस्ति ध्रुवदर्शकः ॥ ७ ॥

अन्वयव्यतिरेकाभ्यां जीवो ब्रह्मैव नापरः ।
इति ज्ञात्वा भवेद् मुक्तः सुखदुःखादिबन्धनात् ॥ ८ ॥

सुखदुःखमयं चक्रं मायया यत् प्रवर्तितम् ।
नाकर्षति स्थितप्रज्ञमात्मानात्मविवेकिनम् ॥ ९ ॥

आद्यन्तयोरन्तराले सृष्टिर्या दृष्टिगोचरा ।
आहुः शास्त्रविदो व्यक्तमध्यां तां सूक्ष्मदर्शिनः ॥ १० ॥

व्यक्तमध्यस्थितेः कालो जनैर्जीवितमुच्यते ।
तस्यावधिं न जानाति योनिजो वाऽप्ययोनिजः ॥ ११ ॥

मृत्योर्बिभेति न ज्ञानी फलत्यागी स्वकर्मकृत् ।
सक्तः कर्मफलेऽज्ञानी मृत्योर्भीत्या विकम्पते ॥ १२ ॥

एकोनविंशशतके दशके चान्तिमेऽशुभे ।
पपात यमदृग्वज्रो महाविद्यालयोपरि ॥ १३ ॥

तिलकानन्तरमष्टावाचार्यपदभूषकाः ।
महाविद्यालये तस्य सुहृदः कार्यतत्पराः ॥ १४ ॥

आपटेवंशसंभूतः प्राचार्याणां शिरोमणिः ।
वामनाख्यो देवभाषापण्डितश्छात्रवन्दितः ॥ १५ ॥

गोपालोऽगरकरोपाह्वस्तत्त्वज्ञानविशारदः ।
माधवो नामजोशी यो व्यवहारविचक्षणः ॥ १६ ॥

आङ्ग्लभाषाविशेषज्ञो वासुदेवः कलापटुः ।
नारायणो देवभाषाविद्वान् धारपवंशजः ॥ १७ ॥

गोळेवंश्यो महादेवो द्विजो विज्ञानकोविदः ।
चिन्तामणिः सुधीर्भानुवंशीयश्चेतिहासवित् ॥ १८ ॥

गोपालश्चार्थशास्त्रज्ञो गोखलेवंशभूषणः ।
रेजुर्वसव एवाऽष्टौ वर्चसा शारदालये ॥ १९ ॥

गुरुत्वं चाधिपत्यं च संस्थाया ग्रन्थनिर्मितिः ।
एभिश्च विक्रमैः प्राप वामनः सुयशस्त्रिभिः ॥ २० ॥

त्रिपद्याकाशमाक्रम्य प्रयात्यस्तं यथा रविः ।
दिनात्यये, तथा क्षीणो वामनोऽदर्शनं गतः ॥ २१ ॥

जग्रास वामनं कालो दिनाङ्के नवमेऽष्टमे ।
मासि, द्वानवताब्दस्य शतकेऽथोनविंशके ॥ २२ ॥

वामनेन कृतं कार्यं शिक्षाक्षेत्रे प्रशंसितम् ।
शोकसंविग्नचित्तेन तिलकेन स्वपत्रयोः ॥ २३ ॥

नारायणः कृष्णपुत्रो धारपाख्यकुलोद्भवः ।
डेक्कन्शिक्षणसंस्थायाः संस्थापकसभासदाम् ॥ २४ ॥

एक आसीद् देवभाषाध्यायकोऽध्यापकोऽभवत् ।
नूत्नाङ्ग्लपाठशालायां महाविद्यालयेऽपि सः ॥ २५ ॥

पितरि द्रव्यहीनेऽपि केरूनानासमाश्रितः ।
विद्याशास्त्रकलाज्ञानं प्राप्तवान् धारपो युवा ॥ २६ ॥

व्याधिग्रस्तो व्यरंसीत् स संस्थाध्यापनकर्मणः ।
वेदग्रहवसुब्रह्ममितेऽब्दे त्रिदिवं गतः ॥ २७ ॥

विद्यादाने व्यतीयुश्च समास्तस्य त्रयोदश ।
चतुश्चत्वारिंशवर्षे वयसाऽगाद् यमालयम् ॥ २८ ॥

वंशे केळकरोपाह्वे बाळकृष्णादजायत ।
वासुदेवाभिधः पुत्रः सातारानगरे शुभे ॥ २९ ॥

विद्यापीठप्रवेशस्य परीक्षायां स बुद्धिमान् ।
यशो लेभे धारवाडविद्यामन्दिरशिक्षितः ॥ ३० ॥

गत्वा मुम्बापुरीमुच्चशिक्षणार्थं समाविशत् ।
एल्फिन्स्टनमहाविद्यालयं भारतविश्रुतम् ॥ ३१ ॥

परीक्षासु समुत्तीर्णो यथाकालं विभूषितः ।
बीएपदव्या तरुणो मयूरः शिखयेव सः ॥ ३२ ॥

एलेल्बीपदवीं प्राप्तुं ततो यत्नं चकार सः ।
तिलकागरकरौ ज्ञात्वा कारागारं गताविति ॥ ३३ ॥

तत्याज तु स्वमध्यायं प्राप्तः पुण्यपुरीं प्रति ।
नूत्नाङ्ग्लपाठशालायां शिक्षकासनमास्थितः ॥ ३४ ॥

अर्थशास्त्रे तथा चाङ्ग्लभाषायां तत्प्रवीणताम् ।
ज्ञात्वाचार्यपदं तस्मै सभासद्भिः समर्पितम् ॥ ३५ ॥

मराठाकेसरीपत्रसंपादनसमुत्सुकः ।
तिलकस्य सहायोऽभूद् वासुदेवः सुहृत्तमः ॥ ३६ ॥

शेक्स्पीयरः सुपठितो वासुदेवेन धीमता ।
तन्नाटकस्यानुवादं महाराष्ट्र्यां चकार सः ॥ ३७ ॥

मर्मज्ञोऽभिनयस्यासीद् नाट्यनेपथ्ययोरपि ।
गणपत्रावनटश्रेष्ठैरादृतः स कलापटुः ॥ ३८ ॥

अध्यापनाद् निवृत्तोऽभूद् विश्रान्त्यै व्याधिपीडितः ।
गतो नोपशमं व्याधिः स्वर्गलोकं जगाम सः ॥ ३९ ॥

मेमासि पञ्चनवताब्देऽष्टादशशतोत्तरे ।
वयसा स चतुस्त्रिंशो तरुणोऽगाद् यमालयम् ॥ ४० ॥

कलाविदं च विद्वांसं रसिकं पत्रलेखकम् ।
तिलको वर्णयामास मित्रं तद्दुःखविह्वलः ॥ ४१ ॥

दुःखितः परदुःखेन त्यागमूर्तिरगरकरः ।
सुधारक इति ख्यातः प्राचार्यो लेखकोत्तमः ॥ ४२ ॥

टेंभूग्रामे कुटुम्ब्येको गणेशाख्योऽवसद् द्विजः ।
सुतं प्रासूत तद्भार्या कऱ्हाडक्षेत्रसंनिधौ ॥ ४३ ॥

वसुमुन्यश्ववसुधासंमिते शालिवाहने ।
शुभे संवत्सरे शाके द्वादश्यां गुरुवासरे ॥ ४४ ॥

आषाढस्य सिते पक्षे शुभयोगे सुलक्षणे ।
गोपाल इति तन्नाम चक्रे विधियुतं पिता ॥ ४५ ॥

असौ प्राथमिकं प्राप्य शिक्षणं करहाटके ।
जीविकार्थं धनं लेभे भूत्वा लेखनिकस्तदा ॥ ४६ ॥

समाश्रयद् भागवतं कोल्हापूरनिवासिनम् ।
जनन्या सह गोपाल उच्चज्ञानाप्तिहेतुना ॥ ४७ ॥

आसीदध्यापकस्तत्र विष्णुनामा महाजनी ।
साहित्यरसिको विद्वान् यः सखा विष्णुशास्त्रिणः ॥ ४८ ॥

समुत्तीर्णः परीक्षाब्धि स गतः पुण्यपत्तनम् ।
महाविद्यालयं तत्र प्राविशद् दक्षिणाभिधम् ॥ ४९ ॥

तिलकस्य च तेनाप्तं मित्रत्वं ज्ञानमन्दिरे ।
समानैर्व्यसनोद्योगशीलैस्तत् परिपोषितम् ॥ ५० ॥

द्वन्द्वयुद्धे ततः पश्चात् प्रवृत्तौ सुहृदौ कथम् ।
पूर्वग्रन्थे निगदिता विस्तरेण कथाद्भुता ॥ ५१ ॥

अभूषयद् गुणज्येष्ठो गोपालो वामने गते ।
प्राचार्यस्य पदं श्रेष्ठं महाविद्यालये तदा ॥ ५२ ॥

अध्यापनाच्च छात्राणां पत्रसंपादनाच् श्रमः ।
दुःसहोऽभूच् शरीरस्थव्याधिभिस्तद् गृहं कृतम् ॥ ५३ ॥

नोपचारैः शमं यातो व्याधिर्दुःसाध्यतां गतः ।
न तु देहान्तपर्यन्तं विरराम स्वकर्मणः ॥ ५४ ॥

रुग्णशय्याशयानस्य गोपालस्य महात्मनः ।
तिलको दर्शनायागाद् भीष्मस्येव युधिष्ठिरः ॥ ५५ ॥

व्याधिदुःखं विसस्मार गोपालो बालदर्शनात् ।
अवाप मनसः शान्तिं परमां योगिदुर्लभाम् ॥ ५६ ॥

दृग्भ्यां बहु बभाषाते वाचा चाल्पं सुहृत्तमौ ।
विनिःसृता अश्रुधारा दृष्ट्वा खलु परस्परम् ॥ ५७ ॥

अश्रुरूपेण तद् व्यक्तं हृत्स्थं संकलितं वचः ।
वैमनस्यं विलुप्तं तद् मतभेदात् समुत्थितम् ॥ ५८ ॥

संगतावनुतापेन तप्तौ तौ सुहृदुत्तमौ ।
दृढं तदा मानसाभ्यां तथा तप्तायसी यथा ॥ ५९ ॥

दिव्यं त्वया कृतं कर्म तेनायुः सफलं तव ।
दर्शयित्वा च सन्मार्गं जनेभ्यस्त्यागमूर्तिना ॥ ६० ॥

उक्त्वैवं पाणिना पाणिमग्रहीत् तिलकस्तदा ।
प्रणिपत्य स्वीचकार सुहृदश्च नमस्कृतिम् ॥ ६१ ॥

दत्तानुज्ञो बहिर्यातो विषण्णः स सुहृत् तदा ।
उवाच वासुदेवाख्यं स्वमित्रं स प्रगल्भवाक् ॥ ६२ ॥

संध्याकालः समायातो गतोऽर्कोऽस्ताचलं प्रति ।
मन्दप्रकाशा उदितास्तारकास्तमसावृताः ॥ ६३ ॥

प्राणज्योतिरुदक्रामच् शरीरात् पाञ्चभौतिकात् ।
गोपालस्य तदा वेश्म जातं शोकनिकेतनम् ॥ ६४ ॥

बालोऽलिखद् मृत्युलेखं बाष्पपूरितलोचनः ।
सार्धप्रहरपर्यन्तं मित्रविश्लेषदुःखितः ॥ ६५ ॥

उवाच तिलकः शंसन् सुहृदो गुणगौरवम् ।
पुरुषस्तत्समो नान्यो दृश्यते दृढनिश्चयः ॥ ६६ ॥

स्वभाषावृत्तपत्राणां प्रतिष्ठा तेन वर्धिता ।
गाम्भीर्येण विचाराणां ललितप्रौढभाषया ॥ ६७ ॥

हिताय देशबन्धूनां येते स्वार्थमुपेक्ष्य यः ।
साधुरेव स मन्तव्यः सर्वत्र समदर्शनः ॥ ६८ ॥

अष्टात्रिंशच्च वर्षाणि व्यतीतानीह जन्मनि ।
मर्त्यलोके लोकसेवारतस्यागरकरस्य वै ॥ ६९ ॥

रायदुर्गस्योपकण्ठे वीरग्रामेऽतिशोभने ।
विप्रो बल्लाळनामासीद् नामजोशीकुलोद्भवः ॥ ७० ॥

बल्लाळाद् माधवो जातः शैशवं तस्य तत्स्थले ।
पितृभ्यां ललितस्यासीद् गतं विद्यार्जनं विना ॥ ७१ ॥

बल्लाळः सकुटुम्बो वै पुणेग्रामं समागतः ।
द्रव्यप्राप्त्यै कुटुम्बस्य जीविकायै निराश्रयः ॥ ७२ ॥

समाश्रयच् श्रेष्ठिनं स जमनाभाइनामकम् ।
अल्पद्रव्यप्रदं तेन स्वीकृतं व्ययलेखनम् ॥ ७३ ॥

अधीते चाङ्ग्ललाटीने भाषे मिशनमन्दिरे ।
उत्तीर्णो माधवो मॅट्रिक्परीक्षां तत्र शिक्षितः ॥ ७४ ॥

प्रकाशिते तेन पत्रे भूत्वा संपादकः स्वयम् ।
किरणो लोकभाषायां चाङ्ग्ल्यां दक्षिणतारकाम् ॥ ७५ ॥

नूत्नाङ्ग्लपाठशालायाः शिक्षकत्वे नियोजितः ।
स शालायाः समुन्नत्यै सततं यत्नवानभूत् ॥ ७६ ॥

विद्यावृद्ध्यै स्थापिता या संस्था सा दक्षिणाभिधा ।
तत्स्थापकसदस्योऽसौ षड्भिश्च सहकारिभिः ॥ ७७ ॥

महाविद्यालयस्यार्थे द्रव्यं तेनार्जितं बहु ।
संस्थानिकसकाशात् स प्राप्नोद् वित्तं च भूरिशः ॥ ७८ ॥

कार्ये पुरीपालिकाया दत्तचित्तो विशेषतः ।
एकादश समास्तस्याः सदस्यस्थानमास्थितः ॥ ७९ ॥

उद्योगोन्नतिसिद्ध्यर्थं महांस्तेनोद्यमः कृतः ।
आकृष्टं परिषद्भिश्च लोकचित्तं प्रदर्शनैः ॥ ८० ॥

माधवस्तिलकस्यासीत् सहकार्याय तत्परः ।
वादेषु प्रतिवादेषु भीषणव्यसनेष्वपि ॥ ८१ ॥

व्यवहारज्ञ उद्योगी माधवो जनमान्यताम् ।
पदं संप्राप सर्वत्र विद्वज्जनसभासु च ॥ ८२ ॥

चतुर्न्यूनैकोनविंशशतेऽब्दे ख्रिस्तसंज्ञके ।
गतः स्वर्गं नामजोशीवंशभूषणमाधवः ॥ ८३ ॥

छिन्नो हस्तोऽपसव्यो मे कालेन निशितासिना ।
स्वर्लोकं माधवं नीत्वा मित्रं कार्यधुरंधरम् ॥ ८४ ॥

इत्याह तिलको लोकान् श्मशाने समुपस्थितान् ।
दुःखावेगं संनियम्य बाष्पगद्गदया गिरा ॥ ८५ ॥

तस्य पुत्रकलत्राणामवहत् तिलकस्ततः ।
योगक्षेमं दीर्घकालं कृतज्ञस्तद्धितप्रियः ॥ ८६ ॥

मित्राणां तिलकोऽतिदुःखितमना अल्पायुषां मृत्युभिः
कस्मादार्यजनस्य मृत्युवशता संपत्स्यतेऽल्पायुषि ।
आङ्ग्लज्ञानविभूषितस्य मनसा सोऽचिन्तयत् कारणं
पथ्याहारविहारयोर्गुरुकुलावासे कृतं हेलनम् ॥ ८७ ॥

विद्याभ्यासपरिश्रमेण सततं शारीरधातुव्यय-
स्तस्योत्पादकभोजनं समुचितं छात्रेण न प्राप्यते ।
व्यायामस्य न साधनं न नियमो निद्रोपभोगस्य च
स्वैरं चात्यनियन्त्रितं च चरितं स्वल्पायुषः कारणम् ॥ ८८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे मित्रवियोगाख्य एकोनविंशस्तरङ्गः ।

# विंशतितमस्तरङ्गः

भगवान् परमो हंसो रामकृष्णः सुविश्रुतः ।
कालीभक्तो महायोगी ब्रह्मविद्यापरायणः ॥ १ ॥

न्यवसत् कालिकास्थाने दक्षिणेश्वरमन्दिरे ।
वङ्गदेशे जह्नुकन्यागङ्गातीरेऽतिशोभने ॥ २ ॥

तत्र गङ्गाजले स्नात्वा समाराध्य महेश्वरम् ।
आयान्ति सज्जना नित्यं पातुं तद्वचनामृतम् ॥ ३ ॥

पुष्पितस्येव वृक्षस्य यशोगन्धो महात्मनः ।
ववौ तेन समाकृष्टा रामकृष्णपदाम्बुजे ॥ ४ ॥

आङ्ग्लज्ञानविदः केचित् सज्जनाः षट्पदा इव ।
तज्ज्ञानं संशयोच्छेदि दृष्ट्वा वै विस्मयं ययुः ॥ ५ ॥

नवब्राह्मसमाजस्य स्थापकस्तत्त्वकोविदः ।
वक्ता केशवचन्द्राख्यो सर्वभारतविश्रुतः ॥ ६ ॥

रामकृष्णप्रवचनान्यशृणोद् भक्तिसंयुतः ।
अभवद् गतसंदेहो विश्वधर्मप्रचारकः ॥ ७ ॥

ज्ञानार्णवमुपेयुस्तमात्मज्ञानपिपासवः ।
व्याख्यानेष्वकरोद् योगी सर्वधर्मसमन्वयम् ॥ ८ ॥

युवैकस्तत्त्वजिज्ञासुर्नरेन्द्रो बुद्धिमत्तमः ।
श्रुत्वा परमहंसस्य कीर्तिं प्राप तदन्तिकम् ॥ ९ ॥

पस्पर्श शिरसा पादौ पप्रच्छ प्रश्नमद्भुतम् ।
युवको रामकृष्णं हि दृष्टो देवस्त्वयेति किम् ॥ १० ॥

देवं नित्यं प्रपश्यामि दर्शयामि निरागसे ।
तुभ्यं च शुद्धचित्ताय परमेशं यदीच्छसि ॥ ११ ॥

कृपापात्रो नरेन्द्रोऽभूद् गुरुभक्तिपरायणः ।
तस्याभवत् तदा देवदर्शनं चिरकाङ्क्षितम् ॥ १२ ॥

शिष्योत्तमो योगिनस्तु विवेकानन्दसंज्ञकः ।
भुवः पश्चिमगोलार्धे नरेन्द्रः ख्यातिमाप्तवान् ॥ १३ ॥

तीर्थयात्रानिमित्तेन बङ्गानगरसंस्थितात् ।
स्वमठात् प्रस्थितः कर्तुं स्वामी देशनिरीक्षणम् ॥ १४ ॥

दृष्ट्वा क्षेत्राणि पुण्यानि सर्वाण्युत्तरभारते ।
गङ्गायमुनयोः स्नात्वा पवित्रे संगमोदके ॥ १५ ॥

पर्यटन् मरुसौराष्ट्रगुर्जरेषु महामनाः ।
समभ्यर्च्य द्वारकेशं तापीतीरं समागतः ॥ १६ ॥

तापीनर्मदयोर्मध्ये नगरे खांडवाभिधे ।
उवासातिथ्यशीलस्य हरिदासस्य सद्मनि ॥ १७ ॥

ग्रामस्थान् सोऽथ शुश्रूषून् धर्मतत्त्वमुपादिशत् ।
मुम्बापुरीं प्रतस्थे च दत्त्वा शिष्येभ्य आशिषः ॥ १८ ॥

खैस्ते द्वानवतितमेऽब्देऽष्टादशशतोत्तरे ।
अन्ते मासस्याष्टमस्य स्वामी पुण्यपुरीं ययौ ॥ १९ ॥

योगीशः पुण्यनगरे न्यवसत् तिलकालये ।
दशाहं चक्रतुस्तत्र चर्चां च नरपुंगवौ ॥ २० ॥

तच्चर्चान्ते समुत्पन्नाः सिद्धान्ताः सुविनिश्चिताः ।
भारतोन्नतिसाध्यस्य जाताः सन्मार्गदर्शकाः ॥ २१ ॥

उभयोरुत्तरे काले स्वकर्तव्यविनिश्चितौ ।
सत्संवादोऽस्ति लोकानां दुर्लभः पुण्यदायकः ॥ २२ ॥

धर्मश्रद्धावर्धनाय राष्ट्रभाषोदयाय च ।
भारतीयेषु कर्तव्यो यत्नः संघटितो महान् ॥ २३ ॥

पारतन्त्र्याद् भारतस्य दीनावस्थाभवद् ननु ।
उपासका भारतीया स्वातन्त्र्यस्य भवन्त्विति ॥ २४ ॥

स्वदेशे परदेशेषु प्रचारः शिक्षितैर्नवैः ।
कर्तव्यो धर्मतत्त्वानां भारतीयस्थितेरपि ॥ २५ ॥

ज्ञानेन हन्यतेऽज्ञानं प्रकाशेन यथा तमः ।
उत्साहश्चात्मविश्वासो जायते च हितप्रदः ॥ २६ ॥

शिकागोगमनस्येच्छा स्वामिना न प्रदर्शिता ।
तिलकायेत्यहं मन्ये वसता तिलकालये ॥ २७ ॥

महाबलेश्वरं स्वामी प्रस्थितः पुण्यपत्तनात् ।
ततो रामेश्वरं गत्वा पूजयामास शंकरम् ॥ २८ ॥

दक्षिणोदधितीरस्था दक्षिणाशाधिदेवता ।
अर्चिता स्वामिना देवी ततः कन्याकुमारिका ॥ २९ ॥

अमेरिकाप्रयाणस्य स्वामी तत्रैव निश्चयम् ।
चकारेति चरित्रेऽस्ति लिखितं स्वामिना स्वयम् ॥ ३० ॥

शिकागोनगरे स्वामी विश्वधर्ममहोत्सवे ।
हिन्दुधर्मप्रतिनिधिरित्यसौ समुपस्थितः ॥ ३१ ॥

वक्तृत्वेन जिता संसद् विद्यया विनयेन च ।
त्रिखण्डपण्डितानां सा स्वामिना कृपया गुरोः ॥ ३२ ॥

प्रमाणं विश्वधर्मस्य वेदशास्त्राणि निश्चितम् ।
महर्षिभिः प्रणीतानि शुद्धे कृतयुगे पुरा ॥ ३३ ॥

रहस्यं सर्वधर्माणां वचनेषूपलभ्यते ।
वेदान्तोपनिषद्गीताग्रन्थानां सर्वमानवैः ॥ ३४ ॥

अमेरिकोपराज्येषु प्रचारः स्वामिना कृतः ।
ब्रह्मविद्यायोगशास्त्रसिद्धान्तानां स्थले स्थले ॥ ३५ ॥

स्त्रियः काश्चिन्नराः केचित् स्वामिनः शिष्यतां तदा ।
लेभिरेऽध्ययनं चक्रुर्दर्शनानां च नित्यशः ॥ ३६ ॥

विद्यादानाय शिष्याणामध्यायाय च योगिनाम् ।
धर्मज्ञानप्रसाराय स्वामिना स्थापिता मठाः ॥ ३७ ॥

अमेरिकात इंग्लंदं द्विवारं समुपागमत् ।
निर्बन्धादाङ्ग्लसुहृदां स्वामी धर्मस्य तत्त्वविद् ॥ ३८ ॥

मार्गे यूरोपदेशेषु धर्मबुद्धेरधोगतिम् ।
दृष्ट्वा स्वाध्यायकेन्द्राणि स्थापयामास योगविद् ॥ ३९ ॥

यूरोपामेरिकेंग्लंदकृतकार्यनिरीक्षणम् ।
कर्तुं नियोजिताः शिष्या विद्वांसोऽध्यात्मकोविदाः ॥ ४० ॥

प्रतस्थे जलमार्गेण मातृभूदर्शनाय सः ।
लङ्काद्वीपे समायातः कोलंबोनाम पत्तनम् ॥ ४१ ॥

सत्कृतो हिन्दुभिस्तत्र सानन्दं सिंहलैश्च सः ।
अनुराधापुरं गत्वा बोधिवृक्षं व्यलोकयत् ॥ ४२ ॥

जाफनाख्यं द्वीपकल्पं पोनांबुलनिमन्त्रितः ।
व्याख्यातुमगमद् धर्मं हिन्दुबान्धववन्दितः ॥ ४३ ॥

लङ्काया जलयानेन गतः पामवनं पुरम् ।
ततोऽगच्छद् रामनाडं राज्ञा लोकैश्च पूजितः ॥ ४४ ॥

ददौ स्वामी महानन्दं जनेभ्यः पाण्ड्यचोलयोः ।
ततोऽल्पकालं मद्रासे विश्रान्त्यर्थमुवास सः ॥ ४५ ॥

कलकत्तां गन्तुकामः प्रतस्थे मद्रपत्तनात् ।
सशिष्यो जलयानेन स्वामी पौरैर्नमस्कृतः ॥ ४६ ॥

सियाल्डास्थानके प्राप्ता वङ्गीयनरयोषितः ।
सत्कर्तुं स्वामिनं वन्द्यं प्रौढा विद्यार्थिनस्तथा ॥ ४७ ॥

स्थानके मण्डलं वायोर्जयघोषैर्निनादितम् ।
अश्वो व्यमोचयँल्लोका ऊहुस्ते स्वामिनो रथम् ॥ ४८ ॥

मानपत्रं ततः सर्ववङ्गवासिभिरर्पितम् ।
स्वामिने कृतकार्याय योद्ध्रे विजयिने यथा ॥ ४९ ॥

निर्मितो लोकसेवार्थं नवः संन्यासिनां गणः ।
रामकृष्णदयासङ्घो दैन्यपीडोपशामकः ॥ ५० ॥

एवं कृत्वा महत् कार्यं सर्वभूतहितप्रदम् ।
विलीनोऽभूद् योगिवर्यो ब्रह्मणि ज्ञानरूपिणि ॥ ५१ ॥

आविशत् परमात्मानं जीवात्मा यस्तदंशभाग् ।
अभेदेन स्थितस्तत्र ब्रह्माण्डक्षेमदायकः ॥ ५२ ॥

संगमस्तिलकबालविवेकयो-
वर्णितः सकललोकहितप्रदः ।
गाङ्गयामुनजलौघसमागमो
यात्रिकस्य सुहिताय यथा भवेत् ॥ ५३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे विवेकानन्ददिग्विजयाख्यो विंशतितमस्तरङ्गः ।

# एकविंशस्तरङ्गः

मृत्योः सखा निष्करुणो व्याधिः परमदारुणः ।
मुम्बापुर्यां प्रादुरासीद् ग्रान्थिकज्वरसंज्ञकः ॥ १ ॥

व्याप्नोत् सांसर्गिको व्याधिरल्पकालेऽखिलां पुरीम् ।
न किंचिदौषधं तस्य विज्ञातं भिषजां वरैः ॥ २ ॥

आयुर्वेदे भारतीये पाश्चात्ये वैद्यकेऽपि वा ।
तन्निदानं चिकित्सा वा विहिता नैव कुत्रचित् ॥ ३ ॥

असंख्याता गता मृत्युं शुश्रूषां चौषधं विना ।
मुम्बापुरी तदा सर्वा निमग्ना शोकसागरे ॥ ४ ॥

युवानो विधुरा जाता युवत्यो गतभर्तृकाः ।
वयोवृद्धाः पुत्रहीनाः पितृहीनाश्च बालकाः ॥ ५ ॥

मुम्बईनगरं जातं कालव्यालाननं तदा ।
प्रतिक्षणं प्रतीताभूत् क्षणभङ्गुरतायुषः ॥ ६ ॥

गृहेभ्यो निर्गता लोकाः संत्यज्य व्याधिपीडितान् ।
स्वीयानाप्तान् भयात् केचित् प्राणत्राणपरायणाः ॥ ७ ॥

पण्यस्थाने राजमार्गे नाट्यनृत्यस्थलेषु च ।
संचारो न हि लोकानां न्यायकार्यालयेष्वपि ॥ ८ ॥

प्रेतानां दहनायापि जातं दुर्लभमिन्धनम् ।
निर्जनं नगरं सर्वं श्मशाने जनदर्शनम् ॥ ९ ॥

कर्णाभ्यां न श्रुतः शब्दो नराणां रोदनं विना ।
मृत्योर्भयंकरं नृत्यमभूद् मासत्रयावधि ॥ १० ॥

मुम्बापुर्यां जना भीताः प्रस्थिताः सर्वतोदिशम् ।
स्वान् प्राणान् रक्षितुं केचित् संप्राप्ताः पुण्यपत्तनम् ॥ ११ ॥

व्याधिर्व्याप्तं तदप्यासीत् तेन मृत्यून्मुखा जनाः ।
बहुसंख्याः प्रतिदिनमनाथाश्च निराश्रयाः ॥ १२ ॥

मूषकाणां निपतनं मरणं च ततः परम् ।
आहुस्तल्लक्षणं जन्तुशास्त्रज्ञास्तद्गदोद्भवे ॥ १३ ॥

त्यागस्तत्सदनस्येष्टो मत्वा यद् विषदूषितम् ।
प्रवृत्तिरुत लोकानां गृहत्यागविरोधिनी ॥ १४ ॥

आदेशमनुसृत्याथ सार्वभौमाधिकारिणः ।
आज्ञां रोगविनाशस्य मुम्बाप्रान्तपतिर्ददौ ॥ १५ ॥

रँडाख्यश्च पुरे पुण्येऽधिकार्येको नियोजितः ।
हिन्दुद्वेष्टेति यस्यासीत् प्रान्तेऽस्मिन् कुप्रसिद्धता ॥ १६ ॥

प्रसारप्रतिबन्धाय रोगस्योन्मूलनाय च ।
उपायाश्चिन्तितास्तेन तज्ज्ञमन्त्रानुसारतः ॥ १७ ॥

गृहेषु स्वच्छताभावो व्याधिवर्धनकारणम् ।
जन्तुनाशविषद्रव्यैर्दूषितस्थानधावनम् ॥ १८ ॥

व्याधिपीडितलोकानामावासे दूरसंस्थिते ।
संप्रेषणं निवासाय निर्मिते चाधिकारिभिः ॥ १९ ॥

विषदूषितभागस्थनिवासपरिवीक्षणम् ।
कर्तुं तेन प्रतिगृहं प्रेषिता आङ्ग्लसैनिकाः ॥ २० ॥

लोकचारानभिज्ञास्तेऽधिकार्याज्ञानुपालकाः ।
मृतमूषकशोधार्थं निवासान् प्राविशंस्तदा ॥ २१ ॥

चिक्षिपुर्गृहवस्तूनि स्वेच्छाचारा इतस्ततः ।
मर्कटा इव चेष्टन्तो धनधान्यविनाशकाः ॥ २२ ॥

देवागारं प्रविविशुः सोपानत्पादसैनिकाः ।
विडम्बनं देवतानां चक्रुरुन्मत्तवृत्तयः ॥ २३ ॥

उन्मत्ता धर्षयांचक्रुः पूजाकर्मरतान् द्विजान् ।
एते रोगिण इत्युक्त्वा निन्यू रुग्णालयं बलात् ॥ २४ ॥

ऊचुः परुषवाक्यानि बभूवुस्ताडनोद्यताः ।
मित्रपुत्रकलत्रादीन् रुदतो वै धृतायुधाः ॥ २५ ॥

दुःशीलैरबलाः साध्व्यो दुःशब्दैरपमानिताः ।
उद्धतास्ताडयामासुः स्वविरुद्धाभिभाषिणः ॥ २६ ॥

न रँडोऽलक्षयद् दोषान् दर्शितानपि सज्जनैः ।
सैनिकानां स्वकीयानां दुराराध्यश्च निष्ठुरः ॥ २७ ॥

मेनिरे दुःसहां पीडां सैनिकोपद्रवोद्भवाम् ।
स्वकीयानां वियोगेन दुःखिताः पुण्यवासिनः ॥ २८ ॥

लेखकैर्वृत्तपत्राणां निन्दितं तीव्रभाषया ।
उन्मत्तवर्तनं सर्वं सैनिकानां दुरात्मनाम् ॥ २९ ॥

केसरी दर्शयामास प्रमादान् सैनिकैः कृतान् ।
न रँडोऽगणयत् किंचिद् गजो मत्तो यथाङ्कुशम् ॥ ३० ॥

व्यसने महति प्राप्ते तिलकेन कृतो महान् ।
व्याधिग्रस्तोपसेवार्थं प्रयत्नः पुण्यपत्तने ॥ ३१ ॥

उद्घाट्य सोऽथ तज्ज्ञानां साहाय्येनौषधालयम् ।
स्वयं तत्रागमद् नित्यं तत्कार्यं पर्यवेक्षितुम् ॥ ३२ ॥

स्वच्छतारोग्यनिर्बन्धांस्तिलकः परिपालयन् ।
उवास परिवारेण सहितो निर्भयो गृहे ॥ ३३ ॥

लक्ष्मीवन्तश्च नेतारो सज्जनाः पदवीधराः ।
वित्तप्राणसुरक्षार्थं त्यक्त्वा ग्रामं बहिर्गताः ॥ ३४ ॥

अवशिष्टास्तदा ग्रामे विपन्ना दुर्बला जनाः ।
दुर्लभा व्यसने तेषां भीषणे मार्गदर्शकाः ॥ ३५ ॥

त्रिमासस्यात्यये व्याधिः क्रमेणोपशमं गतः ।
नगरं पुनरायाता जना ये च बहिर्गताः ॥ ३६ ॥

सैनिका विनिवृत्ताश्च तदा सैन्यनिवेशनम् ।
मृते जीवे यथा याम्यं गच्छन्ति यमकिंकराः ॥ ३७ ॥

संदग्धेऽप्यग्निना रज्जौ वक्रता ह्यवशिष्यते ।
ज्वरे नष्टेऽपि संतापो ववृधे लोकमानसे ॥ ३८ ॥

रँडोपप्लवसंभूतः सैनिकैः सुसमेधितः ।
दुर्वर्तनापमानाभ्यां कुलस्त्रीणां च पीडया ॥ ३९ ॥

तरुणा निश्चयं चक्रुर्गुप्तमार्गानुगामिनः ।
लोकापकारकर्तृभ्यो दातुं दण्डं यथोचितम् ॥ ४० ॥

व्हिक्टोरिया प्रजावन्द्या सम्राज्ञी चक्रवर्तिनी ।
पञ्चषष्टिसमा यावत् सिंहासनमधिष्ठिता ॥ ४१ ॥

राजनिष्ठा प्रजा तस्या षष्ट्यब्दान्तमहोत्सवम् ।
सिंहासनाधिरोहस्य समारेभे समुत्सुका ॥ ४२ ॥

कार्यक्रमे समाविष्टा विषयाश्चित्तवेधकाः ।
बहवस्तेषु चाल्पानां कुर्वे नाम्ना निदर्शनम् ॥ ४३ ॥

दीपोत्सवो देवपूजा प्रार्थना खिस्तमन्दिरे ।
नमाजो मशिदस्थाने सभासंमेलनादयः ॥ ४४ ॥

राजगृहे भोजनार्थं शिष्टानां च निमन्त्रणम् ।
युवतीयुवयुग्मानां क्रीडा नृत्यसमन्विता ॥ ४५ ॥

सम्राज्ञीघोषणापत्रं जनसंघेषु वाचनम् ।
तदर्थबोधकं ग्रामे व्याख्यानमधिकारिणः ॥ ४६ ॥

जनाः केचिदसंतुष्टा राजनिष्ठाप्रदर्शनम् ।
नोचितं भारतीयानां तदाहुर्दास्यलक्षणम् ॥ ४७ ॥

एकपङ्क्तौ संनिविष्टा भोजनायाङ्ग्लहिन्दवः ।
संपद्विपद्विरोधस्य दर्शनायेति तन्मते ॥ ४८ ॥

भोजनार्थं हि संप्राप्ताः पीना आङ्ग्लयुरोपजाः ।
अस्थिपञ्जरवद् भान्ति तन्मध्ये हिन्दवः कृशाः ॥ ४९ ॥

महोत्सवनिमित्तेन पुण्यग्रामे निमन्त्रिताः ।
प्रान्तेशवसतिस्थाने भोजनायाधिकारिणः ॥ ५० ॥

अन्येऽपि सज्जनाः श्रेष्ठाः प्राप्ता ये राजमान्यताम् ।
उपस्थितास्तदा तत्र रात्रावतिथयो मुदा ॥ ५१ ॥

अनूढा युवकाः केचित् स्त्रियः प्रायः सभर्तृकाः ।
सुवेषाः प्रमदाः सर्वाः स्वर्णकुण्डलमण्डिताः ॥ ५२ ॥

यथेच्छं भोजनं कृत्वा युग्मनृत्यप्रहर्षिताः ।
सम्राज्ञ्यायुश्चिन्तनाय स्वादु द्राक्षासवं पपुः ॥ ५३ ॥

राष्ट्रगीतस्य गानेन गतोऽन्तं स महोत्सवः ।
आन्दोलनेन हस्तानां समारोहो विसर्जितः ॥ ५४ ॥

भोजनार्थं च रँडोऽपि राजगृहमुपस्थितः ।
विसर्जिते समारोहे सर्वैरतिथिभिः सह ॥ ५५ ॥

प्रतस्थे निलयं गन्तुं प्रदीप्ताद् नृपसद्मनः ।
निजवाहनमारुह्य बहिर्मार्गे तमोवृतम् ॥ ५६ ॥

दृष्ट्वा स चोदयामास प्रतोदेन तुरङ्गमौ ।
दधाव हययानं तद् मार्गे मारुतरंहसा ॥ ५७ ॥

अचिरेण रथं तत्र युवैका सहसाविशत् ।
प्रास्यत् स चाग्नियन्त्रेण गुलिकां प्राणघातिनीम् ॥ ५८ ॥

रक्तस्रावावलिप्ताङ्गः शक्तिक्षीणो विचेतनः ।
व्यथितस्तत्प्रहारेण रँडोऽभूद् मूर्च्छितो रथे ॥ ५९ ॥

अन्यो जनो रुरोहान्यमनुयान्तं रथं जवात् ।
आयर्स्टश्चाग्नियन्त्रस्य स्फोटेनागाद् यमालयम् ॥ ६० ॥

दूरं शीघ्रं गतौ स्थानाद् युवानावाततायिनौ ।
विललापातिदुःखेनायर्स्टस्य सहचारिणी ॥ ६१ ॥

आकर्ण्यार्तस्वरं तस्या लुईनामागतो जनः ।
विलोक्य मृतमायर्स्टं गतः परमविस्मयम् ॥ ६२ ॥

अचिरेणैव संप्राप्तो रँडस्य हयवाहनम् ।
सोऽपश्यद् मूर्च्छितं रँडं वाहने रक्तलाञ्छितम् ॥ ६३ ॥

समाह्वयत् स्वास्थ्यदूतान् वैद्यान् स्वास्थ्यनिरीक्षकान् ।
निधाय भिन्नरथयोर्जग्मुः सर्वेऽगदालयम् ॥ ६४ ॥

एकादशे दिने सोऽथ रँडो मृत्युवशोऽभवत् ।
मृत्युपूर्वं च लिखितं वचस्तस्य यथाविधि ॥ ६५ ॥

अग्नियन्त्रेण निहतौ द्वावाङ्ग्लावधिकारिणौ ।
वृत्तपत्रे पुण्यपुर्यामिति वार्ता प्रकाशिता ॥ ६६ ॥

विद्युत्पात इवाघात आङ्ग्लानां क्षोभकारकः ।
प्रक्षुब्धस्तत्समाजोऽभूदाङ्ग्लदेशे च भारते ॥ ६७ ॥

टाइम्सादिषु पत्रेषु कृतः कोलाहलो महान् ।
ब्राह्मणाः पुण्यवास्तव्या द्विषन्तीत्याङ्ग्लशासनम् ॥ ६८ ॥

षड्यन्त्रेण विना घोरो न रँडस्य वधोऽभवत् ।
दण्ड्यास्ते दाक्षिणात्या ये विप्रा आङ्ग्लविरोधिनः ॥ ६९ ॥

नित्यं च केसरीपत्रे राज्यदोषविवेचनम् ।
तेन द्वेषोत्पादनं वै संजातं लोकमानसे ॥ ७० ॥

पुणेपुर्यां लँगसंज्ञो जिल्हाधीशः समब्रवीत् ।
अत्र रँड्वधो जातः पापं तत् पुण्यवासिनाम् ॥ ७१ ॥

पौरैः क्षालयितुं कार्यं सहकार्यं विशेषतः ।
शोधाधिकारिभिः साकमपराधिगवेषणे ॥ ७२ ॥

पुरुषं दर्शयेद्यस्तु रँडप्राणापहारिणम् ।
मुद्रा द्वे अयुते तस्मै देया इत्यपि घोषितम् ॥ ७३ ॥

प्रसिद्धिं घोषणा नीता भारते कार्यकारिभिः ।
वृत्तपत्रप्रकाशेन दुन्दुभीनां च वादनैः ॥ ७४ ॥

आसीच्च बुद्धिमानेको ब्रुइनः पुण्यपत्तने ।
अधिकारी चारमुख्यः पटुर्दोषिगवेषणे ॥ ७५ ॥

स रँडायर्स्टयोर्हन्तुः शोधाय विनियोजितः ।
सर्वाधिकारसंयुक्तः प्रान्तमुख्याधिकारिणा ॥ ७६ ॥

लंदने लेखकाः क्रुद्धा अत्याचारस्य वार्तया ।
उग्रदण्डेन कर्तव्यं दमनं पुण्यवासिनाम् ॥ ७७ ॥

राजद्रोहात्मिका वृत्तिर्न क्षन्तव्याधिकारिभिः ।
क्षमामर्हन्ति ते नैव ये निहन्त्यधिकारिणः ॥ ७८ ॥

इत्याजल्पन् स्वपत्रेषु सर्वे भारतशात्रवः ।
क्राफर्डादिशठास्तद्वत् क्रूराः साम्राज्यवादिनः ॥ ७९ ॥

तस्मिन् महोत्सवे रँडः पुण्यग्रामे हतो यदा ।
गोपालो लंदने ह्यासीत् साक्षित्वाय गतः पुरा ॥ ८० ॥

कारणं तत्प्रयाणस्य संक्षेपेण वदाम्यहम् ।
उक्तं पूर्वं पुणेपुर्यां स्थापितैका नवा सभा ॥ ८१ ॥

आसीत् तस्याः कार्यवाहो गोपालः कुशलः सुधीः ।
भारतीयार्थशास्त्रस्याभ्यासको रानडेऽनुगः ॥ ८२ ॥

महासभाकर्णधारैरुच्चैरुक्तं मुहुर्मुहुः ।
आङ्ग्लशासनसूत्रं हि साम्राज्यहितवर्धनम् ॥ ८३ ॥

बहवो विषयाः सन्ति साम्राज्यस्योपयोगिनः ।
प्रतिवर्षं भारतस्यार्थसंकल्पे व्ययस्थले ॥ ८४ ॥

आङ्ग्लराज्ये न तद् द्रव्यं देयं समुचितं भवेत् ।
भारतस्यार्थसंकल्पे तन्निर्देशो निरर्थकः ॥ ८५ ॥

स्वार्थमूलमाङ्ग्लराज्यं न भारतहितप्रदम् ।
व्ययो भारतसंपत्तेः साम्राज्यस्य हिताय च ॥ ८६ ॥

इत्याक्षेपः कृतो लोकैस्तद्याथार्थ्यं निरीक्षितुम् ।
निर्मितं सार्वभौमेन चार्थशास्त्रज्ञमण्डलम् ॥ ८७ ॥

वेल्बीनामार्थशास्त्रज्ञस्तदध्यक्षपदे स्थितः ।
तन्मण्डलस्य नौरोजिः सदस्यपदमाप्तवान् ॥ ८८ ॥

तन्मण्डलं चाजुहाव ज्ञानिनः साक्षिकर्मणे ।
राजभृत्यांश्च नेतॄंश्च राजनीतिविशारदान् ॥ ८९ ॥

युयोजेंग्लंदयात्रायै माधवानुमतेन सा ।
दक्षिणाख्यसभा सुज्ञं गोपालं चार्थपण्डितम् ॥ ९० ॥

गोपालः प्रेषितोऽपूर्वं यशोऽवाप स्वकर्मणि ।
भारतीयमतं तेन सप्रमाणं समर्थितम् ॥ ९१ ॥

प्रशंसितं वै तत्कार्यं मुक्तकण्ठं च भारते ।
भारतस्य विदेशीयैर्मित्रैरपि प्रहर्षितैः ॥ ९२ ॥

तत्साक्षिकर्मणा प्राप्तं गोपालेन महत्तमम् ।
विचाराभ्यासशीलेषु स्थानं नेतृषु भारते ॥ ९३ ॥

कीर्तेः शिखरमारूढो गोपालः सहसापतत् ।
दुर्दैवेनोन्नतस्थानादयशःपङ्कपल्वले ॥ ९४ ॥

पूर्णिमायां विधोर्बिम्बं ग्रस्तं भवति राहुणा ।
अगोचरं नयनयोस्तमःपुञ्जेन संवृतम् ॥ ९५ ॥

गोपालं यानयत् स्वर्गात् तमोयुक्तमधःस्थितम् ।
पातालं वर्णयिष्ये तां घटनां दुःखदायिनीम् ॥ ९६ ॥

वार्ताहरो लंदनस्थो गोपालं समुपागतः ।
अपृच्छत् कारणं तं च वधस्याङ्ग्लाधिकारिणोः ॥ ९७ ॥

ददौ प्रत्युत्तरं तस्मै गोपालः क्षुब्धमानसः ।
सैनिकानां दुराचारैरत्याचारः प्रवर्तितः ॥ ९८ ॥

स्त्रियोऽवमानिताः क्षुद्रैर्गृहस्थाः पीडिता यदा ।
दुष्कृत्यैस्तैरहं मन्ये नष्टो लोकस्य संयमः ॥ ९९ ॥

स्वदेशवृत्तपत्रेषु सैनिकोन्मादवर्णनम् ।
प्रकाशितं हि तत् सर्वं गोपालेनावलोकितम् ॥ १०० ॥

सैनिकेनातिमत्तेन महिलैकावमानिता ।
प्राणानत्यजदित्याह गोपालः पत्रलेखकम् ॥ १०१ ॥

मित्रैर्निवेदितस्तस्मै पुण्यपत्तनवासिभिः ।
उपद्रवः कृतः पुर्यां रँडप्रेषितसैनिकैः ॥ १०२ ॥

तल्लेखकृतविश्वासो गोपालो रँडसैनिकाः ।
दुष्कृत्यकृत इत्याह क्षोभस्योत्पादका अपि ॥ १०३ ॥

तेन प्रवर्धितः क्रोधो हविषा हव्यवाडिव ।
लंदने वृत्तपत्राणां प्रायः साम्राज्यवादिनाम् ॥ १०४ ॥

कृत्वा स्वाङ्गुलिनिर्देशं गोपालस्योत्तरं प्रति ।
हिन्दमन्त्री तदापृच्छत् प्रान्तेशं च तदुत्तरम् ॥ १०५ ॥

गोपालस्य विधानेषु किंचित् सत्यं न विद्यते ।
निर्दोषाः सैनिकाः सर्वे इत्याहुः पुण्यवासिनः ॥ १०६ ॥

प्रान्तेश उत्तरं चैतत् प्रेषयामास मन्त्रिणम् ।
असंदिग्धं सैनिकानां चरितस्य समर्थकम् ॥ १०७ ॥

निर्दोषान् सैनिकान् ज्ञात्वा सर्वे साम्राज्यवादिनः ।
गोपालं गर्हयामासुराङ्ग्लसैनिकनिन्दकम् ॥ १०८ ॥

गोपालस्योक्तयोऽसत्या इत्यवोचन् कुबुद्धयः ।
स्थापितं चाङ्ग्लहत्यायै भारते गुप्तमण्डलम् ॥ १०९ ॥

गोपालो गर्हितः सर्वैरिग्लंदे पत्रलेखकैः ।
प्रतस्थे हिन्दमायातुं जलयानेन दुःखितः ॥ ११० ॥

दोलायिता तरङ्गैर्नौः सिन्धुपृष्ठे यथा सदा ।
तद्वच्च तन्मनःपोत ऊर्ध्वाधःस्थितिमादधे ॥ १११ ॥

आशानिराशयोर्युद्धं चित्तक्षेत्रेऽतिदारुणम् ।
प्रवृत्तं तेन गोपालोऽस्वस्थश्चिन्ताकुलोऽभवत् ॥ ११२ ॥

स्थितायां नावि विश्रान्त्यै प्रविश्यैडनपत्तनम् ।
स लेभे तत्र पत्राणि पठनात् खिन्नतां ययौ ॥ ११३ ॥

स्वपत्रोक्तविधानानां सिद्ध्यर्थं वयमक्षमाः ।
नैवेष्टोऽस्माकमुल्लेख इति त्वां प्रार्थयामहे ॥ ११४ ॥

तात्पर्यमेतद् मित्राणां लेखनस्येति कथ्यते ।
गोपालस्य मनस्तेन नैराश्यतिमिरावृतम् ॥ ११५ ॥

पौरान् विज्ञापयामास तिलकः पुण्यवासिनः ।
आगन्तव्यं भयं त्यक्त्वा 'प्लेग' कालेऽतिपीडितैः ॥ ११६ ॥

रैंडसैनिकदुष्कृत्यवर्णनं क्रियतां च तैः ।
ताडनस्यापमानस्य स्तेयपीडनयोस्तथा ॥ ११७ ॥

पौरैः पीडाकथाः कैश्चिद् निजलेखेषु वर्णिताः ।
प्रदत्तास्तिलकादेशात् केसरीकार्यसद्मनि ॥ ११८ ॥

प्रतस्थे मुम्बईं गन्तुं सलेखस्तिलकस्तदा ।
सप्तविंशदिने मासे ज्यूलियस्स्मरणाङ्किते ॥ ११९ ॥

कुद्धस्य धृतदण्डस्य शासनस्याधिकारिणः ।
मनोगतं तदा ज्ञातुं प्रयाणं तिलकस्य तत् ॥ १२० ॥

केसरीपत्रकारस्य दण्डनायाधुनोद्यतम् ।
प्रशासनमिति ज्ञातं तिलकेन सुनिश्चितम् ॥ १२१ ॥

मातृभूमिं समायान्तं गोपालं नौकयैडनात् ।
प्रतीक्षमाणो मुम्बय्यामवसद् मित्रसद्मनि ॥ १२२ ॥

वृद्धा वदन्ति तिलको गोपालमिलनोत्सुकः ।
जातोऽपि तत्प्रतीपाभूद् विधेरिच्छा बलीयसी ॥ १२३ ॥

सुहृत्सद्मनि तद्रात्रौ भोजनान्तेऽधिकारिभिः ।
न्यायाधीशसमादेशात् तिलकस्तु निरोधितः ॥ १२४ ॥

आर्पयत् प्रार्थनापत्रमधिवक्ता खरेऽभिधः ।
तिलकं बन्धनागाराद् विमुक्तं कर्तुमर्हथ ॥ १२५ ॥

न्यायासनं प्रसिद्धौ तौ रानडेपार्सनाभिधौ ।
आस्थितौ प्रतिकूलं च चक्रतुर्निर्णयं तदा ॥ १२६ ॥

मुम्बापुरीं समायातो गोपालस्तदनन्तरम् ।
ब्रुइनस्तमुपेत्याय जलवाहनमास्थितम् ॥ १२७ ॥

नैव ज्ञातं जनैः किंचिद् रहस्यं वदतोस्तयोः ।
पुण्यग्रामात् क्षमापत्रं गोपालेन प्रकाशितम् ॥ १२८ ॥

क्षमापत्रेण संक्षुब्धो भारतीयमतार्णवः ।
न्यमज्जत् तद्यशोनौका निन्दावीचिप्रताडिता ॥ १२९ ॥

उपस्थितोऽपि गोपालः श्रोतृक्षोभभयात् खलु ।
नाकरोदमरावत्यां व्याख्यानं राष्ट्रसंसदि ॥ १३० ॥

गोपालेन कृतं साक्ष्यं शंसनीयमसंशयम् ।
नेतिवृत्ते सभायास्तु तदुल्लेखोऽपि वर्तते ॥ १३१ ॥

विख्यातः पत्रिकाकर्ता मोतीलालो महाशयः ।
माधवं च तदाप्राक्षीत् प्रश्नमेकं कुतूहलात् ॥ १३२ ॥

कथं प्रवृत्तो गोपालः क्षमापत्रसमर्पणे ।
येनैवाच्छादितं स्वस्य पूर्वसंपादितं यशः ॥ १३३ ॥

मया गोपाल आदिष्टः क्षमापत्रं प्रदीयताम् ।
प्रमाणीकृत्य तद्वाक्यं कृतं मदनुशासनम् ॥ १३४ ॥

उत्तरं माधवस्येदं पत्रिकायां प्रकाशितम् ।
वार्ताहरेण पत्रस्य संप्राप्तस्य सभास्थलम् ॥ १३५ ॥

न जातं बालगोपालमिलनं वै यथेप्सितम् ।
गर्भाशयमृतप्रायस्तिलकस्य मनोरथः ॥ १३६ ॥

हृदयग्रन्थिभेदस्य संशयस्य निराकृतेः ।
सौहार्दस्थापनार्थं किं क्षणस्तिलकवाञ्छितः ॥ १३७ ॥

जाता मृत्युपुरीव पुण्यनगरी ग्रन्थिज्वरव्याधिना
सोन्मादैर्यमकिंकरैरिव जनाः संपीडिताः सैनिकैः ।
रात्रौ राजमहोत्सवस्य ससुहृत् शस्त्रेण रँडो हतः
कंचित् कालमदर्शनं खलु गता गोपालकीर्तिस्तदा ॥ १३८ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे रँडवधो नाम एकविंशस्तरङ्गः ।

## द्वाविंशस्तरङ्गः

धृतव्रतोऽखिले देशे निर्मातुं राष्ट्रजीवनम् ।
न्यमन्त्रयत् सहायत्वे तिलकः शिक्षिताञ् जनान् ॥ १ ॥

नरसिंहः समायातस्तिलकेन निमन्त्रितः ।
शंसितो रघुनाथेन सप्ततारानिवासिना ॥ २ ॥

विधिविद्याध्यापने च मराठापत्रलेखने ।
साहाय्यं क्रियतामेवं तिलकस्तं समादिशत् ॥ ३ ॥

ख्यातो बाबामहाराजस्तिलकस्य सुहृत्तमः ।
पूज्यः सर्वजनस्यासीद् राज्ञां गुरुपदे स्थितः ॥ ४ ॥

तत्कन्यायै विदर्भस्थो बालकृष्णाभिधो वरः ।
कुलशीलवयोरूपैरनुरूपो नियोजितः ॥ ५ ॥

खापर्डेवंशजः ख्यातो गणेशः सर्वभारते ।
विद्यौदार्यविधिज्ञानवक्तृत्वादिविभूषितः ॥ ६ ॥

पितासीद् बालकृष्णस्य श्रीकृष्णश्च पितामहः ।
विवाहकार्यं संपन्नं सानन्दं मङ्गलं शुभम् ॥ ७ ॥

अस्मिन् कार्ये गणेशस्य तिलकस्य च संगतिः ।
जाता वृद्धिं गता शीघ्रं स्नेहग्रन्थिस्तयोर्दृढः ॥ ८ ॥

न योगः केवलं व्यक्त्योरथवा न कुटुम्बयोः ।
स योगः सहकार्यस्य महाराष्ट्रविदर्भयोः ॥ ९ ॥

वासुदेवश्चित्रशालाप्रमुखः सूक्ष्मदृष्टिवान् ।
विश्वासार्हो मन्त्रगुप्तौ तिलकस्य सदा मतः ॥ १० ॥

खाडिल्करः कृष्णनामा केसरीपत्रलेखने ।
तद्वर्षे नवमे मासे तिलकेन नियोजितः ॥ ११ ॥

आसीत् तिलकपक्षीयो महादेवश्च बोडसः ।
दक्षो विधिज्ञो मुम्बय्यां प्रतिपक्षविरोधकः ॥ १२ ॥

परांजपेकुले जातस्तिलकस्य सुहृत्तमः ।
शुशुभे शिवरामो यो ध्येयनिष्ठः स्वतेजसा ॥ १३ ॥

तिलको बोधयामास मोहितानाङ्ग्लमायया ।
तथाज्ञानतमोग्रस्ताञ् जनाञ् जनपदे स्थितान् ॥ १४ ॥

न त्यागेन विना मोक्षः सिद्धान्तो वेदसंमतः ।
अन्यो न विद्यते पन्थाः श्रेयसे देहधारिणाम् ॥ १५ ॥

गीताशास्त्रपुराणेषु त्यागमार्गः प्रशंसितः ।
स्वातन्त्र्योपासकैर्नित्यं कृतं त्यागावलम्बनम् ॥ १६ ॥

कार्यसिद्धिं प्रयत्नेन भवेत् त्यागिजनस्य वै ।
कार्यैकरूपजातस्य योगिनश्चार्पितात्मनः ॥ १७ ॥

व्याख्याने मित्रसंलापे चोपदेशेऽनुयायिनाम् ।
तिलकः कथयामास त्यागे सिद्धिः प्रतिष्ठिता ॥ १८ ॥

शिवछत्रपते राज्यसंस्थापनदिनोत्सवे ।
देवालये विठ्ठलस्य पुण्यग्रामे सभाभवत् ॥ १९ ॥

व्याख्यातुमागतो भानुरितिहासविशारदः ।
सभायास्तिलकोऽध्यक्षो, भानुना प्रतिपादितम् ॥ २० ॥

अफ्झल्वधे न दोषोऽस्ति शिवछत्रपतेः प्रभोः ।
स्वराज्यस्थापकस्यास्य परदास्यविनाशिनः ॥ २१ ॥

चरितं विश्वजेतॄणामनागोरक्तलाञ्छितम् ।
तथापि गौरवं तेषामैतिह्यज्ञैरुदीरितम् ॥ २२ ॥

लोकोत्तराणां वीराणां मापने गुणदोषयोः ।
मानदण्डो न सामान्यो भवेद् योग्यः कथंचन ॥ २३ ॥

भानोर्मतस्य पुष्ट्यर्थं जिन्सीवालेऽभिधो सुधीः ।
चकार भाषणं वाग्मी वर्णयञ् शिवगौरवम् ॥ २४ ॥

तनोति बहुलां लक्ष्मीं हिमांशोर्लक्ष्म सर्वदा ।
किं नेन्दोः किरणग्रामे लक्ष्म कृष्णं निमज्जति ॥ २५ ॥

दोषोऽल्पः शिवभूपस्य लुप्तो गुणसमुच्चये ।
रामदासादिभिः सद्भिः शंसितास्तद्गुणा मुहुः ॥ २६ ॥

तिलकश्चोपसंहारे ततोऽध्यक्षपदस्थितः ।
आह प्रयोजनं सर्वं शिवराजस्य चायुषः ॥ २७ ॥

परदेशादागतानां म्लेच्छानामुग्रशासनात् ।
विमोचनं स्वदेशस्य स्वराज्यस्थापनं तथा ॥ २८ ॥

तत्सिद्ध्यर्थं कृतं सर्वं स्वार्थहीनेन चेतसा ।
निष्काममेव तत् कर्म गीताशास्त्रमतेन वै ॥ २९ ॥

अतिक्रमः कृतो म्लेच्छैर्भारताक्रमणेन हि ।
नासीत् ताम्रपटस्तेषां भारतीयान् प्रशासितुम् ॥ ३० ॥

उत्पाटयेत् पादलग्नं कण्टकैनैव कण्टकम् ।
न्यायेनैतेन भूपेन शत्रुसेनापतिर्हतः ॥ ३१ ॥

चरितं शिवभूपस्य स्फूर्तिदं चाप्यलौकिकम् ।
देवस्य स्तवनं कुर्याद् न देवचरितं चरेत् ॥ ३२ ॥

कृपया शिवभूपस्य देशसेवाव्रताङ्कुरः ।
अभ्युत्थानाय लोकानां हृदयेषु प्ररोहतु ॥ ३३ ॥

संगच्छन्तु संवदन्तु शिवराजमहोत्सवे ।
मतभेदान् विस्मरन्तु दिनेऽस्मिन् सर्वसज्जनाः ॥ ३४ ॥

विख्याते केसरीपत्रे संक्षेपेण प्रकाशितः ।
सभाव्याख्यानवृत्तान्तो भानूतिलकयोस्तदा ॥ ३५ ॥

" उद्‌गाराः शिवभूपस्य " नाम्ना काव्यं प्रकाशितम् ।
चतुर्दशश्लोकमयं केसरीसंज्ञपत्रके ॥ ३६ ॥

आहूतः स्वजनैः स्वर्गं संत्यज्य भुवमाययौ ।
संस्थापकः स्वराज्यस्य शिवछत्रपतिः किल ॥ ३७ ॥

गोब्राह्मणव्यथां दृष्ट्वा स्वजनानां च दुर्दशाम् ।
शोचनीयां स्थितिं चैव दुर्भिक्षामयसंभवाम् ॥ ३८ ॥

सामन्तभूमिपालानामपमानं च दुःसहम् ।
आङ्ग्लानां पक्षपातं च विलोक्य न्यायमन्दिरे ॥ ३९ ॥

दुःखितोऽभूज्जनानाह तत्र सर्वानुपस्थितान् ।
आङ्ग्लेभ्यो मम मित्रेभ्यो नमस्कारो वितीर्यताम् ॥ ४० ॥

दक्षिणा मत्प्रजाः सर्वा युष्मभ्यो ददुराश्रयम् ।
क्रयविक्रयवृत्तिभ्यो मयि सिंहासनस्थिते ॥ ४१ ॥

कार्तज्ञ्येन च स्मृत्वैतत् पालयेयुः प्रजा मम ।
नीतिशास्त्रानुसारेण प्रेम्णा नित्यमपत्यवत् ॥ ४२ ॥

शिवोद्‌गारस्य काव्यस्य सारः संकलितो मया ।
वर्णिता या स्थितिस्तत्र सत्या नैवातिरञ्जिता ॥ ४३ ॥

जूनमासस्य पूर्वार्धे सर्वमेतत् प्रकाशितम् ।
लोकैर्नियुक्तस्तिलकः सदस्यो विधिमण्डले ॥ ४४ ॥

प्रान्ताधिपश्च सँढर्स्टो ददौ संमतिमात्मनः ।
त्रयोविंशे दिने मासे जूनाख्ये तिलकोऽभवत् ॥ ४५ ॥

माननीयः प्रान्तपतेः सहकारी प्रतिष्ठितः ।
पौरैः शिष्टैर्जनैश्चान्यैः संस्थाभिश्चाभिनन्दितः ॥ ४६ ॥

चञ्चला मन्यते प्राज्ञैः कृपा राजाधिकारिणाम् ।
विलोला यादृशी छाया दिनमध्येऽवलोकिता ॥ ४७ ॥

मध्यरात्रे हतो रँडो राज्ञ्युत्सवदिने शुभे ।
आयर्स्टोऽपि वधं नीतः केनापि क्रान्तिकारिणा ॥ ४८ ॥

समुत्पन्ना न शङ्कापि शासनस्याधिकारिषु ।
तिलकस्यापराधस्य लेखव्याख्यानयोस्तदा ॥ ४९ ॥

यावत् तयोर्विपर्यासष्टाइम्सपत्रेविवेकिना ।
न कृतो देशविद्वेष्ट्रा 'जस्टिस्' इत्यभिधावता ॥ ५० ॥

मया निवेदितं पूर्वं निरुद्धस्तिलकः कथम् ।
मुम्बापुर्या समादेशाद् दण्डन्यायाधिकारिणः ॥ ५१ ॥

निरोधनादगस्टस्य चतुर्थेऽह्नि विमोचितः ।
न्यायमूर्तेर्निर्णयेन वद्रुद्दीनस्य सन्मतेः ॥ ५२ ॥

पञ्चमेऽहनि संप्राप्तस्तिलकः पुण्यपत्तनम् ।
अभूद् वाबामहाराजो दुर्धरव्याधिपीडितः ॥ ५३ ॥

उपचारार्थमाहूताश्चिकित्साशास्त्रपारगाः ।
मेकानकीश्च घोले च मोदी च भिषजां वराः ॥ ५४ ॥

न रोगोपशमो जात उपचारैश्च तत्कृतैः ।
प्रियमित्रहितार्थं च तिलकोऽचिन्तयत् तदा ॥ ५५ ॥

आसन्नमरणं मित्रं मृत्युपत्रं विधीयताम् ।
इति विज्ञापयामास महाराजोऽन्वमोदत ॥ ५६ ॥

महाराजमतं ज्ञात्वा तदिच्छापरिपूर्तये ।
स्थावरादिव्यवस्थायै लिखितं मृत्युपत्रकम् ॥ ५७ ॥

चतुरा निःस्पृहा दक्षा मृत्युपत्रे नियोजिताः ।
महाराजेन निर्दिष्टा विश्वस्तास्तद्हितैषिणः ॥ ५८ ॥

निर्बन्धात् प्रियमित्रस्य मृत्युद्वारस्थितस्य च ।
माध्यस्थ्यं तिलकस्तत्र स्वीचकार सुहृत्प्रियः ॥ ५९ ॥

अष्टमेऽह्न्यगस्टस्य महाराजो दिवं गतः ।
अन्तर्वत्नी च तत्पत्नी विधवैकाकिनी गृहे ॥ ६० ॥

गणयित्वा न मित्रार्थं व्यसनं तिलकस्तदा ।
चकार यत् तदभवद् महानर्थस्य कारणम् ॥ ६१ ॥

कथयिष्ये यथाकालं सङ्कटं तत् सविस्तरम् ।
सभारम्भे वर्णयितुमभियोगकथामहम् ॥ ६२ ॥

तिलकस्याभियोगस्य निर्णयाय नियोजितः ।
वङ्गन्यायालयस्याङ्ग्लन्यायवित् स्ट्राचिसंज्ञकः ॥ ६३ ॥

जॉनस्ट्राची पिता तस्य हिन्ददेशे महत् पदम् ।
प्राप साम्राज्यवादी स हिन्दूहितपराङ्मुखः ॥ ६४ ॥

अन्वेषणाय दोषाणां तिलकस्याधिकारिणा ।
विनिश्चितं च साक्ष्यार्थं दिनं सेप्तेम्बरेऽष्टमम् ॥ ६५ ॥

योग्यं प्रत्युत्तरं दातुं भवेदावश्यकं धनम् ।
न्यायालयेऽभिवक्तॄणां शुल्कदानादिकारणात् ॥ ६६ ॥

कालिघाटेऽधिवक्तारौ प्यूगार्थौ लोकविश्रुतौ ।
वव्रिरे तिलकार्थं ते सुहृदो वङ्गवासिनः ॥ ६७ ॥

महाराष्ट्रे विदर्भे च मित्रैः संस्थापितो निधिः ।
तिलकस्याभियोगेऽस्मिन् निर्दोषित्वस्य सिद्धये ॥ ६८ ॥

प्रयेतिरे द्रव्यमाप्तुं नेनेदेशमुखादयः ।
मुम्बय्यां च महाराष्ट्रे विदर्भेष्वपि सज्जनाः ॥ ६९ ॥

विद्यार्थिनो नागपुरे ददुर्द्रव्यं निधिं प्रति ।
दातारः प्रकटा अल्पा गुप्ताश्च बहुसंख्यकाः ॥ ७० ॥

लोकानां तिलके भक्तिर्वृद्धा नागाह्वये पुरे ।
संबभूवुर्द्विगुणिताः केसरीपत्रवाचकाः ॥ ७१ ॥

तिलके पतितस्यास्य सङ्कटस्य प्रतिक्रिया ।
विविधाभूद् भारतेऽस्मिन् नानामतसमाकुले ॥ ७२ ॥

मुद्रणस्य च स्वातन्त्र्यं नष्टप्रायं भवेद् यदि ।
प्रतिकूलो निर्णयस्तु तिलकस्य भविष्यति ॥ ७३ ॥

प्रश्नोऽयं राष्ट्रभाग्यस्य न व्यक्तिसुखदुःखयोः ।
कुरुते शासनाह्वानं तिलको राष्ट्रशर्मणे ॥ ७४ ॥

मोतीलालैः सुविख्यातैः "पत्रिकायां" प्रकाशितम् ।
संप्राप्तं तिलकात् पत्रमागस्टे वा सितम्बरे ॥ ७५ ॥

तिलकाचारसिद्धान्तस्तस्मिन् पत्रे प्रदर्शितः ।
जिज्ञासूनां सुबोद्धव्यं रहस्यं कर्मयोगिनः ॥ ७६ ॥

नासत्यं लिखितं किंचिन्न दोषोऽस्ति मया कृतः ।
क्षमाया नावकाशोऽस्ति दानस्वीकारयोरिह ॥ ७७ ॥

विचारपूर्वं लिखितं न चोक्तमसमञ्जसम् ।
गोपालस्येव मे नास्ति दुर्बला वंशलेखनी ॥ ७८ ॥

उदीरितं यत् तत्त्वज्ञैस्तदेव प्रतिपादितम् ।
सुखबोधाय लोकानां लेखप्रवचनेषु मे ॥ ७९ ॥

ध्रुवं महात्मभिः साकं कारावासः सुखावहः ।
गृहावासोऽपमानेन मानिनामतिदुःसहः ॥ ८० ॥

रँड्वधस्योत्तरे काले दण्डनीतिः प्रवर्तिता ।
भयभीतान् जनान् कर्तुं स्वसामर्थ्यप्रदर्शनात् ॥ ८१ ॥

प्रान्तस्याधिपतेर्जातो हृदये संशयो महान् ।
मतिः कलुषिता तस्य तथा प्रान्ताधिकारिणाम् ॥ ८२ ॥

आङ्ग्लराज्यविनाशाय शस्त्राघातप्रवर्तकम् ।
समुत्पन्नं महाराष्ट्रप्रदेशे गुप्तमण्डलम् ॥ ८३ ॥

आसन् सुशिक्षिताः केचित् संबद्धा मण्डलेन हि ।
प्रोत्साहका मण्डलस्य तन्मते पत्रलेखकाः ॥ ८४ ॥

दुष्कृत्यं मण्डलस्येदं मण्डलप्रेरितो जनः ।
रँडं व्यापादयामास मतं तेषां सुनिश्चितम् ॥ ८५ ॥

निन्दयामास कटुभिर्लॉबो वै पुण्यवासिनः ।
सभायामुक्तिभिः क्रुद्धो वृत्तपत्रप्रकाशकान् ॥ ८६ ॥

अग्रहीत् पुरवासिभ्यो रजतं लक्षसंमितम् ।
प्रान्तेशः स्वास्थ्यरक्षार्थं पुरस्येति समब्रवीत् ॥ ८७ ॥

निरोधिताः संशयेन लेखकाश्च प्रकाशकाः ।
पुणेवैभवपत्रस्य मोदवृत्तप्रतोदयोः ॥ ८८ ॥

विप्रवर्गस्य नेतारौ विख्यातौ पुण्यपत्तने ।
लक्ष्मीपुत्रौ नातुबन्धू क्षात्रक्रीडाभिमानिनौ ॥ ८९ ॥

कृतौ च स्थानबद्धौ तौ प्रान्तेशस्याज्ञया किल ।
आधारतो विधानस्य जीर्णस्योपेक्षितस्य च ॥ ९० ॥

निर्दोषौ प्रतिबद्धौ तावन्यायेनैव सर्वथा ।
ठाणेसाबर्मतीकारागृहयोर्भ्रातरावुभौ ॥ ९१ ॥

अकरोद् ब्रुइनो यत्नमन्वेष्टुं रँडघातकम् ।
स्थितं तदा सुगुप्तं तद् मण्डलमाततायिनाम् ॥ ९२ ॥

स ददर्श बहून् लोकान् पौराञ् जानपदान् स्थितान् ।
बालान्यूनस्तथा वृद्धान् विविधव्यवसायिनः ॥ ९३ ॥

अत्याचारेण राज्यस्योन्मूलनं कर्तुमिच्छताम् ।
न लेभे गुप्तसंस्थाया अस्तित्वस्य निदर्शनम् ॥ ९४ ॥

संदेहो गुप्तसंस्थाया निर्मूलश्चेति तन्मतम् ।
संबन्धो विदुषां तत्र खपुष्पमिव दुर्लभः ॥ ९५ ॥

मृगाम्भांस्यनुधावन्तो न लभन्ते जलं यथा ।
म्रियन्ते पथि च भ्रान्तास्तृषार्ता हरिणादयः ॥ ९६ ॥

रँडस्य प्राणहर्तारमन्वेष्टुं ये नियोजिताः ।
रक्षाधिकारिभिस्तेषां शोचनीया स्थितिस्तथा ॥ ९७ ॥

न दृष्टं मण्डलं कुत्र संशयग्रस्तचित्रितम् ।
घटना च महाराष्ट्रे नोपलब्धाततायिनाम् ॥ ९८ ॥

नातुभ्यां तिलकस्यात्र संबन्धो घातकर्मणि ।
न चासीद् दूरतोऽपीति निर्णयोऽन्वेषिभिः कृतः ॥ ९९ ॥

प्रवर्तितं दण्डचक्रं गुप्तमण्डलसंशयात् ।
संभूतं विफलं त्वासीद् दण्डनीतिप्रवर्तनम् ॥ १०० ॥

ब्रुइनं कथयामास द्रविडो ब्रह्मवंशजः ।
नामगोत्रादि रँडस्य वधकर्तुः सविस्तरम् ॥ १०१ ॥

दामोदरो बाळकृष्णो हरिदासहरेः सुतौ ।
चाफेकर इत्युपाह्वावास्तां तौ प्राणघातकौ ॥ १०२ ॥

राज्ञीराज्यसमारोहरजन्यामधिकारिणोः ।
आदेशश्च प्रदत्तस्तौ निरोद्धुमधिकारिभिः ॥ १०३ ॥

तिलकस्याभियोगस्य नात्वोर्निर्बन्धनस्य च ।
वार्तामाकर्ण्य ब्रुइनं प्राप्तो दामोदरः स्वयम् ॥ १०४ ॥

अख्यात् सविस्तरं वृत्तं रँडायर्स्टवधस्य सः ।
न्यायाधीशस्य पुरतस्तदा शपथपूर्वकम् ॥ १०५ ॥

वधे रँडस्य संबन्धस्तिलकस्य न विद्यते ।
इति ज्ञातं शासनस्य रक्षायोगाधिकारिभिः ॥ १०६ ॥

सप्टेंबरस्य चारम्भे जातं शङ्कानिवारणम् ।
समाप्तिमगमद् वादो राज्ञ्याश्च तिलकस्य च ॥ १०७ ॥

तिलकस्याभियोगस्य स्तब्धीकर्तुं प्रचालनम् ।
न विचारः कृतः कोऽपि शासनस्य च मन्त्रिभिः ॥ १०८ ॥

सप्टेंबरस्य चाष्टम्यां श्रवणं तस्य निश्चितम् ।
कालापहारः क्रियतामत्रेति ब्रुङ्नोऽवदत् ॥ १०९ ॥

पूर्वार्धापेक्षया श्रेयानुत्तरार्धो भवेत् खलु ।
प्राचार्यो जिनसीवाले प्राहेदं संमतं मम ॥ ११० ॥

प्रातिकूल्याद् ग्रहाणां च पूर्वार्धो न हितप्रदः ।
अनुकूला तु बहुश उत्तरार्धे ग्रहस्थितिः ॥ १११ ॥

उपकृतोऽहमित्याह तिलको वां सदिच्छया ।
अहं मन्ये विलम्बेन हितं मे न भविष्याति ॥ ११२ ॥

अवष्टम्भोऽभियोगस्य क्रियते नाधिकारिभिः ।
मत्संबन्धे त्वसिद्धेऽपि वधयोरधिकारिणोः ॥ ११३ ॥

नखैः केसरिणस्तीव्रैरधिकारिगजा मुहुः ।
विद्राविताश्च द्रुह्यन्ति " केसरी " पालकाय ते ॥ ११४ ॥

तेषां हृदयसंतोषो मम क्लेशैर्न चान्यथा ।
तस्मात् कार्यविलम्बेन न लाभो दृश्यते मया ॥ ११५ ॥

प्यूगार्थावधिवक्तारौ वृतौ वङ्गहितैषिभिः ।
समाप्य मम कार्यं तौ स्वदेशं गन्तुमिच्छतः ॥ ११६ ॥

तत्प्रयाणप्रतीकूलो विलम्बश्चेद् भवेद् यदि ।
गच्छतां वै स्वदेशं तौ कार्यं संत्यज्य मे तदा ॥ ११७ ॥

मम कार्ये भवेद् विघ्नश्चासंतुष्टा हितैषिणः ।
विलम्बस्य विचारोऽयं न मया हि प्रशस्यते ॥ ११८ ॥

समारभत मुम्बय्यां स्ट्रॅचिर्न्यायासने स्थितः ।
अन्वेषणं च दोषाणां सम्यक् तिलकवाळयोः ॥ ११९ ॥

अधिवक्तेत्युपस्थित्यै मुख्यास्ते न्यायमूर्तयः।
एकस्यैव प्युसंज्ञस्य मुम्बय्याः संमतिं ददुः॥ १२०॥

दोषिणौ बाळतिलकौ सम्राज्ञी चाभियोगिनी।
मुम्बई स्ट्रॅचिरानीतो न्यायार्थं वङ्गदेशतः॥ १२१॥

न्यायपीठस्थिताः श्रेष्ठा आसन् मान्याश्च निःस्पृहाः।
निपुणा न्यायकार्येषु मुम्बय्यां विधिपारगाः॥ १२२॥

किमर्थं कालिकास्थानादाहूतो न्यायकर्मणे।
न जानाति जनः सम्यङ् न्यायाधीशोऽधिकारिणा॥ १२३॥

भाषां मराठीं लेखानां व्याख्यानस्यापि सर्वथा।
आक्षिप्तानां न जानन्ति स्थिता न्यायासने नराः॥ १२४॥

भाषाज्ञानं विना भाष्यं कुर्वन्ति न्यायमूर्तयः।
अन्धा रूपं प्रशंसन्ति बधिरा वा नु गायनम्॥ १२५॥

शासनेन वृतो लँगो योऽधिवक्तृशिरोमणिः।
मॅक्फर्सनस्ट्रँगमनावास्तां द्वौ सहकारिणौ॥ १२६॥

प्रवादी वाधिवक्ता वा नास्ति बाळस्य दोषिणः।
साहाय्यको दावरः प्योर्हिताय तिलकस्य च॥ १२७॥

प्युसंनिधौ स्थितो गार्थः प्रेक्षको न्यायमन्दिरे।
द्रष्टुकामैर्जनैः पूर्णं न्यायस्थानमभूत् तदा॥ १२८॥

न्यायाधीशाङ्कितौ जातौ प्रथमं दोषिणावुभौ।
पुरतो न्यायपीठस्य दोषिणां पञ्जरे स्थितौ॥ १२९॥

पत्रिकां वाचयामास दोषाणां न्यायलेखकः।
उभाभ्यामेव दोषिभ्यां न्यायाधीशप्रचोदितः॥ १३०॥

प्रकाशनेन प्रान्तेऽस्मिन् राजद्रोहाभिसंज्ञकः।
केसरीपत्रलेखानामपराधस्त्वया कृतः॥ १३१॥

निदर्शिताः पत्रिकायां लेखानां च सविस्तरम् ।
विषयाणां नामपूर्वं दिनस्थानकदम्बकाः ।। १३२ ।।

श्रुत्वा च पत्रिकाप्रोक्तान् दोषान् तिलककेशवौ ।
प्रत्येकोऽहं न दोषीति ददौ प्रत्युत्तरं पृथक् ।। १३३ ।।

मध्यस्थानां न्यायविदां जातं निर्वाचनं ततः ।
उपस्थिता जनाः शिष्टा आहूता न्यायमूर्तिना ।। १३४ ।।

आसन्नष्टौ पंचजन्या विशेषायाः सभासदः ।
ससूनपोर्टरप्रॉक्टर्बूलकुम्बाश्च फिप्सनः ।। १३५ ।।

एते पञ्च युरोपीया आसन् हिंदजनास्त्रयः ।
आनंदरावबाबाजीपेस्तन्जीसंज्ञकाश्च ते ।। १३६ ।।

पंचजन्या विशेषायास्तालिकायां प्रतिष्ठिताः ।
बहुसंख्या युरोपीया अत्यल्पा हिंदवासिनः ।। १३७ ।।

न हिंदजनदोषस्य निर्णयाय हितावहा ।
युरोपीयनभूयिष्ठा विशेषा पञ्चसंहतिः ।। १३८ ।।

व्याख्यानोपक्रमे तत्र लँगः संक्षेपतो ददौ ।
मध्यस्थानां सुबोधाय राजद्रोहस्य लक्षणम् ।। १३९ ।।

अंशतो वाचयामास कोमर्पेथ्रामनिर्णयम् ।
राज्ञी द्वन्द्वी वङ्गवासीत्यभियोगे प्रकाशितम् ।। १४० ।।

प्रीतेर्विरुद्धो भावश्च द्वेषशब्देन दर्शितः ।
अर्थोऽप्यप्रीतिशब्दस्य व्याख्यातो न्यायमूर्तिना ।। १४१ ।।

अप्रीतिश्चासंमतिश्च न समानार्थवाचकौ ।
भिन्नार्थबोधकौ शब्दौ भिन्नवृत्तिनिदर्शकौ ।। १४२ ।।

हिंददण्डविधानेन व्याख्यानं यत् कृतं च तत् ।
प्रमाणमिति विज्ञेयं राजद्रोहस्य निर्णये ।। १४३ ।।

शिवजन्मोत्सवो योग्य आक्षेपार्हो न तत्त्वतः ।
अश्लाघ्यस्तु कृतो यत्नो भानुना तिलकेन च ॥ १४४ ॥

उत्पादयितुमप्रीतिमाङ्ग्लराज्यस्य शासने ।
प्लेगव्यवस्थाक्लिष्टेषु पुण्यपत्तनवासिषु ॥ १४५ ॥

आङ्ग्लराज्यव्यवस्थायां दोषा एकत्र वर्णिताः ।
"शिवस्योद्गार" काव्ये च विद्वेषोत्पत्तिहेतुना ॥ १४६ ॥

अफ्झल्वधस्य चर्चाया हेतुः सुस्पष्ट एव च ।
उद्दीपनं तु भावस्य म्लेच्छराज्यविरोधिनः ॥ १४७ ॥

अभिप्रेता जना आङ्ग्ला म्लेच्छशब्देन वाग्मिना ।
हतावायर्स्टरँडौ तौ तस्मात् सप्तदिनावधौ ॥ १४८ ॥

क्षोभिताः केसरीलेखैराङ्ग्लयोः प्राणघातकाः ।
प्रमाणं नास्ति तत्सिद्ध्यै लँगः सुस्पष्टमब्रवीत् ॥ १४९ ॥

मध्यस्था लोकनीतिज्ञा संविचार्य परिस्थितिम् ।
परिणामस्यानुमाने स्वतन्त्रा इत्युवाच सः ॥ १५० ॥

न विधानं शास्त्रशुद्धं लँगोक्तं मन्यते मया ।
विषयो नानुमानस्य प्रमाणरहितं च यत् ॥ १५१ ॥

अधिष्ठानं विना तर्कोऽसमर्थः सत्यशोधने ।
आक्षेपार्हो वधोल्लेखः कृतस्तेन स्वभाषणे ॥ १५२ ॥

अन्यैस्तु लिखितान् लेखान् स लँगोऽवाचयद् यदा ।
राजद्रोहित्वसिद्ध्यर्थं केसरीचालकस्य च ॥ १५३ ॥

दोषिणो हेतुसिद्ध्यर्थमग्राह्यं चान्यलेखनम् ।
अयोग्यः प्युकृताक्षेप इति स्ट्रॅचिर्मतं ददौ ॥ १५४ ॥

आदौ मिर्झाअलिः साक्षी अभियोक्तृपुरस्कृतः ।
आङ्ग्लभाषानुवादी यः शासनस्य च सेवकः ॥ १५५ ॥

स्वनामादिकमुच्चार्य कृत्वा शपथमब्रवीत् ।
पुरतः स्थापये पत्रमहं प्रान्तपतेरिदम् ॥ १५६ ॥

दृष्ट्वा पत्रमुवाच प्युर्न्यायकार्यं निरर्थकम् ।
पत्रमेतत् सदोषत्वाद् राजानुज्ञा कथं भवेत् ॥ १५७ ॥

राजद्रोहादिदोषाणामन्वेषणसमर्थता ।
संप्राप्यते न्यायकर्त्रा राज्याधीशकृताज्ञया ॥ १५८ ॥

अस्मिन् पत्रे न निर्देशो लेखकालस्य कुत्रचित् ।
बोधो नाक्षिप्तलेखानां पत्रेणानेन संभवेत् ॥ १५९ ॥

निर्देशोऽत्र निबन्धानामभियोगाय वर्तते ।
न स व्याप्नोति कवितां वृत्तपत्रे प्रकाशिताम् ॥ १६० ॥

दोषिणो रोधनादेशाद् यज्जातं न्यायमन्दिरे ।
अवैधमधिकारस्याभावादिति जगाद सः ॥ १६१ ॥

मूलगाम्ययमाक्षेपो न्यायमूर्तेर्न संमतः ।
नास्त्येव लिखिताज्ञाया निर्बन्धो दण्डनक्रमे ॥ १६२ ॥

आज्ञापत्रस्थदोषेण नाभियोगो विनश्यति ।
परिहार्यः स मन्तव्य इति न्यायविदां मतम् ॥ १६३ ॥

निवेदनेऽलिबेगस्य दोषान् भाषान्तरस्थितान् ।
व्यक्तीकर्तुं प्रतिप्रश्नानपृच्छत् प्युमहाशयः ॥ १६४ ॥

नेच्छामि विस्तरं कर्तुं तत्प्रश्नोत्तरयोरिह ।
अर्थेष्वाक्षिप्तलेखानामुत्पन्ना संशयस्थितिः ॥ १६५ ॥

लेखव्याख्यानवाक्यानामाक्षिप्तानां विवेचनम् ।
चक्रे व्याकरणाधारं तिलकः स्वनिवेदने ॥ १६६ ॥

मोगलः शिवकालीनो म्लेच्छशब्दस्य वाचकः ।
न तच्छब्देन ताम्राणामुल्लेखस्तत्र संभवेत् ॥ १६७ ॥

अन्यायपरिहारार्थं यतध्वमिति सूचना ।
पद्ये कृता स्पष्टशब्दैः 'दाद लावोनि घ्या' इति ॥ १६८ ॥

'दाद' शब्दस्तु भाषायामृजुमार्गनिदर्शकः ।
अत्याचारस्य या शङ्का सा भाषाज्ञानसंभवा ॥ १६९ ॥

'अस्' धातोरकरणेऽर्थे 'नस्' धातुः संप्रयुज्यते ।
'नाही'ति त्रिषु कालेषु तस्य चास्त्येकरूपता ॥ १७० ॥

अभियोक्तृविधानानां खण्डनाय प्रदर्शिताः ।
बहवः केसरीपत्रलेखा ग्रन्थास्तथैव च ॥ १७१ ॥

प्लेगग्रस्तोपचारार्थं प्रयत्नो दोषिणा कृतः ।
वर्णितः साक्षिणा सर्वैः पुराणीकाख्यशास्त्रिणा ॥ १७२ ॥

पञ्चानां साक्षिणां साक्ष्ये जाते तिलकभाषणम् ।
लिखित्वा न्यायमूर्तिस्तत् साक्षिकार्यं समापयत् ॥ १७३ ॥

न्यायमूर्तिः स्वयं चाह भाषाकोविदसाक्षिणम् ।
विचारो मयि संभूत आनेतुं न्यायमन्दिरम् ॥ १७४ ॥

अदातामधिवक्तारौ पक्षयोरुभयोरपि ।
संमतिं तद्विचारस्य सत्यान्वेषणहेतुना ॥ १७५ ॥

मुसल्मानेतरं तज्ज्ञमानयेदित्यसूचयत् ।
प्युस्तं समवदत् स्ट्रॅचिरायायाद् निःस्पृहो जनः ॥ १७६ ॥

विचारस्यैव विषयो निर्णयो न मया कृतः ।
कथयिष्ये निर्णयं श्व इत्युक्त्वा स्वगृहं ययौ ॥ १७७ ॥

अथाब्रवीद् न्यायमूर्तिरन्येद्युर्न्यायमन्दिरे ।
श्रोतुं तज्ज्ञस्य साक्षित्वं नाहं पश्यामि कारणम् ॥ १७८ ॥

आकर्ण्य विस्मिताः सर्वे न्यायाधीशस्य तद्वचः ।
एकरात्रे कथं जातं तद्बुद्धेः परिवर्तनम् ॥ १७९ ॥

उद्भूता हृदये शङ्का लोकानां निर्णये तदा ।
न्यायाधीशस्य चाञ्चल्यादभियोगस्य चान्तिमे ॥ १८० ॥

सूर्यप्रभस्य बालस्य केचिदाहुर्विशङ्किनः ।
उग्रग्रहेण ग्रासाय राहुणा निहितं पदम् ॥ १८१ ॥

प्रशासनस्याधिवक्ता लँगः पुष्ट्यर्थमब्रवीत् ।
द्विरुक्तं प्रायशस्तेन संप्रोक्तं यदुपक्रमे ॥ १८२ ॥

'शिवस्योद्गार'काव्यस्य श्लोकार्थो विशदीकृतः ।
अजानता मराठीं हि लँगेन स्वविवेचने ॥ १८३ ॥

पूर्वग्रहाद् दूषिता धीर्नोपयुक्तार्थनिर्णये ।
निष्णाता शब्दमीमांसासाहित्येष्वपि सर्वथा ॥ १८४ ॥

रम्यात्युक्तिः सदा काव्ये क्षम्यैव रसिकैर्मता ।
व्याजोक्तिरथ वक्रोक्तिर्व्यङ्ग्योक्तिर्हृदयंगमा ॥ १८५ ॥

लँगस्य वै 'शिवोद्गार' व्याख्यानं च प्रजल्पनम् ।
भाषाज्ञानविहीनस्य तिलकद्रोहदूषितम् ॥ १८६ ॥

'शिवोद्गारस्य' काव्यस्य तिलको नास्ति लेखकः ।
'भवानी तलवारे' ति काव्याधस्ताद् निदर्शितम् ॥ १८७ ॥

तदर्थं विशदीकर्तुं कल्पना योपयोजिता ।
लँगेन दुष्टतर्का सा निराधारा निरङ्कुशा ॥ १८८ ॥

भवानी देवता चण्डी विश्वसंहारकारिणी ।
खड्गश्चैवायुधं तस्या जगत्संहारकर्मणि ॥ १८९ ॥

कृतस्तन्नामनिर्देशो काव्यस्यान्ते विशेषतः ।
आङ्ग्लराज्यस्य नाशाय कर्तुं सद्यः प्रचोदनम् ॥ १९० ॥

समर्थनेऽस्य सर्वस्य हठादर्थविपर्ययः ।
कृतः शब्दस्य लँगेन विलुप्तन्यायबुद्धिना ॥ १९१ ॥

प्युना प्रत्युत्तरं दत्तं तस्मै युक्तं स्वभाषणे ।
शिवभूपस्य खड्गस्य भवानीत्यभिधाभवत् ॥ १९२ ॥

ज्ञातमेवास्ति भूपस्य न गतिर्लिपिलेखने ।
पत्रेषु स्वाक्षरीस्थाने खड्गचिह्नं चकार सः ॥ १९३ ॥

निरक्षराणां सर्वत्र संप्रदायोऽस्ति भारते ।
क्षत्रस्य दर्शकः खड्गः कृषिकस्य हलस्तथा ॥ १९४ ॥

सभर्तृकाया वलयं तुला वैश्यजनस्य च ।
इमामन्वसरद् रूढां प्रथां काव्येऽत्र लेखकः ॥ १९५ ॥

निरक्षरत्वाद् भूपस्य खड्गचिह्नं निदर्शितम् ।
अधस्तादिह काव्यस्य कविना नामपूर्वकम् ॥ १९६ ॥

काव्येऽस्मिन्नन्तिमे श्लोके संदेशो लेखकेन यः ।
प्रेषितश्चाङ्ग्ललोकेभ्यः कव्युद्देशप्रकाशकः ॥ १९७ ॥

आङ्ग्लाः संबोधितास्तत्र मित्राणीति महादरात् ।
मित्रापदेशहेतुत्वाद् लँगभाष्यं निरर्थकम् ॥ १९८ ॥

हेत्वाभासैश्च संपूर्णं विपर्यासैश्च संकुलम् ।
न्यायतत्त्वविरुद्धं तज्जातं लँगस्य भाषणम् ॥ १९९ ॥

प्युना तदुत्तरं दत्तं शास्त्रशुद्धं सयुक्तिकम् ।
कृत्वा लँगविधानानां खण्डनं निजभाषणे ॥ २०० ॥

अफ्झल्खानवधस्यास्ति घटना शिवभूपतेः ।
चरिते च स्वराज्यस्य स्थापने च महत्तमा ॥ २०१ ॥

स्वाभाविकी तदा चर्चा शिवजन्मोत्सवेऽभवत् ।
विदुषां हनने तस्य भीषणे गुणदोषयोः ॥ २०२ ॥

उपयुक्ता दण्डनीतिः सामान्यानां विनिर्णये ।
गीतानीतिः प्रमाणं स्याल्लोकोत्तरविनिर्णये ॥ २०३ ॥

हस्तपादप्रमाणेन मीयते व्यवहारभूः ।
हिमालयो मानदण्डः पृथिव्या मापने स्थितः ॥ २०४ ॥

सौरवर्षप्रमाणेन स्वकालो गण्यते नरैः ।
स तु नक्षत्रताराणां तेजोवर्षैः प्रमीयते ॥ २०५ ॥

न समानो मानदण्डः सर्वत्रैव प्रयुज्यते ।
परिस्थित्यनुरूपेण प्रमाणे भिन्नता भवेत् ॥ २०६ ॥

शिवकृत्यचिकित्सायां गीताधर्मप्रमाणता ।
आसक्तिरहितं कर्म नैव दोषाय कल्पते ॥ २०७ ॥

सूत्रं प्रवचनस्येदं तिलकस्य महोत्सवे ।
सामान्यनियमव्याप्तेर्मर्यादा तेन दर्शिता ॥ २०८ ॥

भानोश्च भाषणस्यापि भाषान्तरविपर्ययः ।
जातस्तदर्थः संदिग्ध इति प्रोक्तं प्युना मुहुः ॥ २०९ ॥

न भानुर्दोषिणानीतः साक्षीति न्यायमन्दिरे ।
अलीवेगकृतार्थस्य तस्मात् प्रामाण्यमेव च ॥ २१० ॥

कर्तव्यमभियोक्तुस्तत् तत् तु नैवास्ति दोषिणः ।
प्रत्युत्तरेऽवदत् स्पष्टं प्युः साधारं प्रमाणवित् ॥ २११ ॥

प्लेगस्योपशमस्यार्थे तिलकेन कृतं श्रमम् ।
साहाय्यं च तदा दत्तं वर्णयित्वा प्युरब्रवीत् ॥ २१२ ॥

तिलकाचारतः सर्वं लँगोक्तं च विसंगतम् ।
मध्यस्था नैव गृह्णीयुः प्रमाणमिति तद्वचः ॥ २१३ ॥

दर्शितश्चादरस्तेन सम्राज्ञीं प्रति लेखनैः ।
विस्तृतैः केसरीपत्रे तस्याः साम्राज्यवर्णनैः ॥ २१४ ॥

टीका राज्यव्यवस्थाया राजनिष्ठा सुसंगता ।
लेखास्तेनैव लँगेन सामग्र्येण विवेचिताः ॥ २१५ ॥

इतस्ततोऽग्रहील्लॅंगो वाक्यान्यप्रस्तुतानि च ।
संभ्रमोत्पादनं कर्तुं पंचजन्याः समुद्यतः ॥ २१६ ॥

आक्षिप्तकाव्यमुख्यस्य विचारस्य निदर्शिता ।
प्युना क्रमिकग्रन्थस्य विचारेण सहैकता ॥ २१७ ॥

प्रशासननियुक्तस्य पुस्तकस्यापि लेखकः ।
सुविख्यात ओक इति चकार शिववर्णनम् ॥ २१८ ॥

तस्मिन् यदुक्तमासीद्धि तदेव तिलकोऽवदत् ।
प्रथमो यदि निर्दोषो द्वितीयो नान्यथा भवेत् ॥ २१९ ॥

समानार्थाः स्थिताः पुष्पवाटिकानाम्नि पुस्तके ।
केचित् संपठिताः श्लोकाः स्वविधानस्य सिद्धये ॥ २२० ॥

स मध्यस्थान् समुद्दिश्य प्युर्वादपटुरब्रवीत् ।
बोनापार्टे यथा फ्रेंचा वालेसं स्कॉटभूमिजाः ॥ २२१ ॥

महाराष्ट्रे जनास्तद्वत् प्रशंसन्ति शिवप्रभुम् ।
विरोधो देशभक्तेर्न सम्राज्ञीनिष्ठया सह ॥ २२२ ॥

न दोषस्तिलकेनात्र राजद्रोहात्मकः कृतः ।
असिद्धानि विधानानि त्वभियोक्तृकृतानि च ॥ २२३ ॥

न दोषस्तिलकस्येति प्रदातुं मतमर्हथ ।
यूयं सर्वे पंचजनाः न्यायदानचिकीर्षवः ॥ २२४ ॥

समापयद् भाषणं प्युः सायं सार्धत्रिवादने ।
कृतो विरामः कार्यस्य तदैव न्यायमूर्तिना ॥ २२५ ॥

भौमे प्रातः समारेभे न्यायमूर्तिः स्वभाषणम् ।
आलोचयद् विस्तरेण साक्षिलेख्यसमाशयम् ॥ २२६ ॥

शिवोत्सवेतिहासं च भाषणे स्वे न्यवेदयत् ।
अवदत् तत्त्वदृष्ट्यासौ न दोषार्हः शिवोत्सवः ॥ २२७ ॥

दण्डस्मृतौ भारतस्य यथा व्याख्योपलभ्यते ।
राजद्रोहापराधस्य सापवादस्य सोऽब्रवीत् ॥ २२८ ॥

कृतं निरूपणं तेन तदर्थस्य विशेषतः ।
अप्रीतिर्जायते येन विधिस्थापितशासने ॥ २२९ ॥

वाक्यं वाक्यसमूहो वा राजद्रोहात्मको भवेत् ।
तस्य वक्ता लेखकश्च दण्डनीय इति स्थितिः ॥ २३० ॥

प्रीतेरभाव एव स्यादप्रीतेर्मुख्यलक्षणम् ।
राजद्रोहो भवेत् तस्मादिति न्यायविदां मतम् ॥ २३१ ॥

आक्षिप्तकाव्यलेखानां को हेतुः प्रमुखोऽभवत् ।
लेखकस्येति मध्यस्था विजानीयुर्यथास्थिति ॥ २३२ ॥

यदा बभूवुः संतप्तास्तदा काव्यं प्रकाशितम् ।
न्यायकर्मणि गौरेषु पक्षपातित्वमेव च ॥ २३३ ॥

राजानो निर्बला एते बुद्धिक्रीडापटे यथा ।
आङ्ग्लशासनदोषाणामेतेषामिह वर्णनम् ॥ २३४ ॥

तदभावात् प्रशस्यत्वं शिवराज्यस्य मुख्यतः ।
आङ्ग्लराज्याद् दर्शयितुं युगपद् वर्णनं कृतम् ॥ २३५ ॥

षण्ढा एवेति शब्देन राजानो ये विनिन्दिताः ।
अपमानं च नारीणां सहमानाः परैः कृतम् ॥ २३६ ॥

ग्रन्थिज्वरोपशान्त्यर्थमुपाया येऽवलम्बिताः ।
तैः सर्वे पीडिता आसन् पुण्यपत्तनवासिनः ॥ २३७ ॥

यदा बभूवुः संतप्तास्तदा काव्यं प्रकाशितम् ।
तदैवैतत् प्रवचनं कृतं शिवमहोत्सवे ॥ २३८ ॥

हेतोर्निर्धारणे वक्तुर्मध्यस्थो हि विचारयेत् ।
केन कस्य कदा कस्मै किं प्रोक्तमिति सर्वथा ॥ २३९ ॥

अफ्ज़ल्वधस्य चर्चायामुद्देशस्तत्त्वशोधनम् ।
लोकक्षोभोद्दीपनं वा मध्यस्था निर्णये क्षमाः ॥ २४० ॥

निषेधो वा विरोधो वा प्रशासनकृतस्य यः ।
कृतः कटुतमैः शब्दैर्न स दोषास्पदं भवेत् ॥ २४१ ॥

विधानस्थापिते राज्येऽप्रीतिर्नृणां यथा भवेत् ।
राजद्रोहात्मिका ज्ञेया टीका पंचजनैश्च सा ॥ २४२ ॥

धेनुहत्या ब्रह्मदण्डो दैन्यं दुर्भिक्षमेव च ।
सर्वे तेऽथ विचारार्थं गताः स्थानान्तरं तदा ॥ २४३ ॥

अवोचत् प्युः सविनयं स्ट्रॅचिं तं न्यायरूपिणम् ।
न्यायासनविमर्शार्थं सन्तु प्रश्ना अधःस्थिताः ॥ २४४ ॥

वैधानुज्ञा न वा वैधा साभियोगप्रवर्तने ।
तद्वैगुण्यं निराकर्तुमुपायो विद्यते न वा ॥ २४५ ॥

प्रीतेरभावो ह्यप्रीतेर्या व्याख्या भवता कृता ।
चिन्त्यैव सा भवेदत्र, सन्ति प्रश्ना अमी त्रयः ॥ २४६ ॥

प्रश्नानां स्थापनस्याहं न पश्याम्युपयोगिताम् ।
तिलकस्याधिवक्तारं न्यायमूर्तिस्तदावदत् ॥ २४७ ॥

निवेदितं मतं पंचजनैर्नीतिसमञ्जसैः ।
केशवो दोषरहित इति सर्वे मतं ददुः ॥ २४८ ॥

दोषित्वे तिलकस्यासीत् परं तेषां मतद्वयम् ।
अवदन् षट् सदोषोऽयं निर्दोषोऽयमिति त्रयः ॥ २४९ ॥

मतमत्र बहूनां यदाह तत् संमतं मम ।
स्ट्रॅचिः पप्रच्छ तिलकं वक्तुकामोऽस्ति किं भवान् ॥ २५० ॥

तिलको धैर्यमेरुस्तमोमित्येवोत्तरं ददौ ।
श्रुत्वापि निर्णयं तेषां निर्दोषोऽस्मि वदाम्यहम् ॥ २५१ ॥

भाषाज्ञानादक्षमास्ते ज्ञातुं लेखाशयं स्वयम् ।
पंचजन्या मतं मन्ये भाषाज्ञानसमुत्थितम् ।। २५२ ।।

न निर्मित्यै द्वेषबुद्धेर्लेखा वा भाषणं मम ।
आङ्ग्लराज्ये भारतस्थे जगाद तिलकस्तदा ।। २५३ ।।

आक्षिप्तानां हि लेखानां द्वेषोत्पत्तिश्च नाभवत् ।
हेतुर्वा परिणामो वा निःसंदेहं वदाम्यहम् ।। २५४ ।।

न्यायाधिपतिना बाळो निर्दोष इति मोचितः ।
सार्धोब्दस्तिलकस्योक्तः कारावासश्च सश्रमः ।। २५५ ।।

एवं न्यवेदयत् स्ट्रॅचिर्निर्णयं दुःखदायकम् ।
मुद्रणस्य हतं तेन स्वातन्त्र्यं न्यायमूर्तिना ।। २५६ ।।

ततोऽधिकारिभिर्नीता तिलको बन्धनगृहम् ।
प्राकारवेष्टितं तद् वै घोरं भायखळास्थितम् ।। २५७ ।।

दिशो रजःस्वलाः सर्वा अस्तं यातो दिवाकरः ।
व्याप्नोद् विश्वं बहिर्यातं तमोऽन्धं स्वगृहात् तदा ।। २५८ ।।

मुम्बईन्यायपीठस्था अनुज्ञां न त्रिमूर्तयः ।
दण्डिताय ददुर्गन्तुं न्यायार्थं प्रीव्हिकौन्सिलम् ।। २५९ ।।

तिलकस्य हिते रक्ता प्रयाताः प्रीव्हिकौन्सिलम् ।
तथापि न्यायसंप्राप्त्यै लंदनस्थं सुविश्रुतम् ।। २६० ।।

आस्कुवीथः सुप्रसिद्धो राजकार्यधुरंधरः ।
तिलकस्याधिवक्तेति तन्मित्रैश्च नियोजितः ।। २६१ ।।

उमेशचन्द्रः ख्यातश्च दाजीसंज्ञः खरेऽभिधः ।
तत्साहाय्यपरावास्तां न्यायकार्यालये तदा ।। २६२ ।।

नवोत्तरदशम्यां तत् तारिकायां नवेंबरे ।
तिलकप्रार्थनापत्रं चर्चितं न्यायमन्दिरे ।। २६३ ।।

हाल्स्बरिश्चैन्सलरो मुख्यन्यायासनस्थितः ।
परिवृतस्त्रिभिः सुज्ञैर्न्यायाधीशपदस्थितैः ॥ २६४ ॥

हावहौसो न्यायवेत्ता डेन्हिक्रौचाभिधौ तथा ।
प्रवीणा विधिविद्यायां निपुणा न्यायकर्मणि ॥ २६५ ॥

प्रारब्धस्यास्कुवीथेन प्रार्थिपत्रस्य पुष्टिदम् ।
भाषणस्यांशमात्रं तु शुश्रुवुर्न्यायमूर्तयः ॥ २६६ ॥

पुनर्विमर्शमादेष्टुं कारणं न सयुक्तिकम् ।
दृश्यतेऽस्मिन् न्यायकार्ये प्रार्थनासीदसंमता ॥ २६७ ॥

श्रेष्ठन्यायासनप्रोक्तनिर्णयेन जनास्तदा ।
शङ्किता भारते जाता आङ्ग्लानां न्यायपद्धतौ ॥ २६८ ॥

हतप्रभं बालयशःप्रदीपं
कृतः श्रमः कर्तुमपायकृद्भिः ।
जनाद्भुतस्नेहरसप्रवाहाद्
विवर्धिता दीपशिखा प्रदीप्ता ॥ २६९ ॥

क्रोधाग्नौ दमने सत्रे तिलकस्याहुतिं ददौ ।
प्रशासनं कथमिति वर्णितं च सविस्तरम् ॥ २७० ॥

मोदवृत्तादिपत्राणां संपादकनिरोधनम् ।
राजद्रोहापराधेनाभियोगाश्च प्रवर्तिताः ॥ २७१ ॥

काशीनाथो द्विजश्रेष्ठो लेले इत्युपनामकः ।
संपादकश्च पत्रस्य मोदवृत्तस्य पण्डितः ॥ २७२ ॥

ग्रन्थिज्वरव्यवस्थायां पुण्यपत्तनवासिनः ।
कथं ते सेहिरे पीडां पत्रे तत् प्रत्यपादयत् ॥ २७३ ॥

याचितापि क्षमा तेन न कृपापात्रतां गतः ।
संप्राप नवमासं स कारावासं विनाश्रमम् ॥ २७४ ॥

प्रतोदनामकं पत्रमिस्लामपूरे प्रकाशितम् ।
आसीत् संपादकस्तस्य कशाळकरसंज्ञितः ॥ २७५ ॥

स्वामी मुद्रणयन्त्रस्य हळमाकरनामकः ।
उभौ तौ दोषिणौ कृत्वा न्यायार्थं च निरोधितौ ॥ २७६ ॥

सप्ततारविभागस्य दण्डन्यायनियामकः ।
अमित्रो भारतीयानां कश्चिदाष्टनसंज्ञकः ॥ २७७ ॥

अन्वेषणं कृतं तेन न्यायाधीशेन दोषिणोः ।
अभियोगोक्तदोषाणां सिद्धिर्जातेति तन्मतम् ॥ २७८ ॥

कारावासो यावदायुः प्रथमस्य च दोषिणः ।
द्वितीयस्य च सप्ताब्दपर्यन्तः सश्रमस्तथा ॥ २७९ ॥

इति दण्डं व्यादिदेश संक्रुद्धा न्यायदेवता ।
उच्चन्यायासनं गत्वा न्यायार्थं याचना कृता ॥ २८० ॥

अशृण्वन् तत् प्रार्थिपत्रं फारन्पार्सनमाधवाः ।
ऊचुस्ते दोषसंसिद्धिर्निश्चिता दोषिणोरिति ॥ २८१ ॥

प्रथमस्यैकवर्षान्तः कारावासो भवेत् खलु ।
त्रैमासिको द्वितीयस्येत्याहुश्च न्यायमूर्तयः ॥ २८२ ॥

पुणेवैभवपत्रस्य लेखकः केळ्करकराभिधः ।
प्रशासनं क्षमां सद्यो ययाचे न्यायमन्दिरे ॥ २८३ ॥

तमुद्दिश्याभियोगो वै स्थगितश्चाधिकारिभिः ।
पश्चात्तापेन शुद्धोऽभूत् पुणेवैभवलेखकः ॥ २८४ ॥

विरलाः सुहृदः सन्ति व्यसने समुपस्थिते ।
संस्मृत्य मित्रकर्तव्यान्यनुतिष्ठन्ति तानि ये ॥ २८५ ॥

मुद्रितं केसरीपत्रमार्यभूषणसंज्ञके ।
मुद्रालये तदानीं वै गोखले हरिणा खलु ॥ २८६ ॥

न्यायमूर्तेर्निर्णयं तमाकर्ण्याथाब्रवीद् हरिः ।
केसरीवृत्तपत्रस्य मुद्रणं न करोम्यहम् ॥ २८७ ॥

भागिनेयो युवा धोंडोपंताख्यस्तिलकस्य यः ।
मुद्रणे सहकारी स हरेरासीत् सुविश्रुतः ॥ २८८ ॥

प्रकाशकस्य भिन्नत्वाद् मुद्रणे नास्ति व्यत्ययः ।
प्रतिषेधोऽपि नावैधो न दत्त्वा पूर्वसूचनाम् ॥ २८९ ॥

नामानयद् हरिर्धुण्डेर्भाषणं भीतिकातरः ।
विहाय तं विठ्ठलाख्यं मुद्रालयमवाप सः ॥ २९० ॥

तस्य स्वामी स्वीचकार केसरीपत्रमुद्रणम् ।
प्राप्तः क्षणो देशभक्तसेवाया इति सादरम् ॥ २९१ ॥

पूर्वमित्रं स्वकर्तव्यादभवत् सहसा च्युतम् ।
साहाय्यार्थं नवः शूरो व्यसने समुपस्थितः ॥ २९२ ॥

केसरीवृत्तपत्रस्य संपादनधुरां तदा ।
प्रतिज्ञामकरोद् वोढुं नरसिंहो महामतिः ॥ २९३ ॥

मराठाकेसरीपत्रे तिलकेऽप्यनुपस्थिते ।
प्रकाशिते यथाकालं विस्मिताः प्रतिपक्षिणः ॥ २९४ ॥

यो दण्डयेत् साधुजनानदण्ड्यान्
　　भ्रष्टो भवेदुच्चपदस्थितोऽपि ।
मृत्युं गतो दानवयूथमुख्यो
　　द्रेष्टासुरो भागवतोत्तमस्य ॥ २९५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे युद्धप्रारम्भो नाम द्वाविंशस्तरङ्गः ।

## त्रयोविंशस्तरङ्गः

आजन्ममृत्युपर्यन्तं सुखाय यतते जनः।
अवाप्नोति यशः कश्चित् कदा कोऽपि न सर्वदा ॥ १॥

कथं सुखी भवामीति चिन्तां वहति मानवः।
सुखी जातोऽहमद्येति नानुभूतिः कदाचन ॥ २॥

न प्राप्तुं कोऽपि शक्नोति क्षितिजं रम्यदर्शनम्।
गमनेनोभयोर्मध्ये न्यूनीभवति नान्तरम् ॥ ३॥

सुखस्य सुखलिप्सोश्च शाश्वतं मतमन्तरम्।
सुखलिप्सोर्मतिर्यावदज्ञानपरिवेष्टिता ॥ ४॥

आत्मानन्दमयो नृणां विभिन्नः पाञ्चभौतिकात्।
अभिन्नो ब्रह्मणो विश्वसर्गस्थितिलयात्मकात् ॥ ५॥

यो जानाति तमात्मानं परब्रह्मस्वरूपिणम्।
द्वन्द्वातीतं कर्मयोगी नासौ भवति दुःखभाक् ॥ ६॥

क्रीडास्थानं मनुष्याणां शरीरं सुखदुःखयोः।
अनासक्तो जनस्तस्मिन् सुखदुःखैर्न चाल्यते ॥ ७॥

यः स्वार्थस्याहुतिं दत्त्वा देशसेवानले शुचौ।
स्वकर्मणि स्थिरस्तिष्ठेद् निर्भयो विगतस्पृहः ॥ ८॥

अनासक्ता भवेच्च शीघ्रं गेहे देहे च तन्मतिः।
भवन्ति दुर्बलास्तस्मिन् कामक्रोधादयोऽरयः ॥ ९॥

'डोंगरी'नामकं नीतः शीघ्रं कारागृहं प्रति।
निर्णयानन्तरं धीरस्तिलको दक्षरक्षकैः ॥ १०॥

प्राक् पञ्चदशवर्षेभ्यो डोंगरीं तिलको गतः।
गोपालेन सहोवास तत्र मासचतुष्टयम् ॥ ११॥

मित्रेण सह संलापैर्नीतं कालं तथायुषः ।
स्मृत्वा तेन वियोगं च विषण्णः तिलकोऽभवत् ॥ १२ ॥

प्रेषितस्तिलकस्तस्मात् स्थानात् काराधिकारिभिः ।
क्षिप्रं तदा दोषभाजां गृहं भायखळास्थितम् ॥ १३ ॥

प्राप्नुवन् समतां सर्वे न्यायाधीशेन दण्डिताः ।
कारावासो द्विधा प्रोक्तः सश्रमश्च तथाश्रमः ॥ १४ ॥

न्यायाधीशेन कर्तव्यमुक्तभेदस्य दर्शनम् ।
निर्णये स्वीयतामाहुः शासनस्य प्रवर्तकाः ॥ १५ ॥

स्वीकृतं श्रेणिभेदस्य तत्त्वमन्यद् न तैस्तदा ।
न दत्तं च पृथक् स्थानं राजनैतिकदोषिणाम् ॥ १६ ॥

मन्यन्ते चालकाः स्थानं दण्डनस्यापराधिनाम् ।
कारागारमतस्तत्र दुरवस्था भयावहा ॥ १७ ॥

गच्छन्ति बन्धनागारं दुर्जनाश्च निरक्षराः ।
निरुद्योगाः सुरामत्ताः प्रायो नीतिपराङ्मुखाः ॥ १८ ॥

चौरा जाराः शठा जाल्मा तथैवानृतवादिनः ।
तामसान्नं भक्षयन्ति सदा ये च बुभुक्षिताः ॥ १९ ॥

निवसन्ति बहिर्ग्रामाद् वस्त्रहीनाश्च ये सदा ।
नित्यशो बन्धनागारं गच्छन्त्येतादृशा जनाः ॥ २० ॥

स्थानं न तत्र शिष्टानां विदुषां च महात्मनाम् ।
निवसेयुः कथं हंसाः काकनीडेऽधमाधमे ॥ २१ ॥

नास्ति सत्संगतिर्यत्र श्रेष्ठग्रन्थावलोकनम् ।
न च यत्र सदाचारः स्थानं तद् निरयोपमम् ॥ २२ ॥

भूम्यां यमपुरी साक्षात् कारागारस्वरूपिणी ।
अधिकारिजनो भाति यमदूत इवापरः ॥ २३ ॥

एवं यो वर्णयामास कारागारं पटुः कविः ।
तेन निर्भयचित्तेन कटु सत्यं निवेदितम् ॥ २४ ॥

वर्तन्ते बन्दिनस्तत्र गोष्ठस्थाः पशवो यथा ।
अहर्निशं भयाद् नित्योद्धृतदण्डाधिकारिणाम् ॥ २५ ॥

वेषशय्याभोजनेषु बन्दीनामेकरूपता ।
सार्धत्रयं स्थूलतन्तुवाससामेकबन्दिने ॥ २६ ॥

लोहपात्रं भोजनाय पानायान्यच्च भाजनम् ।
व्रीहिगोधूमधान्यानां नोपयोगोऽस्ति बन्दिने ॥ २७ ॥

जवारीबाजरीरोटी भोजनाय दिवानिशम् ।
चुकाचाकोतमेथीनां व्यञ्जनं क्षारसंयुतम् ॥ २८ ॥

कन्दर्पखण्डिकायुक्तं रक्तमिर्चीसमन्वितम् ।
कट्वम्ललवणात्युष्णं तीक्ष्णरूक्षविदाहकम् ॥ २९ ॥

पयोदधिघृतादीनां दर्शनं चापि दुर्लभम् ।
आच्छादनार्थं वपुषां निद्रायै कम्बलद्वयम् ॥ ३० ॥

श्रमं क्षेत्रे चोपवने कुर्वन्त्युत्पादयन्ति च ।
नानाफलानि धान्यानि कारागृहनिवासिनः ॥ ३१ ॥

न गृह्णन्ति रसं तेषां गन्धं जिघ्रन्ति नव च ।
सुपक्वं घृततैलाभ्यां कारागारमहानसात् ॥ ३२ ॥

नैव दत्तं च मिष्टान्नं शर्करागुडसंयुतम् ।
वह्नितप्तजलैरेव खाद्यानि हि पचन्ति ते ॥ ३३ ॥

बन्दिभ्यो रोचते नान्नं स्वादशून्यं तथाविधम् ।
क्षुधाया उपशान्त्यर्थं समश्नन्ति तथापि ते ॥ ३४ ॥

स्वाद्वाहारवतां नृणां क्षुधानाशोऽन्नदर्शनात् ।
अल्पांशमेव गृह्णन्ति क्षुधया पीडिता अपि ॥ ३५ ॥

पलाण्डुकन्दसंयुक्ते तिलकः शाकव्यञ्जने ।
तद्गन्धं दुःसहं मत्वा तत्याजैव स सर्वथा ॥ ३६ ॥

रोटीरुक्षत्वनाशाय जलक्लिन्नां विधाय ताम् ।
चूर्णीकृतां स्वाङ्गुलीभिरखादत् तां कथंचन ॥ ३७ ॥

जातश्च तच्छरीरस्य त्रिंशद्भारमितः क्षयः ।
अल्पाशनात् सेवनाच्च कदन्नस्य द्विमासयोः ॥ ३८ ॥

तिलकस्य सखा नातू ठाणाकारागृहादिह ।
समानीतः स्थानबद्धः प्रान्तेशस्य तदाज्ञया ॥ ३९ ॥

तदर्थं भोजनं नित्यं पञ्चपक्वान्नसंयुतम् ।
सेवका आनयन्ति स्म यथारुचि चतुर्विधम् ॥ ४० ॥

यदा कदा तदन्नस्य प्रदातुं तिलकाय सः ।
अंशं च प्रेषयामास तिलकस्थितिदुःखितः ॥ ४१ ॥

बहवो येतिरे शिष्टा आङ्ग्लदेशोद्भवा अपि ।
कारागाराद् विमुक्त्यर्थं तिलकस्य हितैषिणः ॥ ४२ ॥

कथं तेषां समुत्पन्नं तिलकप्रेम निर्मलम् ।
वर्णयिष्येऽतिसंक्षेपात् सुधास्वादुकथानकम् ॥ ४३ ॥

वर्षे त्रिनवतितमे ह्यष्टादशशतोत्तरे ।
ओरायनाभिधो ग्रन्थस्तिलकेन प्रकाशितः ॥ ४४ ॥

प्राच्यविद्यापण्डितानां परिषद् लंदनेऽभवत् ।
ग्रन्थसिद्धान्तसंक्षेपः प्रेषितस्तां सभां प्रति ॥ ४५ ॥

तत्सभायाश्चेतिवृत्ते ग्रन्थसारः प्रकाशितः ।
तिलकेन कृतो ग्रन्थे वेदकालस्य निर्णयः ॥ ४६ ॥

ख्रिस्तपूर्वं षट्सहस्रात् सार्धद्व्यब्दसहस्रकम् ।
वेदोदयस्य कालोऽभूत् तिलकस्य मते खलु ॥ ४७ ॥

मोक्षमुल्लरमुख्यास्तु प्राहुः पाश्चात्त्यपण्डिताः ।
द्विसहस्रं खिस्तपूर्वं समा वेदोद्भवस्य वै ॥ ४८ ॥

सूत्रब्राह्मणवेदानां कालस्तैः परिकल्पितः ।
बुद्धस्य जन्मनः पूर्वमेकैकस्य शतद्वयम् ॥ ४९ ॥

खिस्तस्य शतके पूर्वे पञ्चमे गौतमोऽभवत् ।
बुद्धः शाक्य इति ख्यातः फ्लीटाद्यैश्च विनिश्चितम् ॥ ५० ॥

निर्णयाय तु बालेन ज्योतिर्गणितपद्धतिः ।
स्वीकृता वेदकालस्य संशयोच्छेदकारिणी ॥ ५१ ॥

ऋतुग्रहश्रुतिमिते शालिवाहनभूपतेः ।
शके वसन्तसंपातो रेवत्यां हि स्थिरोऽभवत् ॥ ५२ ॥

वेदाङ्गज्योतिषग्रन्थे लगधेन निवेदितम् ।
संपातस्य वसन्तस्य भरण्यां विद्यते स्थितिः ॥ ५३ ॥

ब्राह्मणग्रन्थवाक्येभ्यः कृत्तिकास्वपि तत्स्थितिः ।
ज्ञायते तैश्च कालोऽपि तद्ग्रन्थस्य विनिर्मितेः ॥ ५४ ॥

अग्रहायणशब्दश्च वर्षारम्भार्थवाचकः ।
मृगस्याग्रायणं नाम वर्षारम्भस्तदाभवत् ॥ ५५ ॥

अनुमानेन यच्चोक्तं प्रमाणेन दृढीकृतम् ।
ऋचस्तथैव सूक्तस्य समग्रस्य च तत् पुनः ॥ ५६ ॥

यज्ञस्य वै प्रधानेति देवतोक्तादितिर्बुधैः ।
अधिष्ठात्री पुनर्वस्वोरुदयाद् वत्सरस्य च ॥ ५७ ॥

ग्रन्थस्थान्यप्रमाणानि दत्त्वा कुर्वे न विस्तरम् ।
जिज्ञासवः पठेयुस्तं ग्रन्थमोरायनाभिधम् ॥ ५८ ॥

अब्दोऽष्टसप्ततितमश्चाष्टादशशतोत्तरः ।
शालिवाहनभूपस्य शकस्याङ्कोऽद्य विद्यते ॥ ५९ ॥

समा द्व्यशीतिरगमंस्त्रयोदशशतोत्तराः ।
संपातस्य प्रवेशाच्च रेवत्यां ग्रहविन्मते ॥ ६० ॥

अनुक्रमात् ततः पूर्वं भरणीकृत्तिकामृगाः ।
स्थानानि संपातानां वै दृश्यन्ते वेदवाङ्मये ॥ ६१ ॥

संपातचलनस्यास्ति ज्ञाता नाक्षत्रिकैर्गतिः ।
द्विसहस्राब्दमितः कालश्चलनस्य च सूरिभिः ॥ ६२ ॥

नक्षत्रादन्यनक्षत्रं संपातस्य विगण्यते ।
प्रवेशादौ च रेवत्यां संपातो भरणीस्थितः ॥ ६३ ॥

चतुर्दशशतारम्भः पञ्चविंशशतावधिः ।
संपातस्य खिस्तपूर्वः कृत्तिकाकाल उच्यते ॥ ६४ ॥

चतुःसहस्रवर्षान्तः खिस्तपूर्वं ततोऽभवत् ।
मृगशीर्षाभिधः कालः संपातो मृगशीर्षके ॥ ६५ ॥

मृगपूर्वोऽदितेः कालो द्विसहस्रसमावधिः ।
विज्ञात एव खिस्तस्य षट्सहस्राब्दपूर्वगः ॥ ६६ ॥

यूरोपामेरिकावासिप्राच्यविद्याविशारदाः ।
प्रशशंसुर्वेदकालनिर्णयं तिलकस्य वै ॥ ६७ ॥

केचित् सहमता आसन् केचिदासन् विरोधिनः ।
विलोक्य तत्र पाण्डित्यं जाताः सर्वेऽपि विस्मिताः ॥ ६८ ॥

तिलको बहुभिः सार्धं पत्रलेखनचर्चया ।
स्नेहं संपादयामास विश्वविख्यातपण्डितैः ॥ ६९ ॥

व्हिद्नेहयूमब्लूमफील्डयाकोबीमोक्षमुल्लराः ।
स्मिथो डार्मिस्टरः कूनो रायश्च श्रुतिपारगाः ॥ ७० ॥

सेद्लूरस्तिलकस्यासीत् प्रसिद्धो विधिकोविदः ।
तिलकस्य स्थितिं क्षीणां दृष्ट्वा चिन्ताकुलोऽभवत् ॥ ७१ ॥

हावर्डसमितिः ख्याता कारागृहनिवासिनाम् ।
स्थापिता क्लेशनाशाय परदुःखेन दुःखितैः ॥ ७२ ॥

सत्त्वशीलैर्जनैराङ्ग्लैर्दयाधर्मपरायणैः ।
तस्या दक्षः कार्यवाहो विल्यम्टालोकसंज्ञितः ॥ ७३ ॥

सेटल्रश्च बालस्य कारागारनिवासिनः ।
लिखित्वा विस्तृतं पत्रं दशां तस्मै न्यवेदयत् ॥ ७४ ॥

मन्त्रिणे सार्वभौमस्य प्रेषयामास पत्रकम् ।
समितिः सेटल्रस्य दर्शयित्वानुकूलताम् ॥ ७५ ॥

क्षीणतात्ययसिद्ध्यै चेत् न स्याच् शीघ्रं समुद्यमः ।
जीवितं शङ्कनीयं हि तिलकस्येति तन्मतम् ॥ ७६ ॥

दर्शितं सेटल्रेण पत्रे स्पष्टतया च यत् ।
उल्लेखितं मुख्यतस्तत् टालोकेन स्वपत्रके ॥ ७७ ॥

यदि म्रियेत तिलकः कारागृह उपेक्षया ।
शासनस्य स्थितिस्तेन शोचनीया भविष्यति ॥ ७८ ॥

हामिल्टनाय कथितं टालोकेन स्वपत्रके ।
तिलकस्य ततो मन्ये जाता स्वास्थ्यविचारणा ॥ ७९ ॥

सेटल्रेण कृताद् यत्नादाङ्ग्लदेशस्थसज्जनाः ।
विजज्ञिरे शोचनीयां तिलकस्याखिलां दशाम् ॥ ८० ॥

समादिशत् सार्वभौमः कुर्युः प्रान्ताधिकारिणः ।
तिलकस्वास्थ्यरक्षार्थमुपायानुचितानिति ॥ ८१ ॥

कारानिरीक्षकः प्राह चैकदा तिलकं प्रति ।
भवता नैव कथितमन्नं दत्तमिहाभवत् ॥ ८२ ॥

अनारोग्यकरं तन्वाः शक्तेरपि विनाशकम् ।
दुःसहं कन्ददर्पेण स्वास्थ्यहानिकरं तथा ॥ ८३ ॥

क्षयाद् मद्देहभारस्य भिषक् कर्तुं क्षमो भवेत् ।
अनुमानं तस्य न स्यात्कथनस्य प्रयोजनम् ॥ ८४ ॥

प्रत्यब्रवीत् तं तिलक एवं मानधनो यदा ।
निर्ययौ स तदा स्थानात् कारागृहनिरीक्षकः ॥ ८५ ॥

अल्पकालेन तिलको नीतो येरवडां प्रति ।
आरोग्याधिकृता केनाप्यसौ भायखळागृहात् ॥ ८६ ॥

कल्याणस्थानके तस्थौ जवनोऽग्निरथो यदा ।
आसीनं प्रथमश्रेण्यां ददृशुस्तिलकं जनाः ॥ ८७ ॥

बन्दिवेषधरं शान्तं जयशब्दं च ते जगुः ।
उच्चैस्तेन समायाताः शतशस्तं दिदृक्षवः ॥ ८८ ॥

सादरं तं नमस्कृत्य हृदयेऽत्यन्तदुःखिताः ।
निर्जग्मुः स्वालयान् सर्वे प्रयातेऽग्निरथे सति ॥ ८९ ॥

अब्देऽष्टानवतितमे ह्यष्टादशशतोत्तरे ।
मासे द्वितीये प्राप्तोऽसौ कारां येरवडाभिधां ॥ ९० ॥

आरोग्यवर्धनः शीतः सह्याचलसमुत्थितः ।
वायुः संचरते शुद्धस्तत्रोल्हासप्रदः सदा ॥ ९१ ॥

कश्चिद् वै वङ्गदेशीयश्चाटर्जीसंज्ञकोऽवसत् ।
लंदनेऽभूत् सखा यस्य विख्यातो मोक्षमुल्लरः ॥ ९२ ॥

कारादुःस्थितिमाकर्ण्य तिलकस्य ददर्श सः ।
कर्तुं निवेदनं तस्याः पण्डितं मोक्षमुल्लरम् ॥ ९३ ॥

पण्डितैराङ्ग्लदेशीयैः प्राच्यविद्याविशारदैः ।
विमोचनाय कर्तव्यो यत्नो वालस्य बन्धनात् ॥ ९४ ॥

कारागारनिबद्धस्य तिलकस्य मनोव्यथाम् ।
सुज्ञा ज्ञातुं शक्नुवन्ति चट्टोपाध्याय आह तम् ॥ ९५ ॥

कदन्नस्याशनाद् नित्यं शरीरं कृशतां गतम् ।
सद्ग्रन्थपठनाभावाद् गतमस्वस्थतां मनः ॥ ९६ ॥

झटित्युपायः कर्तव्यः सुज्ञैर्विद्याभिमानिभिः ।
विलम्बात् तिलकस्य स्यात् प्राणसङ्कटसंभवः ॥ ९७ ॥

श्रुत्वा तद् दुःखितो जातो दयालुर्मोक्षमुल्लरः ।
ततस्तेन समानीतमृग्वेदस्यैकपुस्तकम् ॥ ९८ ॥

उवाच वङ्गमित्रं स दीयतां तिलकाय तत् ।
अल्पकालेन स ग्रन्थः प्राप्तस्तिलकहस्तकम् ॥ ९९ ॥

पत्रोत्तरेऽलिखद् बालः पण्डितं मोक्षमुल्लरम् ।
ग्रन्थदानेन जातोऽहमुपकारस्य भाजनम् ॥ १०० ॥

भवामि कथमुत्तीर्णो दुस्तरं त्वदृणार्णवम् ।
आनृण्याय श्रुतेः पाठं यथाशक्ति करोम्यहम् ॥ १०१ ॥

विनिर्णेतुं वेदकालं पूर्वं यत्नो मया कृतः ।
ज्ञातोऽखिलो वेदविद्याध्यायायासमयायुषाम् ॥ १०२ ॥

ऋग्वेदे सन्ति भूयांस उत्तरध्रुवबोधकाः ।
उल्लेखाः संपरिचितेस्तद्भूदेशस्य दर्शकाः ॥ १०३ ॥

स्थानं मन्त्रकृतां मूलमृषीणां ध्रुवमण्डलम् ।
नान्यदेश इति स्पष्टमनुमानं ततो भवेत् ॥ १०४ ॥

स्वसिद्धान्तस्य संक्षेपो पण्डिताय निवेदितः ।
मोक्षमुल्लरसंज्ञाय तिलकेनान्यपत्रके ॥ १०५ ॥

विचाराणां विनिमयो बालमुल्लरयोरयम् ।
भाषेतिहासविज्ञानशास्त्रचर्चासमन्वितः ॥ १०६ ॥

उत्पादयति साश्चर्यमादरं हृदये पुनः ।
संयोगः पावनः पूर्वापरसागरयोरिव ॥ १०७ ॥

काकेशाद्रिं संनिधिस्था काश्यपाब्धिं परिस्थिता ।
जन्मभूरार्यवंशस्येत्याशियामध्यवर्तिनी ॥ १०८ ॥

प्रपादनं यत् कुर्वन्ति पाश्चात्त्या वेदपण्डिताः ।
ऋग्वेदे न तदर्थं तु प्रमाणमुपलभ्यते ॥ १०९ ॥

आर्यमूलस्थानचर्चा " वेदग्रन्थे ध्रुवो गृहम् " ।
इतिसंज्ञे कृता ग्रन्थे तिलकेन सविस्तरा ॥ ११० ॥

आरब्धं लेखनं तेन कारागारे महात्मना ।
जातं तत्रैव वेदानां तदर्थे परिवीक्षणम् ॥ १११ ॥

न पूर्णं बन्दिवासस्य कथनं तद्विना भवेत् ।
तस्मात् तस्येह निर्देशः संक्षेपेण कृतो मया ॥ ११२ ॥

मोक्षमुल्लरयत्नेन तिलकस्य विमुक्तये ।
अर्पितं प्रार्थनापत्रं सार्वभौमाधिकारिणे ॥ ११३ ॥

पत्रके स्वाक्षरीं चक्रुः केनो गार्थश्च हंटरः ।
रमेशचन्द्रदत्तश्च नौरोजिश्च पितामहः ॥ ११४ ॥

पार्लमेंटसभायाश्च केचित् सुज्ञसभासदः ।
आसन् तिलकमुक्त्यर्थं सहकार्यचिकीर्षवः ॥ ११५ ॥

शशंसुः प्रार्थनापत्रे सेवां भूपाललोकयोः ।
विद्याव्यासङ्गपाण्डित्यग्रन्थकर्तृत्वपाटवम् ॥ ११६ ॥

तिलकस्य जनाः श्रेष्ठा आङ्ग्लीया हंटरादयः ।
भारते राजसेवायां पूर्वं येषां गतं वयः ॥ ११७ ॥

विद्या बन्धुजनो विपत्सु तिलकस्यैकः सुहृत् प्रेमलो
गन्तुं पारमगाधदुःखजलधिं सा सुस्थिता नौरिव ।
विद्यायाः कृपयैव शत्रुसदने सन्मित्रलाभोऽभवद्
विद्वान् शास्त्रकलाविदामपि गुरुः सर्वत्र यः पूज्यते ॥ ११८ ॥

आसीत् सालोमनो नाम कारागारनिरीक्षकः ।
तिलकाय ददौ मानं वेदाध्यायरताय सः ॥ ११९ ॥

दशवादनपर्यन्तं ग्रन्थानां वाचनाय सः ।
दीपानुज्ञां ददौ तस्मै निशायां लेखनाय च ॥ १२० ॥

योजितस्तिलकस्तेन नानारङ्गविनिर्मितौ ।
विहितं कर्म तत् स्वल्पकष्टसाध्यं सहेतुकम् ॥ १२१ ॥

कर्तुं समुज्ज्वलान् रङ्गान् येते कारोद्यमे सदा ।
तस्मिन् कर्मणि संप्राप्तं प्रावीण्यमिति कथ्यते ॥ १२२ ॥

दृश्यते कौशलं येषामनभ्यासेऽपि कर्मणि।
तेषां सर्वंकषा बुद्धिः पूर्वपुण्येन लभ्यते ॥ १२३ ॥

चाफेकरकुले जातो युवा दामोदराभिधः ।
आसीद् निबद्धस्तत्रैव रँडस्य प्राणहारकः ॥ १२४ ॥

तस्मै ददौ न्यायमूर्तिरुग्रं देहान्तशासनम् ।
उच्चन्यायालयं गन्तुमैच्छद् दामोदरस्तदा ॥ १२५ ॥

तिलकं द्रष्टुमिच्छामि तदर्थमिति सोऽब्रवीत् ।
तिलकस्थानमानीत आज्ञयाप्यधिकारिणः ॥ १२६ ॥

उवाच स नमस्कृत्य बालं प्रति ' लिखन्तु मे ।
प्रार्थिपत्रं भवन्तोऽद्य निर्दोषित्वस्य सिद्धये ' ॥ १२७ ॥

उच्चन्यायालयस्थाय न्यायाधीशाय याचनाम् ।
अकरोद् न्यायदानार्थं हरेर्दामोदरः सुतः ॥ १२८ ॥

लिखितं प्रार्थनापत्रं तिलकेन यथोचितम् ।
संपरीक्ष्य न्यायदृष्ट्या न्यायाधीशस्य निर्णयम् ॥ १२९ ॥

पुनर्दामोदरो वाक्यमुवाच तिलकं प्रति ।
दीयतां नित्यपाठाय गीतायाः पुस्तकं तव ॥ १३० ॥

मत्वा हि मम दोषाय योग्यं देहान्तशासनम् ।
न जाता चेद् यशःप्राप्तिरुच्चन्यायालये यदि ॥ १३१ ॥

गीतां धृत्वा करे सम्यग् नमस्कृत्य च भक्तितः ।
गच्छाम्यहं वधस्तम्भं स्वर्गारोहणतत्परः ॥ १३२ ॥

मम प्रेतस्य संस्कारो यथाशास्त्रं भवेदिति ।
अब्रवीत् तिलकं दामुर्व्यवस्थां कर्तुमर्हसि ॥ १३३ ॥

तिलकेन कृतं सर्वं यथा दामोदरोऽवदत् ।
वधस्तम्भं समानीय यदा दामोदरो हृतः ॥ १३४ ॥

मन्त्राग्निना विप्रहस्तैरग्नये प्रेतमर्पितम् ।
तिलककृतसंस्कारो लेभे स गतिमुत्तमाम् ॥ १३५ ॥

भस्मीभूतं विठ्ठलाख्यमग्निना मुद्रणालयम् ।
केसरीमुद्रणस्थानमभियोगादनन्तरम् ॥ १३६ ॥

मुद्रितं केसरीपत्रं प्रभाते भौमवासरे ।
जगद्धितेच्छुविति ख्याते धुण्डिना मुद्रणालये ॥ १३७ ॥

तथापि चालकः प्राह धुण्डिराजं कुरु त्वराम् ।
अन्यस्थाने मुद्रणस्य पत्रयोरुभयोरिति ॥ १३८ ॥

द्रष्टुकामो धुण्डिराजो बालं कारागृहं गतः ।
तिलकेन कृतः प्रश्नस्तस्मै प्रथमदर्शने ॥ १३९ ॥

' विठ्ठले ' वह्निना दग्धे केसरीपत्रमुद्रणम् ।
कुत्र जातं कथं ज्ञातं निवेदय सविस्तरम् ॥ १४० ॥

ज्ञात्वा समग्रवृत्तान्तं धुण्डिराजनिवेदितम् ।
फाटकेत्युपनाम्नेऽसौ तिलकः पत्रमालिखत् ॥ १४१ ॥

पत्रद्वयं मुद्रितव्यं भवद्भिश्चार्यभूषणे ।
यथाकालं यथापूर्वं मन्मोचनदिनावधि ॥ १४२ ॥

आर्यभूषणसंस्थायाः स्वामी केळकरात्मजः ।
चक्रे तस्याल्पवयसः पालनं फाटकस्तदा ॥ १४३ ॥

ओमित्युत्तरमायातं निश्चिन्तस्तिलकोऽभवत् ।
मराठाकेसरीपत्रमुद्रणस्य व्यवस्थया ॥ १४४ ॥

व्यतीते नाधिके काले ततः सालोमनोऽवदत् ।
तिलकं वाचने मग्नं कारागारनिरीक्षकः ॥ १४५ ॥

विश्रमोऽद्य मयावाप्तः सेवाकालान्तपूर्वगः ।
देशं गच्छामि न पुनरागमिष्यामि भारतम् ॥ १४६ ॥

विमुक्तो बन्धनागाराद् भविष्यति भवानपि ।
कृपया स्वल्पकालेन देवस्येति मतिर्मम ॥ १४७ ॥

धन्योऽस्मीति च मन्येऽहं दर्शनाद् भवतामिह ।
विद्यावतां क्षम्यतां मे ज्ञाताज्ञातोऽप्यनादरः ॥ १४८ ॥

धन्यवादानदाद् बालस्तस्मै सौजन्यमूर्तये ।
दर्शितं येन सौहार्दं बन्दिने बन्धनालये ॥ १४९ ॥

कश्चिद् जॅक्सननामा वै तस्य स्थाने नियोजितः ।
हिन्दुद्वेष्टा क्षुद्रबुद्धिः शिष्टाचारपराङ्मुखः ॥ १५० ॥

जहावुपानहौ जीर्णे ववाञ्छ तिलको नवे ।
पादत्राणे रक्तवर्णे तदर्थं प्रेषिते तदा ॥ १५१ ॥

पादत्राणे रक्तवर्णे न योग्ये बन्धनालये ।
लेपिते ते कज्जलेन तेन विक्षिप्तबुद्धिना ॥ १५२ ॥

विलोक्य कृष्णकृत्यं तद् बालः स्वगतमब्रवीत् ।
अहंकारावलिप्तानां कृष्णत्वं मूर्ध्नि वर्तते ॥ १५३ ॥

विमोचनाय बालस्य कृतो यत्नो हितैषिभिः ।
भारते चाङ्ग्लदेशे च नाभूत् सद्यःफलप्रदः ॥ १५४ ॥

तथापि विषयस्यास्य विचारो वै प्रवर्तितः ।
मन्ये मुख्यपदस्थेषु भारतेग्लंददेशयोः ॥ १५५ ॥

अतीतेष्वष्टमासेषु कारावासादनन्तरम् ।
हितैषी तिलकस्यैको तिलकं प्रत्यसूचयत् ॥ १५६ ॥

प्रशासनविचारार्थं प्रार्थनावश्यका भवेत् ।
बन्दिशालानिबद्धस्य स्वमुक्त्यर्थं सकारणम् ॥ १५७ ॥

लिखितं प्रार्थनापत्रं तिलकेन स्वमुक्तये ।
तद् निरीक्षकहस्तेन प्रान्तेशाय समर्पितम् ॥ १५८ ॥

रँडहत्यान्वेषणेन न्यायमूर्तिकृतेन च ।
निर्णयेनाभवत् स्पष्टं सर्वेषां संशयात्मनाम् ॥ १५९ ॥

नासीत् स्वल्पोऽपि संबन्धस्तिलकस्याततायिनोः ।
वृत्तपत्रप्रसिद्धानां लेखानां भाषणस्य च ॥ १६० ॥

हत्याया गर्हया नाम शासनस्याधिकारिणोः ।
कार्यकारणसंबन्धो न सिद्धः क्रूरकर्मणा ॥ १६१ ॥

निराकृतः संशयोऽद्य शासनस्याधिकारिणाम् ।
अद्य संप्रार्थये तस्माद् मोक्तव्यो बन्धनादहम् ॥ १६२ ॥

न तत्पत्रेण संतुष्टा दुराराध्याधिकारिणः ।
ऐच्छंस्तस्य विमुक्तस्य तेऽपहर्तुं स्वतन्त्रताम् ॥ १६३ ॥

तिलकेन न मुक्तेन कर्तव्यं राजकारणम् ।
स्वीकर्तव्यो न सत्कारो मोचनोर्ध्वं कृतो जनैः ॥ १६४ ॥

निर्बन्धौ सूचितावेतौ शासनस्याधिकारिभिः ।
नियोजितो ब्रुईनस्तैर्ज्ञातुं बालमनोगतम् ॥ १६५ ॥

ददर्श ब्रुइनो दाजीं मुम्बानगरवासिनम् ।
तिलकस्य सुहृच्छ्रेष्ठं खरे इत्युपनामकम् ॥ १६६ ॥

तिलकेन सहालापं कर्तुं वाक्चतुरस्तदा ।
ब्रुईनो दाजिना सार्धं संप्राप्तो बन्धनालयम् ॥ १६७ ॥

निर्बन्धौ दर्शयामास निपुणो दूतकर्मणि ।
कारागाराद् गृहं नेतुं प्राप्तोऽहमिति चाह सः ॥ १६८ ॥

सत्कारेष्वनुपस्थित्यां तिलकः संमतिं ददौ ।
राजनैतिककार्याणां परित्यागो न संमतः ॥ १६९ ॥

दण्डकालान्तपर्यन्तं कारागारे वसाम्यहम् ।
न करिष्ये मोचनार्थं व्यक्तिस्वातन्त्र्यविक्रयम् ॥ १७० ॥

परापतत् ब्रुईनस्तु श्रुत्वा स्पष्टं तदुत्तरम् ।
संवादस्य च निष्कर्षमख्याच श्रेष्ठाधिकारिणे ॥ १७१ ॥

कंचित्कालं चोत्तरेण प्रयत्नो विरराम ह ।
मार्गस्थेनान्तरायेण प्रवाहस्य गतिर्यथा ॥ १७२ ॥

नोचितं तिलकस्यातःपरं कारानिरोधनम् ।
इति ते चिन्तयामासुः प्रान्तेशस्याधिमन्त्रिणः ॥ १७३ ॥

तिलकं दाजिना सार्धं ब्रुईनः पुनरागतः ।
उपायं चिन्तयामास बन्धनाद् मोचनस्य सः ॥ १७४ ॥

यदीष्यते शासनेन बन्धनाद् वै विमोचनम् ।
एकोपायं दर्शयिष्ये भवतः स विचार्यताम् ॥ १७५ ॥

विमोचनदिनादूर्ध्वं दण्डकालोऽवशिष्यते ।
यस्तं सदा स्मरिष्यामि मद्वाक्यमवधारय ॥ १७६ ॥

यद्यहं दोषभागस्मि राजद्रोहापराधकृत् ।
इति न्यायालये सिद्धं मोचनानन्तरं मम ॥ १७७ ॥

भुक्त्वा तेन कृतं दण्डं भोक्ष्ये दण्डं ततोऽधिकम् ।
दण्डशेषस्य भोगाय कारागारे वसाम्यहम् ॥ १७८ ॥

दीक्षितो देशसेवायां करिष्ये राजकारणम् ।
न निवृत्तिर्भवेत् तस्माद् मम केनापि हेतुना ॥ १७९ ॥

मत्स्यस्य सलिलेनेव संबद्धं मम जीवनम् ।
राजनैतिककार्येण, त्यक्तुं शक्नोमि नैव तत् ॥ १८० ॥

अन्वमोदत दाजिस्तं न्याय्यं तिलकभाषितम् ।
जातं तर्कविशुद्धत्वाद् ब्रुईनस्यापि संमतम् ॥ १८१ ॥

मासे सप्तेंबरे षष्ठे दिनाङ्के मङ्गले सभा ।
प्रशासनस्य मुम्बय्यां भवने मन्त्रिणामभूत् ॥ १८२ ॥

सूचनाया विचारार्थं तिलकस्य सभासदः ।
स्थित्वा प्रदीर्घकालं ते मुम्बईमन्त्रिसंसदः ॥ १८३ ॥

पर्यायस्तिलकप्रोक्तः सर्वेषां संमतोऽभवत् ।
मुच्यतां तिलकस्तस्माद् बन्धनादिति निर्णयः ॥ १८४ ॥

संदेशः प्रेषितः पुण्यपत्तनस्थाधिकारिणे ।
विमोचनाय बालस्य सत्वरं बन्धनालयात् ॥ १८५ ॥

गतौ कारागृहं दाजिब्रुईनौ हर्षनिर्भरौ ।
प्रापतुर्वाहनारूढौ गृहं तिलकसंयुतौ ॥ १८६ ॥

अर्धोत्तरे च दशमे स्थाने कालनिदर्शके ।
दर्शिते निशि धीरः स प्राविशत् तिलको गृहम् ॥ १८७ ॥

आदौ देवगृहं गत्वा ववन्दे कुलदेवताम् ।
ततः साध्वीं सत्यभामां ददर्श गृहदेवताम् ॥ १८८ ॥

वन्दितो भागिनेयाभ्यां विश्वनाथादिभिः सुतैः ।
आयातस्तिलकः स्थानं सभ्यैः संभाषणाय च ॥ १८९ ॥

धन्यवादान् ददौ दाजिब्रुईनाभ्यां महामनाः ।
न धन्यवादपात्रोऽहमुत्तरे ब्रुईनोऽवदत् ॥ १९० ॥

जग्राह पाणिना पाणिं " सुखरात्रिम् " उवाच सः ।
निर्जगाम गृहाच् शीघ्रं स्वस्थानगमनाय च ॥ १९१ ॥

शिवरामश्च कृष्णश्च नृसिंहश्च समागताः ।
वासुदेवश्च तद्रात्रौ तिलकस्यानुयायिनः ॥ १९२ ॥

दृष्ट्वा स्पृष्ट्वा च तत्पादौ शिरोभिस्ते तदाशिषः ।
श्रुत्वा च मुदिताः सर्वे विनिवृत्ता गृहं प्रति ॥ १९३ ॥

भोजनानन्तरं रात्रौ दाजिर्निद्रावशोऽभवत् ।
चिरेण तिलको लेभे सुखनिद्रां स्वसद्मनि ॥ १९४ ॥

कारागाराद् बन्धमुक्तस्तिलको गृहमाययौ ।
रात्राविति शुभा वार्ता प्रभाते विश्रुता जनैः ॥ १९५ ॥

देशेऽपि प्रसृता शीघ्रमुद्यद्भानुप्रभा यथा ।
आसन् प्रमुदिताः सर्वे देशभक्ताः सुवार्तया ॥ १९६ ॥

विद्युत्संदेशपत्राणामभिनन्दनदायिनाम् ।
बभूवाखण्डिता वृष्टिर्वर्षाकाले यथाम्भसाम् ॥ १९७ ॥

प्रमुखा राष्ट्रभक्ता ये विद्वद्वर्याश्च भारते ।
तस्याभिनन्दनं चक्रुः प्राचीना नूतनास्तथा ॥ १९८ ॥

उच्चैरुदीरयामासुस्तिलकस्य यशोऽमलम् ।
सभासु मिलिताश्छात्रा महाविद्यालयस्थिताः ॥ १९९ ॥

अपश्यन् तरुणान् सर्वान् भारते तिलकानुगान् ।
नगरेषु च मुख्येषु शासनस्याधिकारिणः ॥ २०० ॥

पुण्यपुर्यां जनैः सर्वैर्दीपावलिमहोत्सवः ।
कृतस्तिलकपूजायै त्रिरात्रं हृष्टमानसैः ॥ २०१ ॥

प्रशस्त्यै तिलकस्याभूत् पौराणां महती सभा ।
उपस्थितो न तिलकः पौरजानपदोत्सवे ॥ २०२ ॥

सहस्रशः सहस्राणि पुण्यपत्तनवासिनः ।
सुप्रभाते दर्शनाय समीयुस्तिलकालयम् ॥ २०३ ॥

चकार दर्शनं सर्वः पस्पर्श च पदाम्बुजम् ।
उवाच भक्तिभावेन प्रणमंस्तं कृताञ्जलिः ॥ २०४ ॥

अद्य मे सफलं जन्म भवत्पादाब्जदर्शनात् ।
वन्दनादाप्नवं सर्वं मङ्गलानां च मङ्गलम् ॥ २०५ ॥

एकसप्ताहपर्यन्तं जनताचौसरिद्वरा ।
गङ्गेव कापिलं तीर्थं प्राविशत् तिलकाश्रमम् ॥ २०६ ॥

बहवः पूजयामासुर्मुदिताः शुभवार्तया ।
सत्यनारायणं देवं मनोवाञ्छितदायिनम् ॥ २०७ ॥

द्विजा रुद्राभिषेकेण समानर्चुरुमापतिम् ।
महाराष्ट्रविदर्भेषु शंकरं लोकशंकरम् ॥ २०८ ॥

अनुष्ठानावसाने तैरक्षता अभिमन्त्रिताः ।
आयुरारोग्यसंवृद्ध्यै तिलकाय समर्पिताः ॥ २०९ ॥

वैदिका ब्राह्मणाः सर्वे पारायणपरायणाः ।
समुच्चार्य स्वस्तिमन्त्रांस्तिलकायाशिषो ददुः ॥ २१० ॥

आशीर्वचनपत्राणि पीठमुद्राङ्कितानि च ।
शंकराचार्यदत्तानि प्राप्तानि तिलकेन च ॥ २११ ॥

वार्ताहराः समायाताः कारावासनिवेदनम् ।
तिलकाच्च् श्रोतुकामास्ते विफलाशा गृहं गताः ॥ २१२ ॥

सुधारकप्रतिनिधिस्तिलकं द्रष्टुमागतः ।
यः संवादस्तयोर्मध्ये स तत्पत्रे प्रकाशितः ॥ २१३ ॥

कारावासस्य वृत्तान्तस्तिलकेन निवेदितः ।
प्रकाशतामयात् पत्रे समग्रोऽधिकृतस्तदा ॥ २१४ ॥

वार्ताहरेण संपृष्टस्तिलकः स्वोत्तरेऽवदत् ।
उपकृतः संकटेऽस्मिन् सर्वैपक्षैश्च केसरी ॥ २१५ ॥

तमप्राक्षीज्जनः कोऽपि रङ्गवैचित्र्यनिर्मितौ ।
भवता कः कृतो यत्नः कारागारनिवासिना ॥ २१६ ॥

रहस्यं तस्य विज्ञेयमस्माभिः स्वमुखाद् भवन् ।
स जगाद विनोदेन कारावासतपोबलम् ॥ २१७ ॥

क्षीणत्वाच् शक्तिहीनत्वात् काराक्लेशैः सुदुःसहैः ।
तिलकस्यैकवर्षान्ते शरीरं ह्यस्थिपञ्जरम् ॥ २१८ ॥

तच्छरीरं संपरीक्ष्य गद्रेघोलेमहर्षयः ।
चक्रिरे निर्णयं सर्वे तदारोग्याय संप्रति ॥ २१९ ॥

दीर्घकालीनविश्रान्तिस्तिलकस्योचिता खलु ।
निवृत्तिः सर्वकार्येभ्य इष्टा संवत्सरावधिः ॥ २२० ॥

वङ्गे चक्रुः सुहृद्वर्या घोषबन्धुपुरस्कृताः ।
सभायां कालिकापुर्यां तिलकस्याभिनन्दनम् ॥ २२१ ॥

रमेशचन्द्रदत्तेन तिलकस्य प्रवर्णितः ।
स्वदेशार्थे कृतस्त्यागः स्वपत्रे हृष्टचेतसा ॥ २२२ ॥

आङ्ग्लदेशस्थमित्रेण केनेन तिलकः स्तुतः ।
" उद्धाराय स्वदेशस्य त्वया यत्नः कृतो महान् " ॥ २२३ ॥

लप्स्यन्ते ते फलं तस्य काले भारतवासिनः ।
शृङ्खलाभङ्गरूपेण पारतन्त्र्यस्य निश्चितम् ॥ २२४ ॥

उद्भूतस्तिलकस्य दिव्यकृतिभिः स्वायत्तताशाङ्कुरो
निद्रा मोहमयी जनस्य तिलकं दृष्ट्वा विनष्टाभवत् ।
नेतायं पथदर्शको भरतभूद्धारप्रयत्ने स्थिरः
संप्राप्ता अनुयायिनः सुकृतिनस्तस्याखिले भारते ॥ २२५ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे द्वितीयकारावासवर्णनाख्यस्त्रयोविंशस्तरङ्गः ।

## चतुर्विंशस्तरङ्गः

विश्रान्तिलाभाय गतः प्रसिद्धं
वीरालयं सिंहगडं सुरम्यम् ।
तानाजिदेहार्पणयज्ञपूतं
शिवस्य दुर्गं तिलकः सदाजिः ॥ १ ॥

सुखं ववौ शीतलमन्दवायु-
र्वन्यप्रसूनोत्कटगन्धयुक्तः ।
पीयूषवत् स्वादुजलैः प्रपूर्णा
जलाशयाः पङ्कजपङ्क्तिरम्याः ॥ २ ॥

तेजोऽपि सूर्यस्य न तापदं स्याद्
ग्रीष्मेऽपि सर्वस्य सुखप्रदोऽर्कः ।
पर्जन्यरक्षार्थमिहातपत्रं
न त्वातपस्यास्ति निवारणाय ॥ ३ ॥

भूव्योममध्यसंस्थानि तेजोवायूदकानि च ।
कुर्वन्तीह सुखं दुर्गमन्तरिक्षमिव स्थितम् ॥ ४ ॥

वर्जितं भूखदोषैस्तत् त्रिभूतं मध्यवर्ति तु ।
ददौ दुर्गायौषधिभ्यो गुणान् शक्तिविवर्धकान् ॥ ५ ॥

ओजस्तेजःसुवर्चोभिः सुसंपन्ना विराजते ।
सृष्टिश्चतुर्विधा नित्यं दुर्गेऽस्मिञ् शिवभूपतेः ॥ ६ ॥

तरवः क्षुद्रगुल्माश्च काले पुष्पफलान्विताः ।
विचित्रवर्णपत्राश्च शोभन्तेऽद्राविहोद्भिदः ॥ ७ ॥

उदितेऽर्के समायान्ति कलनिह्रादसारसाः ।
आवासस्योन्मुखाः सन्ति सायं सर्वेऽपि पक्षिणः ॥ ८ ॥

भक्ष्यार्थं ते बहिर्यान्ति फणिनो मणिभूषणाः।
नागादयश्चित्रवर्णा अनन्तकुलदीपकाः ॥ ९ ॥

कृमयः सन्त्यसंख्याता प्रपुष्टाः पङ्किलोदके।
प्राणिस्वास्थ्यनिहन्तारो दृश्यन्ते निर्विषा इह ॥ १० ॥

मर्कटाः पशवो ग्राम्या आरण्याः श्वापदास्तथा।
वसन्ति दुर्गभागेषु स्वावलम्बनजीविनः ॥ ११ ॥

सिंहदुर्गनिवासेन तिलकारोग्यदर्शिनी।
प्रगतिः स्पृहणीयासीदुत्साहदशरद्दतौ ॥ १२ ॥

संकल्पितं नवग्रन्थं लिखितुं स मनो दधे।
निर्मित्यै नोदयामास मन्ये ग्रन्थस्य तं शरद् ॥ १३ ॥

समारेभे स्थितप्रज्ञो वेदाभ्यासतपो महत्।
शान्तस्थले ज्ञातुकामो गृहं वेदर्षिसेवितम् ॥ १४ ॥

तस्मै सा दर्शयामास वेदमातातिपावनम्।
दिश्युदीच्यां स्थितं रम्यं भूप्रदेशं ध्रुवाभिधम् ॥ १५ ॥

षाण्मासिको दिनो यत्र रात्रिरासीच्च तत्समा।
दिव्या चाखण्डितानेकदिनावधिरुषःप्रभा ॥ १६ ॥

ध्रुवाख्या तारका नित्यं सप्तर्षिगणसंयुता।
आकाशस्योच्चभागस्था यत् करोति प्रदक्षिणम् ॥ १७ ॥

पौराणिकैः संस्तुतो यस्तप्तजाम्बूनदोपमः।
मेरुनामा गिरिः श्रेष्ठो देवतानिलयः प्रियः ॥ १८ ॥

श्रुतिमन्त्रप्रमाणेन मूलस्थानस्य निर्णयः।
तिलकेन कृतः सम्यगार्याणां वेददर्शिनाम् ॥ १९ ॥

गवामयनसंबद्धमन्त्रार्थस्तेन यः कृतः।
तस्य व्यासङ्गपाण्डित्यबुद्धिश्रेष्ठत्वदर्शकः ॥ २० ॥

प्रदेशः समशीतोष्ण उत्तरध्रुवसंस्थितः ।
आसीत् पुरा निवासार्हो भूगर्भज्ञानिनां मते ॥ २१ ॥

हिमस्य प्रलयो जातस्तस्मिन् देशे भयावहः ।
नावासार्थं नृणां योग्यो ध्रुवदेशोऽभवत् तदा ॥ २२ ॥

दशवर्षसहस्राणि व्यतीयुः प्रलयादिति ।
कथयन्ति स्म भूगर्भज्ञानिनोऽमेरिकास्थिताः ॥ २३ ॥

शीतेन पीडिता आर्याः प्राणत्राणाय तत्यजुः ।
यात्रिकास्तं प्रदेशं ते दक्षिणाशां प्रतस्थिरे ॥ २४ ॥

समीक्ष्य झरतुष्ट्रस्यावेस्ताख्यग्रन्थमुत्तमम् ।
तिलकेन कृतं स्थूलं प्रवासपथवर्णनम् ॥ २५ ॥

स्वसिद्धान्तानुरोधेन वेदस्यर्चां सुबोधताम् ।
तिलकोऽदर्शयद् ग्रन्थे दुर्बोधानां सयुक्तिकम् ॥ २६ ॥

देवासुराणां युद्धस्य वृत्रेन्द्रकलहस्य च ।
त्रिविक्रमकथायाश्च वर्णनं सोपपत्तिकम् ॥ २७ ॥

कर्तुं शक्यं ध्रुवस्थाननिवासस्यावलम्बनात् ।
एवं विवेचितं तेन सप्रमाणं सयुक्तिकम् ॥ २८ ॥

रामशत्रो रावणस्य मुखान्यासन् कथं दश ।
निद्रायाः कुम्भकर्णस्य मासषट्कावधिः कथम् ॥ २९ ॥

अद्भुतत्वं कथानां यद् व्यासवाल्मीकिवर्णितम् ।
प्रायशो वेदमन्त्रेषु तद्बीजमुपलभ्यते ॥ ३० ॥

द्रष्टारो वेदमन्त्राणां न्यवसन्नार्यपूर्वजाः ।
हिमस्य प्रलयात् पूर्वं प्रदेशे ध्रुवसंज्ञके ॥ ३१ ॥

खिस्तस्य जन्मनः पूर्वमशीतिगुणितं शतम् ।
गताः समा यदा जातः प्रलयस्तत्र भीषणः ॥ ३२ ॥

प्रलयेऽन्तर्हिता वेदा ऋषिभिस्तपसा पुनः ।
प्राप्ता एषा हि व्यासोक्तिः सत्या न कविकल्पना ॥ ३३ ॥

वेदेषु कथितं ज्ञानं प्रलयात् प्रागिति स्थितिः ।
ज्येष्ठस्तस्माद् वेदधर्मो सर्वधर्मेषु वर्तते ॥ ३४ ॥

पुराणत्वं च वेदानां ग्रन्थयुग्मे प्रदर्शितम् ।
पाश्चात्त्यानां समाश्रित्य संमतां तर्कपद्धतिम् ॥ ३५ ॥

अज्ञेयोत्पत्तिकालत्वादज्ञेयत्वाच्च तत्कृताम् ।
योनित्वात् सर्वशास्त्राणां तेषामात्मप्रमाणता ॥ ३६ ॥

उच्यतेऽपौरुषेयेति वाणी सा वेदसंज्ञिता ।
आचार्यैः स्मृतिकारैश्च सूरिभिर्ब्रह्मवादिभिः ॥ ३७ ॥

अस्ति कालस्थलातीतो धर्मो वेदसमुद्भवः ।
तदुद्भूतैर्बहुस्तम्भैर्वटवृक्ष इवोद्धृतः ॥ ३८ ॥

निःश्रेयसाय लोकानां सप्तद्वीपोदयाय च ।
व्याख्यातो वेदशास्त्रार्थः तत्त्वज्ञाचार्यपण्डितैः ॥ ३९ ॥

ग्रन्थत्रयं विनिर्मित्य तिलकेनानुपालिता ।
वेदज्ञानप्रसारस्य वैदिकानां परम्परा ॥ ४० ॥

कारागारे तिलकवपुषः कृष्णपक्षे यथेन्दो-
ह्रासो जातो विकलवशता तेजसो वर्चसश्च ।
मुक्तस्तस्मात् प्रतिदिनमहो शुक्लपक्षे शशीव
शक्त्या चासीत् पुरुषतिलकस्तेजसा वर्धमानः ॥ ४१ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे सिंहगडनिवासाख्यश्चतुर्विंशस्तरङ्गः ।

## पञ्चविंशस्तरङ्गः

गृहे वेत्रासनासीनो विमुक्तो बन्धनालयात् ।
जिज्ञासवे स्वमित्राय तिलको वाक्यमब्रवीत् ॥ १ ॥

कृतं यद् यद् मया पूर्वं सेवायै देशधर्मयोः ।
कालोचितं तत्तदेव करिष्येऽहमतः परम् ॥ २ ॥

उद्दीपितो देशधर्माध्वरवह्निः समुज्ज्वलः ।
पूजनीयश्च सर्वेषां यथाशास्त्रं यथाविधि ॥ ३ ॥

नान्तरायभयात् त्याज्यो ब्राह्मणैर्यज्ञहव्यवाट् ।
निरोधनं वषट्कारैः कार्यमृत्विग्जनैररेः ॥ ४ ॥

भयभीतस्य निरयो नैव लोको निरामयः ।
निर्भयस्य च यः प्राप्यः स्थितस्यैव स्वकर्मणि ॥ ५ ॥

अनुष्ठितं निश्चयेन स्वकर्मपरिपालनम् ।
तुच्छीकृत्याखिलान् विघ्नान् तिलकेन महात्मना ॥ ६ ॥

विचाराचारयोरासीत् तिलकस्यैकरूपता ।
न संकटभयाद् धीरः कर्तव्याद् विमुखः क्वचित् ॥ ७ ॥

मासद्वयनिवासान्ते तिलकः केसरीगडात् ।
लब्ध्वा स्वास्थ्यं शरीरस्य केसरीगृहमाययौ ॥ ८ ॥

मन्येऽहमुचितं कर्तुं किंचित् सिंहावलोकनम् ।
तिलकस्य प्रयत्नस्य देशोद्धाराय भारते ॥ ९ ॥

देशोद्धारणकार्येषु प्राधान्यं तिलको ददौ ।
राजकारणभूयिष्ठसमुद्योगाय सर्वदा ॥ १० ॥

तद्राष्ट्रीयसभाभक्तिः प्राधान्येन प्रतीयते ।
तेनाङ्गीकृतकार्येषु पदत्यागादनन्तरम् ॥ ११ ॥

राष्ट्रसंसत्समारोहानुपतस्थे स वार्षिकान् ।
संसत्कार्यपुरस्कारः कृतस्तेन स्वपत्रयोः ॥ १२ ॥

मुम्बाप्रान्तसभाशाखाकार्यवाहपदस्थितिः ।
तिलकाय प्रदत्तासीद् मेथाप्रभृतिनेतृभिः ॥ १३ ॥

प्रादेशिकसमस्यानां विचाराय प्रवर्तिता ।
तिलकेन महाराष्ट्रे परिषच्छक्तिवर्धिनी ॥ १४ ॥

सभाधुरीणसंदेशं ग्रामीणेभ्यो निनाय सः ।
केसरीपत्रलेखैश्च परिषत्कृतनिर्णयैः ॥ १५ ॥

खिस्ताब्दे पञ्चनवते ह्यष्टादशशतोत्तरे ।
राष्ट्रसंसत्समारोहः संजातः पुण्यपत्तने ॥ १६ ॥

वृत्तं सविस्तरं पूर्वं ग्रन्थेऽस्मिन्नस्ति वर्णितम् ।
तस्मात् तिलककार्यस्य पुनरुक्तिस्तु नेष्यते ॥ १७ ॥

संवत्सरात् तु तिलकः कलकत्ताधिवेशनम् ।
गतस्तेन च वङ्गीयाः सुहृदस्तुष्टतां ययुः ॥ १८ ॥

घोषवंशसमुत्पन्नौ मोतीशिशिरसंज्ञकौ ।
संपादकौ पत्रिकाया बन्धू भागवतोत्तमौ ॥ १९ ॥

प्रापतुस्तौ महानन्दं तिलकस्याभिमानिनौ ।
सत्कृतस्तिलकः सर्वैः सुरेन्द्रप्रमुखैर्जनैः ॥ २० ॥

दृष्ट्वा तं परमं तोषं राष्ट्रभक्ताः सभागताः ।
व्यासपीठं समारूढं व्यानशुस्तालिवादनैः ॥ २१ ॥

युवैकस्तमुपेयाय वङ्गवेषविभूषितः ।
देउस्कर इति ख्यातो महाराष्ट्रकुलोद्भवः ॥ २२ ॥

'वङ्गवासी' वृत्तपत्रसंपादकशिरोमणिः ।
निपुणो वङ्गभाषायां वङ्गवाङ्मयसेवकः ॥ २३ ॥

दाक्षिणात्योऽकरोद् वार्तां दक्षिणस्वामिना सह ।
" देशेर् कथा " इति ग्रन्थः पुरा येन विनिर्मितः ॥ २४ ॥

स्नेहोऽभवद् महाराष्ट्रवङ्गयोः सुदृढस्तदा ।
भाविन्यान्दोलने दृष्टं वङ्गभङ्गस्य यत्फलम् ॥ २५ ॥

विनिश्चितं सभास्थानं सभाकार्यस्य चालकैः ।
खिस्ताब्दे सप्तनवते विदर्भेष्वमरावती ॥ २६ ॥

द्वापरात् संस्थिता यत्र विदर्भकुलदेवता ।
अम्बेति विश्रुता लोके भक्तसंतोषकारिणी ॥ २७ ॥

कृष्णोऽहरद् यत्कृपया विदर्भनृपनन्दिनीम् ।
शिशुपालं पराभूय रुक्मिणीं प्रमदोत्तमाम् ॥ २८ ॥

नेतृत्रयी विदर्भाणां प्रसिद्धाखिलभारते ।
मुधोळकरखापर्डेजोशीतिकुलनामकाः ॥ २९ ॥

गणेशः स्वागताध्यक्षः खापर्डेकुलदीपकः ।
रङ्गनाथः कार्यवाहो मोरोपंतः सहायकः ॥ ३० ॥

स्वयंसेवकसेनाया अगच्छन्नमरावतीम् ।
नागपूरस्थछात्राणां पथकानि डिसेंबरे ॥ ३१ ॥

मत्सहाध्यायिनो नैके गता राष्ट्रसभास्थलम् ।
सेवार्थं देशनेतृणां द्रष्टुकामा महोत्सवम् ॥ ३२ ॥

नाशक्नवमहं गन्तुं द्रष्टुं भारतसेवकान् ।
ख्यातानिति महद् दुःखमनुभूतं मया तदा ॥ ३३ ॥

उपायातां राष्ट्रगङ्गां गन्तुं स्नानाय दुर्बलः ।
अहमासं विषादेन मनो मे व्यथितं तदा ॥ ३४ ॥

अध्यक्षस्यासने श्रेष्ठे शंकरन् नायरः स्थितः ।
प्राशंसत् स्वागताध्यक्षो गणेशस्तं स्वभाषणे ॥ ३५ ॥

उमेशचन्द्रः संप्राप्तो लंदनादिह भारतम् ।
सभां जिगमिषुर्मार्गे रोधितो मल्लकापुरे ॥ ३६ ॥

स्थास्थ्याधिकृद्भिः, संदेशः प्राप्तः कार्यालये यदा ।
संक्रुद्धः स्वागताध्यक्षो रङ्गनाथश्च विस्मितः ॥ ३७ ॥

मोरोपंतस्तथान्ये च समुपेयुः कमिश्नरम् ।
जिल्हाविभागपदकस्य श्रेष्ठं सर्वाधिकारिणम् ॥ ३८ ॥

श्रुत्वा तदुक्तमखिलं ददावाश्वासनं च सः ।
मुख्याधिकारिसंमत्या करोमि भवदीप्सितम् ॥ ३९ ॥

नष्टेऽन्तराये वानर्जिः संप्रतस्थेऽमरावतीम् ।
आगन्तुं, जनसंमर्दो बाडनेरमुपस्थितः ॥ ४० ॥

आनीतः स्थानकात् तस्मात् बहुमानपुरःसरम् ।
जनैः स्वागतकारिण्याः सदस्यैश्चामरावतीम् ॥ ४१ ॥

सुरेन्द्रनाथो विख्यातो मालवीयः प्रसन्नवाक् ।
विद्वच्छिरोमणिर्वृद्धो न्यायमूर्तिश्च माधवः ॥ ४२ ॥

अन्येऽपि बहवः प्रौढा नानादिग्भ्यः समागताः ।
अम्बापुरीं मातृभूमिसेवाव्रतपरायणाः ॥ ४३ ॥

आतिथ्यकर्मनिपुणास्तेषां तोषाय येतिरे ।
उदाराश्च विनीताश्च विदर्भप्रान्तवासिनः ॥ ४४ ॥

प्रथमेऽह्नि सभाध्यक्षः शंकरन्नायरः सुधीः ।
स्वभाषणे ददौ दोषं मुम्बाप्रान्ताधिकारिणे ॥ ४५ ॥

अदण्ड्यानां दण्डनार्थं छलार्थं देशसेविनाम् ।
संकोचनार्थं लेखानां स्वातन्त्र्यस्य दुराग्रहात् ॥ ४६ ॥

स्वभाषणे मुक्तकण्ठं तिलकस्य गुणाः स्तुताः ।
नातुबन्ध्वोस्तथा गर्ह्या निन्दिता स्थानबद्धता ॥ ४७ ॥

उपस्थितानां सर्वेषां विषादविषयोऽभवत् ।
एको राष्ट्रसभामध्ये तिलकस्यानुपस्थितिः ॥ ४८ ॥

गोपालोपस्थितिर्जातः चर्चाया विषयस्तदा ।
तत्प्रदत्तक्षमापत्रं तथैव हि सभासदाम् ॥ ४९ ॥

गोपालेन कृतं कार्यमिग्लंदे यत् सविस्तरम् ।
स्पृहणीयं मया पूर्वग्रन्थभागे निवेदितम् ॥ ५० ॥

तथैव वर्णितं सर्वं क्षमापत्रप्रयोजनम् ।
विश्वस्य मित्रपत्रेषु यदुक्तं तेन लंदने ॥ ५१ ॥

वार्ताहराय पत्रस्य प्रमाणरहितं च तत् ।
दृष्ट्वा समर्पिता तेन क्षमा सरलबुद्धिना ॥ ५२ ॥

निन्दितेभ्योऽधिकारिभ्यः सैनिकेभ्यश्च वै तदा ।
खेदं च दर्शयामास वृथा ते दूषिता इति ॥ ५३ ॥

गोपालेन कृतं यत् तद् व्यसने समुपस्थिते ।
नोचितं देशभक्तस्य मनोदौर्बल्यदर्शकम् ॥ ५४ ॥

सभामुपस्थिताः केचिदाहुः सामान्यबुद्धयः ।
बभूवुः प्रतिकूलास्तं द्रष्टुं श्रोतुं च तद्वचः ॥ ५५ ॥

प्रतिकूलमतं दृष्ट्वा गोपालेन विनिश्चितम् ।
भवितव्यं सभास्थाने तूष्णीमिति विवेकिना ॥ ५६ ॥

नृसिंहाख्यः केळकरस्तिलके बन्धनस्थिते ।
संपादनधुरां स्कन्धे पत्रयोरवहद् मुदा ॥ ५७ ॥

भूत्वा प्रतिनिधिः प्राप्तः प्रथमं राष्ट्रसंसदम् ।
सदस्यैरादृतः सर्वैः सहर्षं च विलोकितः ॥ ५८ ॥

संभाषणं नृसिंहस्य सुरेन्द्रेण सहाभवत् ।
श्रुतं मदीयमित्रेण स्वयंसेवकधर्मिणा ॥ ५९ ॥

सतीर्थ्यो विश्वनाथाख्यो मह्यं सर्वं न्यवेदयत् ।
स सुरेन्द्रस्य सेवार्थं कार्यवाहैर्नियोजितः ॥ ६० ॥

सुप्रभाते सुरेन्द्रस्य निवासस्थानमाययौ ।
नृसिंहस्तं नमस्कृत्य कृताञ्जलिरभाषत ॥ ६१ ॥

अहं केळकरोपाह्वः केसरीपत्रलेखकः ।
स्वीकृतं तिलकादेशात् संपादकपदं मया ॥ ६२ ॥

स आकर्ण्य वचस्तस्य सुरेन्द्रो हर्षनिर्भरः ।
उवाच सहसोत्थाय स्थानात् " त्वामभिवादये " ॥ ६३ ॥

तिलकस्य त्यागमूर्तेः सुहृदं धैर्यशालिनम् ।
उक्तैवमकरोत् तस्य हस्तस्यान्दोलनं मुहुः ॥ ६४ ॥

समुज्ज्वलं देशभाग्यं मन्येऽहमिति सोऽब्रवीत् ।
यस्मिन् भक्ता विराजन्ते त्यागिनस्तिलकोपमाः ॥ ६५ ॥

तत्परास्तरुणा यत्र स्वार्थत्यागपुरःसरम् ।
राष्ट्रकार्यधुरं वोढुं यशस्तत्र सुनिश्चितम् ॥ ६६ ॥

प्रोत्साहितः सुरेन्द्रस्य नरसिंहः प्रशंसया ।
शनैः प्रकटयामास शल्यं स्वहृदये स्थितम् ॥ ६७ ॥

कारावासश्च बालस्य खल्वस्त्यन्यायमूलकः ।
राष्ट्रसंसद् वदत्वेवं प्रस्तावे सर्वसंमते ॥ ६८ ॥

उपस्थितानां सर्वेषां प्रबलेच्छां निवेदितुम् ।
राष्ट्रभक्तधुरीणाय विनतोऽहमिहागतः ॥ ६९ ॥

चर्चितो विषयोऽस्माभिः सुरेन्द्रः प्रत्युवाच ह ।
प्रश्ननिर्णयकारिण्या समित्यानुपचारतः ॥ ७० ॥

न्यायमूर्तेर्निर्णयस्य प्रतिकूलस्य दर्शनम् ।
मतस्यायोग्यमेवेति घटनाशास्त्रविन्मतम् ॥ ७१ ॥

ततः केळकरोऽपृच्छत् प्रतिबिम्बं कथं भवेत् ।
मतस्य सर्वलोकस्य सभाया अधिवेशने ॥ ७२ ॥

प्रत्युवाच सुरेन्द्रस्तमुपायस्तस्य विद्यते ।
शासनस्य निषेधाय प्रस्तावस्थापनं भवेत् ॥ ७३ ॥

पुरस्कृता च या तेन नीतिर्न्यायपथातिगा ।
अश्लाघ्या सा कृतं तेन दण्डनस्यावलम्बनम् ॥ ७४ ॥

स्वभाषणे च बालस्योल्लेखं स्पष्टं करोम्यहम् ।
दर्शयिष्ये निर्णयस्य चाखिलान्यायतां ततः ॥ ७५ ॥

आश्वासितः सुरेन्द्रेण नरसिंहो गृहं गतः ।
धन्यवादान् वितीर्यासौ ततो मुदितमानसः ॥ ७६ ॥

प्रस्तावः स्थापितस्तेन सद्यस्तदधिवेशने ।
सुरेन्द्रेण विचाराय राष्ट्रसंसत्सभासदाम् ॥ ७७ ॥

शासनेन स्वीकृताया नीतेर्दोषाः प्रदर्शिताः ।
जनसंतापदायिन्यास्तेन निर्भयवृत्तिना ॥ ७८ ॥

व्याधेरुपशमोपाया जातास्तेऽपायकारकाः ।
सैनिकानां तु ताम्राणां स्वैरोद्दामप्रवृत्तिभिः ॥ ७९ ॥

आततायिजनैः क्रोधाद् निहतावधिकारिणौ ।
संशयग्रस्ततां सर्वे गता राज्यप्रचालकाः ॥ ८० ॥

आश्रिता तैर्दण्डनीतिः सर्वेषां दमनाय च ।
नातुबन्धू स्थानबद्धौ कृतावाङ्ग्लाधिकारिभिः ॥ ८१ ॥

निरुद्धा बन्दिशालायां वृत्तपत्रप्रकाशकाः ।
सह संपादकैः सर्वे राजद्रोहेण दूषिताः ॥ ८२ ॥

तिलकाय ददौ रुद्राचिर्दण्डं सार्धसमावधिम् ।
कारागृहनिवासं स न्यायाधीशश्च सश्रमम् ॥ ८३ ॥

उच्चै राष्ट्रसभापीठात् सुरेन्द्रो वाग्मिनां वरः ।
सावेशं भावनायुक्तं प्राह गद्गदया गिरा ॥ ८४ ॥

हृदयं बन्दिशालायां राष्ट्रभक्तस्य संनिधौ ।
स्थितोऽहं देहमात्रेण मण्डपे राष्ट्रसंसदः ॥ ८५ ॥

स्वार्थत्यागं च धैर्यं च देशभक्तिमलौकिकाम् ।
प्राशंसत् तिलकस्यासौ सुरेन्द्रो निजभाषणे ॥ ८६ ॥

जयघोषैस्तालिनादैः सभास्थानं निनादितम् ।
दीर्घकालं भाषणान्ते भारतीयबृहस्पतेः ॥ ८७ ॥

स घोषो भारतस्थानामाङ्ग्लराज्याभिमानिनाम् ।
यथैव धार्तराष्ट्रानां हृदयानि व्यदारयत् ॥ ८८ ॥

सुसंपन्नं सभासत्रमम्बापुर्यां यशोन्वितम् ।
आत्मानं तत्र नेतारः कृतकृत्यांश्च मेनिरे ॥ ८९ ॥

खापर्डे स्वागताध्यक्षः सभान्तेऽतिप्रसन्नधीः ।
जगदम्बां हृदि ध्यात्वा प्रणतोऽस्मीत्युवाच सः ॥ ९० ॥

यस्याः स्मृत्या च नामोक्त्या राष्ट्रोद्धारक्रियादिषु ।
न्यूनं संपूर्णतां याति वन्दे तामम्बिकामहम् ॥ ९१ ॥

व्यजानात् तिलकः सर्वं मोचनानन्तरं सुधीः ।
यद् भूतममरावत्यां सभाया अधिवेशने ॥ ९२ ॥

तस्य राष्ट्रसभाभक्तिश्चोदिता वार्तयानया ।
प्रेरयामास गन्तुं तं मद्रासनगरं प्रति ॥ ९३ ॥

मेलनं देशभक्तानां वार्षिकं चाधिवेशनम् ।
भाविराष्ट्रसभायाश्च काङ्क्षे भवदुपस्थितिम् ॥ ९४ ॥

एवं निमन्त्रयामास तिलकं नरपुङ्गवम् ।
मद्रासस्वागताध्यक्षः सादराग्रहपूर्वकम् ॥ ९५ ॥

दक्षिणाशाप्रवासाय तिलकः कृतनिश्चयः ।
द्रष्टुं राष्ट्रसमारोहं देवतायतनानि च ॥ ९६ ॥

यशसे राष्ट्रकार्यस्य ब्रह्मक्षत्रसमन्वयः ।
यत्नः संपादनीयोऽस्ति राष्ट्रयज्ञपुरोहितैः ॥ ९७ ॥

दिसेंबरान्तिमे भागे पुण्यग्रामात् प्रतस्थिरे ।
तिलको राष्ट्रभक्ताश्च दक्षिणाशां विलोकितुम् ॥ ९८ ॥

प्रस्थानदिवसं ज्ञात्वा तिलकस्याग्निवाहने ।
मद्रासं प्रति लोकास्तं स्थानके द्रष्टुमागताः ॥ ९९ ॥

अर्पयित्वा पुष्पमालाः संप्रदायफलानि च ।
जयकारेति शब्दैस्ते पूरयामासुरम्बरम् ॥ १०० ॥

रात्रावपि स्थानकेषु प्रमुखेषु समुत्सुकाः ।
सोपायनाः समागच्छन् महात्मानं दिदृक्षवः ॥ १०१ ॥

तिलकस्य प्रवासेऽस्मिन् निद्रासौख्यं सुदुर्लभम् ।
आराधनाय लोकानां रात्रौ जागर्ति संयमी ॥ १०२ ॥

मद्रासस्थानके सर्वो भव्यप्रस्तरचत्वरः ।
प्रेक्षकैस्तरुणैर्बालैर्वृद्धैश्चाकीर्णतां गतः ॥ १०३ ॥

ययौ प्रतिनिधिस्तत्र मुख्यः स्वागतसंसदः ।
अन्ये सदस्याः पौराश्च मद्रासप्रान्तवासिनः ॥ १०४ ॥

नानासुवर्णपुष्पाणि तस्य मूर्धन्यवाकिरन् ।
सौभाग्याभरणा नार्यो माल्यस्रग्भूषितालकाः ॥ १०५ ॥

हिमगृहेति विख्यातं वङ्गार्णवतटस्थितम् ।
तिलकस्य निवासाय स्थानं रम्यं नियोजितम् ॥ १०६ ॥

आङ्ग्लराज्यस्थापकेन क्लाईव्हेन विनिर्मितम् ।
इदं गृहं निवासाय मद्रासनगरे पुरा ॥ १०७ ॥

यत्र तेन कृतो मन्त्रो विजेतुं भारतं पुरा ।
तिलको मित्रसंयुक्तस्तस्मिन् स्थाने व्यचिन्तयत् ॥ १०८ ॥

भारतस्य विपन्नस्य स्वातन्त्र्यप्रतिपत्तये ।
पन्थानमिति कालस्य दुर्ज्ञेयास्ति गतिः खलु ॥ १०९ ॥

लखनौवृत्तपत्रस्य वर्माख्यो लेखकः सखा ।
तिलकस्यावसत् तत्र सहवाससुखेप्सया ॥ ११० ॥

सभाधिवेशनस्थाने प्रत्युत्थानं सभासदः ।
तिलकाय ददुः सर्वे सभापतिसभाजनाः ॥ १११ ॥

आनन्दमोहनो बोसो निपुणो राजकारणे ।
वङ्गदेशे ख्यातनामा सभाध्यक्षपदस्थितः ॥ ११२ ॥

प्रश्नान् विचार्य निर्णेतुं समितिर्या नियोजिता ।
तत्सदस्येषु तिलकः प्रामुख्येन व्यराजत ॥ ११३ ॥

न किंचिद् भाषितं तेन सभाया अधिवेशने ।
काराक्लिष्टशरीरस्य दौर्बल्यं तस्य कारणम् ॥ ११४ ॥

मीमांसितं सभामौनं मत्सरग्रस्तलेखकैः ।
नानाकुतर्कभूयिष्ठविधानैः सत्यलोपिभिः ॥ ११५ ॥

केचिद् वदन्ति बालेन दत्तः शब्दोऽधिकारिणे ।
पश्चाद् बन्धविमुक्तेश्च भाषणं न करोम्यहम् ॥ ११६ ॥

अत एव सभास्थाने तेन मौनं समाश्रितम् ।
मद्रासे राष्ट्रभक्तानां राजकीयमहोत्सवे ॥ ११७ ॥

अन्ये कुतर्किणः प्राहुः सभायां वक्तुमुद्यतः ।
तिलकः सुजनैः कैश्चिदुपन्यासाद् निवारितः ॥ ११८ ॥

कलङ्किता सभा मा भूत् राजद्रोहिजनोक्तिभिः ।
सुजनैरिति हेतोः स स्वसंकल्पाद् निवर्तितः ॥ ११९ ॥

प्रलापाः सकला एते कल्पिता अल्पबुद्धिभिः ।
तिलकद्रोहिभिः क्षुद्रैः पुण्यपत्तनवासिभिः ॥ १२० ॥

राजकारणमित्राणि मठमन्दिरचालकाः ।
चक्रुस्तिलकसंमानं सोत्साहं च कुलस्त्रियः ॥ १२१ ॥

ततो निमन्त्रयामास तिलकोऽपि सुहृज्जनान् ।
भव्ये हिमगृहे क्लाईव्हनिर्मिते भोजनाय वै ॥ १२२ ॥

पदवीभूषिताः सर्वे तत्रस्थाः शैववैष्णवाः ।
नादन्नन्नमेकपङ्क्तौ तस्मिन् ब्राह्मणभोजने ॥ १२३ ॥

विप्रास्तामिलदेशस्था रूढाचाराभिमानिनः ।
नोल्लङ्घयन्ति पन्थानं पारंपर्यक्रमागतम् ॥ १२४ ॥

महाराष्ट्रजनैः सर्वैर्मद्रासनगरस्थितैः ।
शिष्टाः कर्तुं समाहूता बालेन सह भोजनम् ॥ १२५ ॥

समापन्नः समारम्भो सानन्दं भव्यमन्दिरे ।
सर टी. माधवाख्यस्य मन्त्रिवर्यस्य सुन्दरे ॥ १२६ ॥

तंजावरस्थिते राज्ञि वेङ्कटेशे प्रशासति ।
गताः कुटुम्बिनोऽनेके महाराष्ट्रात् तदिच्छया ॥ १२७ ॥

राज्ञः कृपाप्रसादेन प्रतिष्ठां शीघ्रमाप्नुवन् ।
तत्रत्यवेषभूषादीन् स्वीचक्रुस्ते शनैः शनैः ॥ १२८ ॥

संरक्षिता मातृभाषा मराठी तैः प्रयत्नतः ।
गृहे नित्योपयोगेन काव्यानां वाचनेन च ॥ १२९ ॥

गणकानां पुस्तकेषु तथा शासनकर्मसु ।
योजितासीद् मराठी सा प्रायशो दक्षिणापथे ॥ १३० ॥

चोलकेरलपाण्ड्येषु कर्णाटेषु च दृश्यते ।
आयव्ययादिपत्रेषु लिखितेषु नृपाज्ञया ॥ १३१ ॥

समारम्भस्यावसाने माधवस्य सुतो ददौ ।
सुवर्णनिर्मितं हारं तिलकाय च सादरम् ॥ १३२ ॥

सभाया राष्ट्रभक्तानामूर्ध्वं तदधिवेशनात् ।
क्रमो दक्षिणयात्रायास्तिलकेन विनिश्चितः ॥ १३३ ॥

यात्रायै प्रस्थिता विप्रास्तिलकेन सह त्रयः ।
विधिभिर्धर्मशास्त्रोक्तैरपाकर्तुमृणत्रयम् ॥ १३४ ॥

सुशब्दो यो वासुदेवो ज्योतिर्विच्च महाङ्करः ।
शुचिरेकः पाकसिद्ध्यै द्विजो धर्मपरायणः ॥ १३५ ॥

आदौ जग्मुः कुम्भकोणं पीठमृग्वेदिनां महत् ।
ईशं ते पूजयामासुर्जगृहुश्चाशिषः सताम् ॥ १३६ ॥

दक्षिणस्यां दिशि प्रायो विरलाः सन्ति बह्वृचः ।
तद्वेदाध्यायिनस्तत्र वसन्ति तु कृतश्रमाः ॥ १३७ ॥

मत्पिता श्रीहरिर्नाम वैदिकैस्तत्र पूजितः ।
तथैव तत्पितुर्बन्धुः कृष्णाख्यो वेदपाठकः ॥ १३८ ॥

ताम्रधातुमयं पात्रं कुम्भकोणात् पितानयत् ।
तेजःपुञ्जं दृष्टिरम्यं वल्गुचित्रसुशोभितम् ॥ १३९ ॥

समानेतुं जलं नद्या गङ्गास्नानादनन्तरम् ।
उपायुयोज तत्पात्रमुदकप्राशनाय च ॥ १४० ॥

सद्दर्शनेन सुप्रीतः कुम्भकोणोत्तमाङ्गजान् ।
प्रमुक्तकण्ठं प्राशंसद् वेदवेदाङ्गपारगान् ॥ १४१ ॥

श्रुत्वा तेषां मन्त्रघोषं पावनं पापनाशनम् ।
सत्पात्रेभ्यो ब्राह्मणेभ्यस्तिलको दक्षिणां ददौ ॥ १४२ ॥

त्यक्त्वा क्षेत्रं कुम्भकोणं तंजावरपुरं ययौ ।
महाराष्ट्रीयभूपानां राजधानीं पुरातनीम् ॥ १४३ ॥

शिवभूपस्य जनकः शहाजी क्षत्रियोत्तमः ।
अकरोत् सर्वकर्णाटं म्लेच्छभूपाज्ञयाङ्कितम् ॥ १४४ ॥

भूपो देशव्यवस्थायै शहाजीराजमादिशत् ।
व्यंकोजी तत्पदं प्राप शहाजौ जनके मृते ॥ १४५ ॥

दुर्बले यवने भूले प्रतापाच्च शिवभूपतेः ।
यवनानामङ्कितत्वं व्यङ्कटेश उदक्षिपत् ॥ १४६ ॥

व्यंकोजीभूपतेरूर्ध्वमारूढाः सप्तवंशजाः ।
राजसिंहासनं तत्र शशासुर्न्यायतः प्रजाः ॥ १४७ ॥

नष्टराज्या आङ्ग्लकाले दीनास्तद्राजवंशजाः ।
गतश्रियोऽपि राजन्ते पुर्यां सर्वजनादृताः ॥ १४८ ॥

धर्मविद्याकलानां च सदोत्कर्षाय येतिरे ।
नृपास्तंजावरक्षेत्रे भोसलेवंशभूषणाः ॥ १४९ ॥

धर्मशालाः पाठशालाः नाद्यशालाश्च निर्मिताः ।
निर्मितानि च हर्म्याणि देवतायतनानि च ॥ १५० ॥

प्रजाहितरतैर्भूपैस्तैर्गोब्राह्मणपालकैः ।
उदारै रसिकैः सुज्ञैर्वैकोजीवंशसंभवैः ॥ १५१ ॥

ध्वंसशीलाश्च जीर्णत्वाद् राजप्रासादभित्तयः ।
व्याधिग्रस्तवयोवृद्धनराणां तनवो यथा ॥ १५२ ॥

तिलको वै राजहर्म्याद् वृतश्च पुरवासिभिः ।
राजपूरुषचित्राणि संददर्श सभागृहे ॥ १५३ ॥

संग्रहं हस्तलिखितग्रन्थानां सुव्यवस्थितम् ।
प्राप्नोत् परमसन्तोषं दृष्ट्वा सर्फोजिभूपतेः ॥ १५४ ॥

दर्शनाय गताः सर्वे शिवलिङ्गस्य मन्दिरम् ।
यत्रासीद् विश्वविख्यातो नन्दी पाषाणनिर्मितः ॥ १५५ ॥

मूर्तिं सुलक्षणोपेतां शिल्पज्ञा वर्णयन्ति ताम् ।
कृतिं शिल्पकलायाश्च मनोज्ञामुत्तमां तथा ॥ १५६ ॥

सुशोभिता मन्दिरस्य भित्तयश्चातिसुन्दरैः ।
आलेख्यै रञ्जितैर्वर्णैर्नयनाह्लाददायिभिः ॥ १५७ ॥

नाट्यस्याकृतयस्तत्र महाद्वारे शिलार्पिताः ।
दृश्यन्ते शिल्पकाराणां शास्त्रप्रावीण्यसूचकाः ॥ १५८ ॥

धर्मविद्याकलानिष्ठा भारतस्येह दृश्यते ।
अत्युज्ज्वलस्वरूपेणेत्यवोचत् तिलकस्तदा ॥ १५९ ॥

विख्यातां त्रिचनापल्लीं समित्रस्तिलकोऽव्रजत् ।
क्लैंव्हेनोच्छ्रापितो यत्र प्रथमाङ्ग्लजयध्वजः ॥ १६० ॥

शिलोच्चयस्थितं तत्र संपूज्य गणनायकम् ।
समतिक्रम्य कावेरीं श्रीरङ्गं तिलको ययौ ॥ १६१ ॥

प्राकारैः सप्तभिर्युक्तं गगनस्पर्शिगोपुरम् ।
मन्दिरं भुवि वैकुण्ठं परमं शेषशायिनः ॥ १६२ ॥

तिलकः पूजयामास श्रीरङ्गस्वामिनं हरिम् ।
अनुग्रहाय भक्तानां वैकुण्ठस्थमिहागतम् ॥ १६३ ॥

मन्दिरं विस्तृतं भव्यं सहस्रस्थूणमण्डपम् ।
शिल्पकौशलसंपन्नं सप्तगोपुरमण्डितम् ॥ १६४ ॥

काष्ठपर्यङ्कगोष्ठैश्च समृद्धं रथशालया ।
नित्यं निनादितं शङ्खमृदङ्गपटहस्वनैः ॥ १६५ ॥

सुसंपन्नमलंकारैर्मुक्तारत्नविनिर्मितैः ।
महाद्वारगजक्रीडाद्योतितक्षेत्रवैभवम् ॥ १६६ ॥

भक्त्या विलोक्य तत् सर्वं यात्रिको धन्यतां गतः ।
वैकुण्ठदर्शनेनाहमिति मत्वा प्रसीदति ॥ १६७ ॥

विधीन् समाप्य यात्रायास्त्रयः क्षेत्रात् प्रतस्थिरे ।
पांडीचरीं गन्तुकामाः पथिकास्तिलकादयः ॥ १६८ ॥

आङ्ग्लराष्ट्रप्रतिस्पर्धि फ्रेंचराष्ट्रं महाबलम् ।
बोनापार्टजितं सर्वं यूरोपं रूसवर्जितम् ॥ १६९ ॥

आधिपत्यं स्थापयितुं भारते द्वौ कृतोद्यमौ ।
आङ्ग्लफ्रेंचौ तयोर्मध्ये आङ्ग्लः प्राप यशो महत् ॥ १७० ॥

फ्रेंचानामाधिपत्यस्य विद्यते स्थानपञ्चकम् ।
पुरी पांडीचरी तेषां राजधानी विराजते ॥ १७१ ॥

विख्याताः फ्रेंचतत्त्वज्ञा राज्यक्रान्तिप्रवर्तकाः ।
प्रणाली तद्विचाराणां शासनक्रान्तिकारिणी ॥ १७२ ॥

लोकैः कृता महाक्रान्तिस्तद्विचारानुयायिभिः ।
राजसिंहासनं नष्टं प्रवृत्तं लोकशासनम् ॥ १७३ ॥

गमनस्य तु बालस्य तत्रोद्देशः प्रधानतः ।
फ्रेंचाङ्कितप्रदेशस्य लोकस्थितिनिरीक्षणम् ॥ १७४ ॥

भारतीययुरोपीयसंघर्षस्तत्र कीदृशः ।
शासितुः शासितानां च भेदस्तत्रास्ति वा न वा ॥ १७५ ॥

उच्चज्ञानप्रदानस्य प्रथा तत्रास्ति कीदृशी ।
विद्यते किं च शालासु शास्त्राध्ययनमाध्यमम् ॥ १७६ ॥

कृता किं सार्वभौमेन भागिनी शासने प्रजा ।
दत्त्वा प्रतिनिधित्वं च प्रजायै विधिमण्डले ॥ १७७ ॥

पौरजानपदानां वै स्वातन्त्र्यानुभवः कथम् ।
समृद्धा वा दरिद्रा वा प्रजायाः कीदृशी दशा ॥ १७८ ॥

एवमादिविधाः प्रश्नास्तिलकस्य पुरः स्थिताः ।
उपयुक्तं च तज्ज्ञानं कर्तुं शासनयोस्तुलाम् ॥ १७९ ॥

संभाषणेन शिष्टैश्च चिन्तनेनात्मनस्तथा ।
पठनेन च पत्राणां ज्ञानं सर्वमपेक्षितम् ॥ १८० ॥

विद्यार्थिनः फ्रेंचभाषापटुत्वप्रापणे रताः ।
राजभाषेति सा भाषा तत्स्थाने मान्यतां गता ॥ १८१ ॥

नासीत् तत्रोत्सुकः कोऽपि विज्ञातुं चाङ्ग्लवाङ्मयम् ।
यथा न भारते कोऽपि फ्रेंचज्ञानोत्सुको जनः ॥ १८२ ॥

कपर्दिकातिक्षुद्रापि व्यवहारेऽधिगच्छति ।
मूल्यं च राजमान्यत्वाद् राजा गौरवकारणम् ॥ १८३ ॥

निर्वाचनस्याधिकारो पांडीचरिनिवासिनाम् ।
प्रतिनिध्योर्द्वयोरासीत् फ्रेंचानां विधिसंसदि ॥ १८४ ॥

भारतस्य प्रतिनिधिर्नास्त्याङ्ग्लानां च संसदि ।
लक्षितस्तिलकेनासौ विशेषः फ्रेंचशासने ॥ १८५ ॥

स्वदेशे सन्ति फ्रान्सस्थाः प्रजाराज्यैकपक्षिणः ।
तथापि जितदेशेषु तस्मात् तत्त्वात् पराङ्मुखाः ॥ १८६ ॥

नीतिरेका युरोपीयव्यवहारेषु दृश्यते ।
अन्येषां व्यवहारेषु भिन्ना तत्त्वविरोधिनी ॥ १८७ ॥

न घोषणेन तत्त्वानां स्वभावपरिवर्तनम् ।
तपसैव भवेच्छुद्धिर्ज्ञानिभिः कथ्यते मुहुः ॥ १८८ ॥

न भोगासक्तचित्तानां तपः साध्यं कदाचन ।
तपोहीना तु गीर्भाति क्षुद्रा चर्पटपञ्जरी ॥ १८९ ॥

तिलकस्य मते नेष्टा सामान्यमनुजस्थितिः ।
पारतन्त्र्ये न विद्येत राष्ट्रोत्कर्षः कदाचन ॥ १९० ॥

तिलकः फ्रेंचभूमिं तां दृष्ट्वा गन्तुं मनो दधे ।
श्रीमीनाक्षीवासपूतां मदुरां नेत्रसुन्दराम् ॥ १९१ ॥

परीवृतः सुहृद्भिश्च प्रययौ मदुरापुरीम् ।
राजधानीं नायकानां दिदृक्षुः परमेश्वरीम् ॥ १९२ ॥

देव्या देवालयं तत्र सप्तगोपुरशोभितम् ।
नभश्चुम्बि महाद्वारं मण्डपांश्च ददर्श ह ॥ १९३ ॥

मूर्तीश्च देवतादीनां स्थिताः स्तम्भेषु मन्दिरे ।
देवागारस्थितां देवीं रत्नालंकारशोभिनीम् ॥ १९४ ॥

पूजितां च स्तुतां मन्त्रैर्ब्राह्मणैर्वेदपाठकैः ।
नीराजितां रत्नदीपैर्दिव्यतेजःप्रकाशिनीम् ॥ १९५ ॥

साष्टाङ्गां तिलकश्चक्रे भगवत्यै नमस्कृतिम् ।
प्रवृद्धान्तर्भक्तिभावः परमश्रद्धया युतः ॥ १९६ ॥

शिवालयं च तत्रत्यं सुब्रह्मण्यस्य मन्दिरम् ।
पञ्चक्रोश्यं मदूराया देवतायतने शुभे ॥ १९७ ॥

पूजिते दर्शनं कृत्वा तिलकप्रमुखैस्त्रिभिः ।
अनुगृह्णन्तु देवा न ऊचुस्ते नतमस्तकाः ॥ १९८ ॥

अनुग्रहं प्रसादं च गृहीत्वा हृष्टमानसाः ।
श्रीरामेश्वरयात्रायै प्रस्थानं चक्रिरे ततः ॥ १९९ ॥

अनःसु चोपविष्टास्ते समूढेषु वृषैस्त्रयः ।
मार्गं पांबनपर्यन्तं समाक्रान्ताः शनैः शनैः ॥ २०० ॥

सुशोभितं तालवृक्षैरुच्चैर्गगनचुम्बिभिः ।
पत्रच्छत्रधरैः पक्वफलमालामनोहरैः ॥ २०१ ॥

यात्रिका ननु विश्रान्त्यै स्थिताः पादपरूपिणः ।
सुफलानि करैर्धृत्वा देवदर्शनकाङ्क्षिणः ॥ २०२ ॥

अल्पान्तरं समुत्तीर्य नौकयोदधिमाविशन् ।
द्वीपं रामेश्वरं पुण्यं वरुणेन शिरोधृतम् ॥ २०३ ॥

इहैव सैकतं लिङ्गं पूजयामास राघवः ।
पिनाकपाणे रुद्रस्य लङ्काविजयहेतुना ॥ २०४ ॥

भाविका नित्यमायान्ति गङ्गायाः सलिलैः सह ।
शंकरं जाह्नवीतोयैरभिषिञ्चन्ति शाम्भवाः ॥ २०५ ॥

नयन्ति सैकतं सेतुं गङ्गायाः पूजनाय च ।
विद्यतेऽखण्डितोऽद्यापि क्रमस्त्रेतायुगागतः ॥ २०६ ॥

रामेश्वरः सेतुबन्धे केदारेशो हिमालये ।
मर्यादारक्षकावीशौ तस्थतुर्भारतस्य तौ ॥ २०७ ॥

वसन्ति भक्ता धर्माणां वेदयज्ञविरोधिनाम् ।
मर्यादाबाह्यदेशेषु लङ्काद्वीपादिभूमिषु ॥ २०८ ॥

संश्रुत्य मन्दिरे तत्र वेदपारायणध्वनिम् ।
शास्त्रचर्चां द्विजानां च सानन्दस्तिलकोऽभवत् ॥ २०९ ॥

तीर्थस्नानैः पितृश्राद्धैर्देवदर्शनपूजनैः ।
तिलको यापयामास तस्मिन् क्षेत्रे दिनत्रयम् ॥ २१० ॥

क्षेत्रस्थब्राह्मणैर्मुख्यैर्बहुमानपुरःसरम् ।
आदृतस्तिलकस्तद्वद् देवस्थानाधिकारिभिः ॥ २११ ॥

दाक्षिणात्या द्विजास्तत्र पौरोहित्यविचक्षणाः ।
प्राप्नुवन् गौरवस्थानं शतकाधिशतं समाः ॥ २१२ ॥

वेदपारंगतत्वेन दर्शनाध्ययनेन च ।
तपसा शुद्धशीलेन दैव्या च गुणसंपदा ॥ २१३ ॥

द्राविडान्ध्रमहाराष्ट्रकेरलेभ्य इहागताः ।
कर्णाटेभ्यश्च विद्वांसस्तिलकायाशिषो ददुः ॥ २१४ ॥

अज्ञानमकरग्रस्तः पादो धर्मस्य विद्यते ।
हत्वा नक्रं कुरु त्राणं धर्मस्यार्तस्य संप्रति ॥ २१५ ॥

तिलकाय समित्राय प्रदाय सुफलं तदा ।
अलिखत् पुस्तके दक्षस्तन्नामानि पुरोहितः ॥ २१६ ॥

सापत्यपरिवारस्य यजमानस्य लिख्यते ।
पूर्वजानामभिख्या च तीर्थवासिपुरोहितैः ॥ २१७ ॥

गोत्राणां च विनिर्देशस्तद्देशग्रामयोरपि ।
शकतिथ्यादिकालस्य संस्थानागमनस्य च ॥ २१८ ॥

ऐतिह्याध्यायिनां मन्ये संशोधनमहोद्यमे ।
तेषां पुस्तकनिर्देशा भवेयुरुपकारकाः ॥ २१९ ॥

मदुरायां कृतं दानं दानशूररघोजिभिः ।
पुस्तके लिखितं तत्र मन्दिरे विदितं मम ॥ २२० ॥

रामेश्वरस्य प्राकारे विविधा बहवः स्थिताः ।
देवालया देवतानां स्थापिता भक्तिमज्जनैः ॥ २२१ ॥

त्रिकालमर्चनं तेषां तन्त्रोक्तविधिना द्विजाः ।
कुर्वन्ति भक्तिभावेन निगमागमपारगाः ॥ २२२ ॥

श्रेयस्करं लक्ष्मणस्य कुण्डे मन्दिरसंनिधौ ।
सक्षौरं यात्रिकानां च स्नानमित्युच्यते बुधैः ॥ २२३ ॥

बिभीषणस्य रामस्य स्नेहरज्जुदृढीकृता ।
ग्रन्थिः प्रथमतो यत्र मन्दिरं तत्र तिष्ठति ॥ २२४ ॥

रामेश्वरं प्रणम्याथ धनुष्कोटीं प्रगच्छति ।
विलोकितुं रामसेतुं समुद्रं च समर्चितुम् ॥ २२५ ॥

वाल्मीकिना वर्णिता या सेतुबन्धकथा शुभा ।
संक्षिप्तां वर्णयिष्ये तां मुनिशब्दैर्यथामति ॥ २२६ ॥

कः सिन्धुतरणोपायो राम आह बिभीषणम् ।
प्रार्थनीयो जलनिधिर्भवतेति च सोऽब्रवीत् ॥ २२७ ॥

सेतुं विना प्रवेशस्तु लङ्कायामतिदुष्करः ।
वानराणामिति प्राह स्पष्टं लङ्केश्वरानुजः ॥ २२८ ॥

उवास त्रिदिनं रामो निरन्नो निर्जलोऽपि च ।
दर्भासीनोऽम्बुधेस्तीरे प्रार्थयन् वरुणालयम् ॥ २२९ ॥

अनायान्तं च तं दृष्ट्वा रामो लक्ष्मणमब्रवीत् ।
समुद्रं शोषयामीति श्रुत्वा तद्भीतिकातरः ॥ २३० ॥

उपेयाय समुद्रस्तं बद्धाञ्जलिरुवाच सः ।
न त्रासो वानराणां मत् तरणे वो भविष्यति ॥ २३१ ॥

अयं राम नलो नाम तनयो विश्वकर्मणः ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ २३२ ॥

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुमद्भुतं रोमहर्षणम् ॥ २३३ ॥

स नलेन कृतः सेतुः सागरे मकरालये ।
शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे ॥ २३४ ॥

वानराणां रामसेतुः समुद्रतरणे सुखः ।
नामसेतुर्नराणां च भवाब्धितरणे यथा ॥ २३५ ॥

स्फूर्तिप्रदोऽभवत् सेतुः कवीनां च कलाविदाम् ।
कृतं तैर्वर्णनं तस्य श्लेषोत्प्रेक्षोपमादिभिः ॥ २३६ ॥

लङ्काजयस्य रामस्य हननस्य च रक्षसाम् ।
रावणप्रभृतीनां वै सेतुः साक्षीव तिष्ठति ॥ २३७ ॥

परस्य हरते राज्यं स्त्रियं वा यो मदोद्धतः ।
अधोगतिं व्रजेत् पापः सेतुर्वदति नित्यशः ॥ २३८ ॥

सेतुः प्रयच्छति स्फूर्तिं राज्ञां दिग्विजयाय च ।
द्वीपान्तरे प्रसाराय धर्मस्यापि प्रतिष्ठितः ॥ २३९ ॥

नलकल्पितमालोक्य सेतुं लङ्काध्वदर्शकम् ।
तिलकस्य स्थिरीभूतो लङ्कागमननिश्चयः ॥ २४० ॥

विनिवृत्तास्त्रयस्तस्मात् सेतोस्ते भारतं प्रति ।
ज्योतिर्वेत्ता ततो देशं सभृत्यः कोङ्कणं गतः ॥ २४१ ॥

तिलको वासुदेवश्च 'जोशी' इत्युपनामकः ।
द्वावेव त्रिषु मित्रेषु लङ्काप्रस्थानतत्परौ ॥ २४२ ॥

अग्नियानेन संप्राप्तौ तुतीकोरीनपत्तनम् ।
लङ्काभिगामिनीं नौकामारूढौ तौ ततः परम् ॥ २४३ ॥

अहोरात्रे व्यतीते द्वे कोलम्बोपत्तनं प्रति ।
नौकायानेन संप्राप्तं लङ्काद्वीपविभूषणम् ॥ २४४ ॥

जगाम तिलको द्रष्टुं लङ्कां मरकतप्रभाम् ।
उदधिद्वीपराज्ञीं तां शंसितां कविपुङ्गवैः ॥ २४५ ॥

षष्टिवत्सरचक्रस्य संपूर्णं परिवर्तनम् ।
वर्षद्वयेन भविता लङ्कायास्तस्य दर्शनात् ॥ २४६ ॥

वसन्तौ मम लङ्कायां चतुःसंवत्सरावधौ ।
अपश्यं खलु विज्ञातॄन् तिलकागमनस्य वै ॥ २४७ ॥

दर्शितं तैस्तन्निवासस्थानं कोलम्बुपत्तने ।
तद्दर्शनेन संतोषं भारतीया अवाप्नुवन् ॥ २४८ ॥

संवादस्तिलकस्याभूद् बौद्धधर्मज्ञभिक्षुभिः ।
खिस्तानुगैः कृता तेभ्यो विज्ञाता बौद्धदुःस्थितिः ॥ २४९ ॥

आल्काटो बौद्धधर्मस्य तत्रारभत पण्डितः ।
धर्मजागरणोद्योगं सिंहलोद्धारहेतुना ॥ २५० ॥

अङ्गारिको धर्मपालो भिक्षुर्बौद्धमतानुगः ।
महाबोधीति विख्यातां स्थापयामास संसदम् ॥ २५१ ॥

श्रद्धामुत्पादयामास हृत्सु लङ्कानिवासिनाम् ।
धर्मे तथागतप्रोक्ते हीनयानेतिसंज्ञिते ॥ २५२ ॥

बौद्धो विनिन्दितो धर्मः खिस्तधर्मोपदेशकैः ।
लोकानामभवत् तेन स्वधर्मे च तिरस्कृतिः ॥ २५३ ॥

प्रतिषेधस्तु सिंहल्या उपयोगे कृतश्च तैः ।
विद्यालयेषु छात्राणां खैस्तसंचालितेषु च ॥ २५४ ॥

नित्यं ददति ते दीक्षां काथालीकोपदेशकाः ।
लोभोपहतचित्तेभ्यो जनेभ्यः खिस्तवर्त्मनः ॥ २५५ ॥

खिस्तीयमकरग्रासाद् बौद्धान् लङ्कानिवासिनः ।
बुद्धसंघो मोचयितुं प्रयत्नमुपचक्रमे ॥ २५६ ॥

लुप्तप्रायस्य धर्मस्य समुद्भूतो नवाङ्कुरः ।
प्रवृद्धोऽल्पेन कालेन पत्रपुष्पफलान्वितः ॥ २५७ ॥

पिता बुद्धानुगो माता खिस्तधर्मानुयायिनी ।
पुत्रो महंमदीयश्च वसन्त्येककुटुम्बके ॥ २५८ ॥

धम्मपदं बायबलं कुराणं च यथाक्रमम् ।
अधीते बौद्धः खिस्तीयो महंमदमतानुगः ॥ २५९ ॥

न तेषां काचिदापत्तिः सहवासेऽनुभूयते ।
काष्ठपृष्ठे भुञ्जते ते नित्यमन्नं कुटुम्बिनः ॥ २६० ॥

धर्मभेदेऽपि सर्वेषां सहपानं सहाशनम् ।
सहाचारविचाराभ्यां रम्यं च सहजीवनम् ॥ २६१ ॥

न बौद्धानां विधिः कश्चिद् विवाहस्य च विद्यते ।
अस्ति प्रथा कुटुम्बेषु लङ्कावासिषु केषुचित् ॥ २६२ ॥

वधूवरौ गच्छतः स्म मन्दिरं खिस्तधर्मिणाम् ।
नत्वोपदेशकं तत्र प्रार्थयेते शुभाशिषः ॥ २६३ ॥

नाधुना दृश्यते तत्र विरोधः ख्रैस्तबौद्धयोः ।
आङ्ग्लाधिपत्यलोपेन कलहः सोऽप्यलुप्यत ॥ २६४ ॥

धर्मप्रचारिणी वृत्तिर्नष्टप्रायाभवत् ततः ।
कथं धर्मलतावृद्धिः प्रोत्साहनजलं विना ॥ २६५ ॥

कोलम्बोपत्तनं स्थानं व्यवहारे महत्तमम् ।
पाश्चात्त्यवणिजां पूर्वदक्षिणाशाजनैः सह ॥ २६६ ॥

बह्व्यो नौकाः समायान्ति निर्गच्छन्ति च नित्यशः ।
विक्रेयवस्तुसंपन्नाः खाद्यपेयादिसंभृताः ॥ २६७ ॥

चहारबररत्नश्रीफलधातुविशेषकैः ।
पूर्णा नावो बहिर्यान्ति देशान् पूर्वापरास्थितान् ॥ २६८ ॥

वणिग्वृत्तिप्रातिकूल्याद् लङ्काद्वीपनिवासिनाम् ।
व्यवसाये स्थापितं च प्रामुख्यं चाङ्ग्लभारतैः ॥ २६९ ॥

सिन्धद्रविडकच्छेभ्यः श्रेष्ठिनस्त्वागता इह ।
वणिजो बहवो दक्षाः स्वे स्वे कर्मणि पारगाः ॥ २७० ॥

आयातनिर्गतक्षेत्रे व्यापारस्य न विद्यते ।
लङ्कावासिजनस्तेषां संपत्तिः परहस्तगा ॥ २७१ ॥

उत्पादने चहादीनामाङ्ग्लैर्द्रव्यव्ययः कृतः ।
तामिळश्रमिसाहाय्येन प्राप्ता सफलता च तैः ॥ २७२ ॥

चहोद्यानस्वामिनस्त इति क्लेशोऽनुभूयते ।
सिंहलैस्तत्प्रतीकारे प्रभवो न कदापि ते ॥ २७३ ॥

दुःसहा चाभवत् तेषां संवृद्धिः श्रमजीविनाम् ।
आनीता तां चहाक्षेत्रेष्वाङ्ग्लैस्तामिळदेशतः ॥ २७४ ॥

व्यजानात् तिलको बीजं क्लेशे व्यक्ते च सिंहलैः ।
वृक्षस्याप्रीतिरूपस्य लङ्काभारतयोस्तदा ॥ २७५ ॥

आसील्लङ्कोत्तरे भागे जाफनाद्वीपकल्पके ।
चतुर्लक्षाधिकाः शैवास्तामिळास्तीक्ष्णबुद्धयः ॥ २७६ ॥

पराक्रमपटू तेषां रामनाथारुणाचलौ ।
बुद्धिमन्तौ च लङ्काया नेताराविति विश्रुतौ ॥ २७७ ॥

कोलम्बोपत्तनात् क्यांडीं तिलकोऽगात् पुरीं तदा ।
लङ्काधिपतिवंश्यस्य राजधानीं पुरातनीम् ॥ २७८ ॥

धर्मक्षेत्रं च बौद्धानां विहारो यत्र वर्तते ।
बुद्धदन्तस्य पूज्यस्य विश्वेषां मङ्गलस्य च ॥ २७९ ॥

पद्मगन्धिसरोमध्यां वेष्टितां नगराजिभिः ।
उच्चस्थानस्थितां चैव नयनानन्ददायिनीम् ॥ २८० ॥

पुष्पिताग्रलतावृक्षाच्छादिताननपङ्कजाम् ।
करियूथक्षुण्णमार्गामपरामलकावतीम् ॥ २८१ ॥

अस्ति ग्रन्थालयो बुद्धदन्तदेवालये शुभे ।
पुराणः संग्रहः पालिग्रन्थानां तत्र दृश्यते ॥ २८२ ॥

लङ्कासिंहासने रेजुर्भूपा विद्याभिलाषिणः ।
विहारेषु वसन्ति स्म भिक्षवो राजपूजिताः ॥ २८३ ॥

पालिभाषाभिवृद्ध्यर्थं लङ्काभूपाः प्रयेतिरे ।
महावंशादयो ग्रन्था लिखिताश्च तदाश्रितैः ॥ २८४ ॥

अनुराधपुलस्त्यादिप्राचीननगरक्षयात् ।
क्यांडीकेन्द्रमभूल्लङ्कासंस्कृतेर्विश्वविश्रुतम् ॥ २८५ ॥

महावेलीगङ्गा विमलसलिला तत्र वहति
जले यस्या नित्यं विहरति निदाघे गजघटा ।
तटस्था भक्त्यार्द्राः कुसुमफलदानेन तरव–
स्तटिन्याः पूताया विदधति सपर्यां प्रतिदिनम् ॥ २८६ ॥

दृष्ट्वा गाङ्गाधरिः वयांडीं लङ्कायां मध्यवर्तिनीम्।
उवास तत्र कालस्य चिन्तयन् विषमां गतिम् ॥ २८७ ॥

अपश्यत् तिलकस्तत्र लङ्कां कविजनैः पुरा।
वर्णितां रामचन्द्रस्य कथायां ललितैः पदैः ॥ २८८ ॥

रावणस्य पुरीं रम्यां त्रिकूटोपरिसंस्थिताम्।
समुद्रपरिखागुप्तामशोकवनशोभिनीम् ॥ २८९ ॥

सीतादेवीस्नातपूतजलाशयतपस्विनीम्।
बुद्धपादाङ्कपाषाणशिरोगतनगोत्तमाम् ॥ २९० ॥

उद्दीप्तहनुमत्पुच्छज्वालाभिर्दग्धमन्दिराम्।
रावणादिवधध्वस्तविभवां शोकसंकुलाम् ॥ २९१ ॥

श्मशानस्थितिमापन्नामधर्माचरणेन च।
रावणस्य न्यायनीतिमार्गातिक्रमणेन च ॥ २९२ ॥

चातुर्वर्ण्यं जन्मसिद्धं लङ्काद्वीपनिवासिषु।
ददर्श तिलको नैव बालोद्वाहपरंपराम् ॥ २९३ ॥

जातिभेदो नैव दृष्टोऽस्पृश्यत्वं नावलोकितम्।
खाद्यपेये त्वनिर्बन्धस्तेन तत्र समीक्षितः ॥ २९४ ॥

अभावेऽप्युक्तदोषाणां लङ्काद्वीपनिवासिनः।
पतिताः पारतन्त्र्ये वै गर्तेष्विव मतङ्गजाः ॥ २९५ ॥

देशद्रोहश्च लोकानामज्ञानं बलहीनता।
हेतवः पारतन्त्र्यस्य स्वार्थित्वं चाधिकारिणाम् ॥ २९६ ॥

कृत्वा पूतं स्वसंचारैर्लङ्काद्वीपं मनोहरम्।
अवलोक्य च विज्ञाय लोकानां च परिस्थितिम् ॥ २९७ ॥

लङ्कायाः प्रतिनिवृत्त आयातुं जन्ममेदिनीम्।
पुण्यभूमिं महाराष्ट्रे तिलको मित्रसंयुतः ॥ २९८ ॥

तीर्थस्नानसुरार्चनादिविधिभिः सद्दर्शनैः पावनै-
रन्तर्बाह्यशुचिः समुद्रसलिलस्नातोत्थितोऽर्को यथा ।
आयातः स्वगृहं विवृद्धमहिमा त्यक्त्वा दिशं दक्षिणां
लोकानामभवत् तथैव तिलको वन्द्योऽभिगेयस्तव्रः ॥ २९९ ॥

यात्राविधानस्य स साङ्गतायै
देवार्चनं ब्राह्मणभोजनं च ।
कृत्वाक्षतान् वैदिकसंप्रदत्तान्
मन्त्रैर्युतांश्चाशिष आप सत्याः ॥ ३०० ॥

युयुत्साप्रधानप्रवृत्तेर्नरस्य
भवेद् दुःसहः काल एवास्त्रशून्यः ।
फणीवौषधीभिर्निरुद्धोग्रवीर्यो
विनष्टात्मशान्तिः सदा दुःखितात्मा ॥ ३०१ ॥

न वनवसतिकाले सायुधैः पाण्डुपुत्रै-
रधिगतमसुखं यत् तीव्रमज्ञातवासे ।
शमितरुगतशस्त्रैर्द्रौपदीरक्षणाय
नृपतिसदनमध्ये मत्स्यदेशेऽनुभूतम् ॥ ३०२ ॥

शरीरे मे दार्ढ्यं मनसि च नवोत्साह उदितो
विपद्ग्रस्तो लोकः प्रतिदिनमधोऽधः प्रविशति ।
चरन्ति स्वार्थान्धा अदयहृदया राजपुरुषाः
पुनः शस्त्रालम्बः समुचित इति प्राह तिलकः ॥ ३०३ ॥

इति माधवविरचिते श्रीतिलकयशोऽर्णवे दक्षिणदिग्यात्रावर्णनं नाम
पञ्चविंशस्तरङ्गः ।

## प्रथमः खण्डः समाप्तः

# टिप्पण्यः

[ अधोनिर्दिष्टेषु अङ्कद्वयेषु प्रथमः अङ्कः तरङ्गनिदर्शकः द्वितीयश्च श्लोकनिदर्शकः । ]

१. १०

**रक्तोष्णीषम्**— महाराष्ट्रभाषायां 'पगडी' इति ख्यातं शिरोभूषणम् ।

**अङ्गरक्षा**— महाराष्ट्रभाषायां 'अंगरखा' इति ख्यातं आस्कन्धजानुपर्यन्तं परिधानवस्त्रम् ।

१. १८

**मुकुन्दराजः**— महाराष्ट्रभाषायाः आद्यः कविः । स खिस्तोत्तरे द्वादशशतके बभूव इति ज्ञायते । 'विवेकसिन्धुः' इति तस्य वेदान्तविषयकः काव्यग्रन्थः सुप्रसिद्धः ।

**ज्ञानेशः**— महाराष्ट्रभाषाकविकुलगुरुः । स त्रयोदशशतके पुण्यपत्तनसमीपे आळंदीनाम्नि ग्रामे जातः । तत्रैव तस्य समाधिः । श्रीमद्भगवद्गीताभाष्यरूपः 'ज्ञानेश्वरी' इति तस्य काव्यग्रन्थः अतीव विख्यातः ।

१. १९

**नाथः**— एकनाथः इति संपूर्णं कविनाम । स प्रतिष्ठानपुरे षोडशशतकेऽभूत् । तस्य तत्रैव समाधिः । महाराष्ट्रभाषायां तेन नैके काव्यग्रन्थाः लिखिताः । तेषु 'भावार्थरामायणम्', 'नाथभागवतम्' इति च काव्यग्रन्थौ विद्वन्मान्यौ ।

**मुक्तः**—मुक्तेश्वरः, एकनाथस्य दौहित्रः । महाराष्ट्रभाषायां तेन रामायणमहाभारतकथाः वर्णिताः ।

**मयूरः**— मोरोपंत इति ख्यातः अयं महाराष्ट्रकविवरः । अष्टादशशतके करवीरनगरसमीपस्थे पर्णालदुर्गे तस्य जन्म । बारामतीग्रामे तेन स्वकाव्यप्रासादः व्यरचि । रामायणभारतभागवतग्रन्थाधिष्ठितानि तस्य काव्यानि वैशिष्ट्येन विलसन्ति । नैकेषु तस्य खण्डकाव्येषु 'केकावलिः' 'संशयरत्नावलिः' 'सन्मणिमाला' इत्येतानि रसामोदेन रसिकहृदयानि हरन्ति । 'आर्या मयूरस्य' इति सुवचनम् एव ।

**वामनः**— प्रथितयशाः महाराष्ट्रकविः विजापूरग्रामे सप्तदशशतके संजातः । शेषे इति तस्य उपनाम । तेन श्रीमद्भगवद्गीताया यथार्थदीपिका नाम टीका विरचिता । तथैव गीर्वाणगीतायाः महाराष्ट्रभाषायां समश्लोकी गीतापि लिखिता । तेन रामायणभारतभागवतादिपुराणग्रन्थेभ्यः तथैव संस्कृत काव्य-

ग्रन्थेभ्यः उत्तमोत्तमाः कथाः मधुमधुरया गिरा गीर्यन्ते स्म । 'सुश्लोकः वामनस्य' इति वचनं महाराष्ट्रभाषायां प्रसिद्धम् ।

तुका— श्रीविठ्ठलभक्तश्रेष्ठः तुकारामः । देहूग्रामे सप्तदशशतके बभूव । तेन परमार्थ-व्यवहारपराः 'अभङ्गाः' सहस्त्रावधि रचिताः ।

दासः रामदासः, 'समर्थः' इति उपपदेन विश्रुतः । शिवभूपस्य स सद्गुरुः । 'दासबोधः' इति तस्य भक्तिज्ञानकर्मबोधकः विख्यातः ग्रन्थराजः । सज्जनगडे तस्य समाधिः ।

जनी— जनाबाई, विठ्ठलभक्तशिरोमणेः नामदेवस्य गृहे निवसन्ती सापि विठ्ठल-भक्त्यां रतासीत् । तया नैकाः भक्तिसाराः अभङ्गाः महाराष्ट्रवाण्यां लिखिताः ।

दासो— दासोपंतः षोडशशतके बेदरराज्ये नारायणपेठग्रामे अजायत । स दत्त-दिगम्बरोपासकः । 'गीतार्णवः' इति तस्य सपादलक्षमितः ओवीछन्दोबद्धः महाकाव्यग्रन्थः महाराष्ट्रभाषायां प्रकाशते ।

श्रीधरः— नाझरे इति ग्रामे तस्य जन्म सप्तदशशतके । तस्य 'हरिविजयः', 'पाण्डवप्रतापः', 'शिवलीलामृतम्', इत्यादयः ग्रन्थाः प्रतिदिनं प्रतिगृहं प्रतिमन्दिरं च पठ्यन्ते ।

नामदेवः— श्रीज्ञानेशस्य समकालीनः कविः । श्रीपाण्डुरङ्गभक्तिरतः महान् कीर्तनकारः । शीखानां 'ग्रन्थसाहेब' इति धर्मग्रन्थे अपि तस्य अनेके अभङ्गाः उद्धृताः ।

बहिणा— बहिणाबाई, महाराष्ट्रभाषायां सुप्रसिद्धा कवयित्री तुकारामशिष्या ।

देवनाथः— विदर्भदेशे प्रसिद्धः भक्तकविः ।

गुलाबः— गुलाबराव इति विदर्भदेशे ख्यातनामा साधुश्रेष्ठः कविः ।

श्रीवासुदेवो यतिः— श्रीवासुदेवानन्दसरस्वती इति नाम्ना विश्रुतः दत्तो-पासकः यतिश्रेष्ठः ।

तांबे— भास्करराव तांबे, अर्वाचीनः महाराष्ट्रकविः ।

बी— गुप्ते इत्युपनामकस्य अर्वाचीनस्य महाराष्ट्रकवेः इदं लेखनीनाम ।

केशवसुतः— कृष्णाजी केशव दामले, सुविख्यातः अर्वाचीनः महाराष्ट्रकविः ।

१. २०

माधव— माधव नारायण डाऊ इतिनामा 'विनोदलहरी' काव्यस्य रचयिता ।

१. २१

चन्द्रपुरे— मध्यप्रदेशे 'चांदा'नाम्नि प्रसिद्धे नगरे ।

ताम्हन— महामहोपाध्यायाः केशव गोपाल ताम्हन इति प्रसिद्धाः नागपूरस्थ-मॉरिसमहाविद्यालयस्य प्राचार्याः ।

१. २२

**नृसिंहः**— 'साहित्यसम्राट्' इति बिरुदेन विश्रुताः नरसिंह चिंतामण केळकर महोदयाः 'तिलकचरित्र' लेखकाः ।

१. २३

**श्रीनिवासः**— श्रीनिवास आप्पाजी महाराज धुमे वणीग्रामनिवासिनः ।

१. २४

**लोकगुरोः**— लोकमान्यतिलकस्य ।

२. ४

**धर्मासनम्**— न्यायालयः ।

**वादिप्रतिवादिनौ**— plaintiff and defendant.

२. ७

**भार्गवभूः**— परशुरामेण पश्चिमस्यां दिशि जनाधिवासाय निर्मितो भूप्रदेशः 'कोङ्कण' इति प्रसिद्धः ।

२. १०

**पुच्छतारा**— धूमकेतुः । 'शेंडेनक्षत्र' इति महाराष्ट्रभाषायाम् ।

२. १३

**आरात्रिकम्**— 'आरती' इति महाराष्ट्रभाषायाम् ।

२. १४

**रत्नागिरी**— कोङ्कणदेशे ख्याता नगरी ।

२. १८; २. २४

**शाहूराजः**— शिवनृपस्य संभाजिनाम्नः ज्येष्ठपुत्रस्य पुत्रः ।

**बाळाजिर्विश्वनाथिः**— शाहूराजेन पेशवेपदे नियुक्तः । बाळाजी विश्वनाथ भट इति तस्य नाम । 'पेशवे' इति प्रधानमन्त्रिपदम् । तस्य ज्येष्ठः पुत्रः बाजीरावः प्रथमः, द्वितीयः पुत्रः चिमाजीअप्पा ।

२. २७

**गुर्जरे**— गुजरातदेशे ।

**मालव**— माळवा इति देशनाम ।

**मराठा**— नैतत् जातिनाम । किन्तु महाराष्ट्रदेशे निवासिनः सर्वेऽपि 'मराठा' इति संज्ञया ज्ञायन्ते ।

**कृष्णा**— विख्याता नदी ।

२. ३४

**राजप्रासादः**— 'शनिवारवाडा' नाम पुण्यपत्तनस्थं पेशवेनिवासस्थानम् ।

२. ३५

**खोजा**— माहंमदीयः संप्रदायविशेषः ।

पारसीकाः— झरथुष्ट्रानुयायिनः पारशी इति ख्याताः ।
मुम्बाद्वीपपुरी— मुंबई, मुम्बापुरी, मोहमयी, Bombay.

२. ३७
ताम्राः— सर्वे यूरोपीयाः ताम्राः इति नाम्ना उच्यन्ते ।

३. १
पङ्कग्रामः— चिखलग्रामनाम तिलकान्वयस्य कोङ्कणदेशे मूलवसतिस्थानम् ।

३. ३
खोतीवृत्तिः— कोङ्कणे भूमिस्वाम्यविशेषः ।

३. ८
मामलेदारः— तालुका इति विषयस्य अधिकारी ।

३. १०
पदच्युतः बाजिरावः— द्वितीयः बाजीरावः अन्तिमः पेशवेपदधारी ।

३. १३
सदाशिवः— सदाशिवरावभाऊ इति नाम्ना प्रसिद्धः चिमाजी आप्पाख्यस्य पुत्रः ।
विश्वासः— बाळाजि बाजीरावस्य पुत्रः ।
अब्दालिः— अहमदशहा अबदाली इति नाम्ना प्रसिद्धः अफगाणिस्थाननृपतिः ।

३. १८
बाळाजिः— प्रथमबाजीरावस्य ज्येष्ठः पुत्रः ‘नानासाहेब’ इति उपाधिना ख्यातः पेशवा ।
पर्वतीमन्दिरम्— पुण्यपत्तनसमीपे बाळाजिना निर्मितं गिरिस्थितं शिवालयम् ।

३. २६
रूप्यकः— रुपया, Rupee, इत्यर्थे विनियुक्तं पदम् ।

४. ६
गुणनिकाघोषः— प्रतिदिनं विद्यार्थिभिः कार्यं संख्यापठनम् । ‘पाढे म्हणणें’ इति महाराष्ट्रभाषायाम् ।

४. १७
वसुशैलाश्वभूमिते शकाब्दे— शके १७७८ तथा १८५६ खिस्ताब्दे ।

४. १९
व्यतरत् शर्करां तदा— तिलकस्य पिता पुत्रजन्मोत्सवनिमित्तेन शर्करां जनेभ्यः ददौ । एतादृशं शर्करावितरणम् आनन्दस्य लक्षणम् ।

४. २६
पादविक्षेपयन्तं— अशुद्धम् इदं रूपम् ।

४. २७
आई, ताई, माई, बाबा— एता बालकस्य मातृ-स्वसृ-पितृ-द्योतकाः चाटूक्तयः ।

४. २९

गृहीत्वा फलकं...— दारुमयफलके (महाराष्ट्रभाषायां धूळपाटी इति) पांसुभिर्न्यस्ते वंशलेखन्या अक्षरोपन्यासकरणस्य पुरातनपद्धतिः ।

४. ३१

कोशः— अमरकोशः ।

४. ३७

शालास्थविद्यार्थिपरीक्षणम्— तिलकपितुः गङ्गाधरस्य विद्यार्थिशालापरीक्षकत्वेन नियुक्तिः । Inspector of Schools.

पुण्या पुरी— पुण्यपत्तनं, पुणें, पुण्यग्राम, पुण्यपुरी, पुण्यक्षेत्रम् ।

४. ४६

लाडघर— इति ग्रामनाम ।

४. ५२

बाळशास्त्री— बाळ गङ्गाधरशास्त्री जांभेकर ।

दादोबा— दादोबा पाण्डुरङ्ग तखडकर ।

४. ५७

जीवत्सु तातपादेषु...— उत्तररामचरितम् १. १९.

४. ६१

सकलविषयज्ञाननिलयम्— विद्यापीठं, विश्वविद्यालयः वा ।

५. १

डेक्कन्कॉलेज्— पुण्यपत्तनस्थः शासकीयः महाविद्यालयः । 'पूना कॉलेज' इति तस्य प्राचीनं नाम ।

५. ४

मिस्र— Egypt.

असुर— Assyria.

ब्रह्म— Burma.

सयाम— Thailand.

यवद्वीपसमूहः— अधुना जावाप्रमुखद्वीपानि Indonesia इति संज्ञिते देशे समाविष्टानि ।

५. ७

कलाविज्ञानसंज्ञके शाखे— Arts and Science Faculties.

५. ११

प्राचार्यः— प्राध्यापकः इत्यर्थः ।

अध्यायः— अध्ययनम् ।

सामुदायिकजीवनम्— Residential Life.

५. १८

**सहावनं समं भुक्तिः**— अनेन श्लोकेन ‘सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै’ इति औपनिषदस्य शान्तिमन्त्रस्य निर्देशः क्रियते।

५. १९

**केरूनाना**— केरोपंतः, नाना, इत्यादिनामभिः छत्रे गणिताचार्यः डेक्कन महाविद्यालये प्रसिद्धः।

५. २०

**वर्डस्वर्थः**— डेक्कन महाविद्यालयस्य प्राचार्यः। सुविख्यातस्य आङ्ग्लकवेः पौत्रः।

५. २१

**शूटः**— डेक्कन महाविद्यालये अर्थशास्त्र-इतिहास-नीतिशास्त्रविषयाणां प्रसिद्धः प्राध्यापकः।

**कीलहॉर्नः**— डेक्कन महाविद्यालये संस्कृतप्राध्यापकः, ‘पातञ्जलमहाभाष्य-’ संपादकः।

**पिटरसनः**— डेक्कन महाविद्यालये संस्कृतप्राध्यापकः।

५. २७.

**कन्दुकक्रीडाः**— Tennis, Cricket, Hockey, Foot-ball, इत्यादिकाः।

५. २९.

**मल्लस्कम्भः**— ‘मलखांब’ इति महाराष्ट्रभाषायाम्।

**नदीसंतरणम्**— नौकाक्रीडा। Boating.

**मल्लयुद्धम्**— ‘कुस्ती’ इति महाराष्ट्रभाषायाम्। Wrestling.

**दाजिः**— दाजी आबाजी खरे नाम्ना मुम्बापुरीस्थे उच्चन्यायालये विश्रुतः विधिज्ञः, तिलकस्य सुहृत्तमः।

५. ३६.

**एमे**— M. A.

५. ३७.

**विधिविद्यालयम्**— Law School.

५. ३८.

**ऐशावीयेऽथ वर्षे स ग्रहाश्ववसुभूमिते**— १८७९तमे ख्रिस्ताब्दे।

**एलेल् बी**— LL. B.

५. ४०.

**गुपितम्**— कूटप्रश्नार्थे महाराष्ट्रभाषायां उपयोजितः शब्दः।

५. ४५.

**आगरकरः**— गोपाल गणेश आगरकर, तिलकस्य सुहृत्तमः । 'सुधारक' पत्रस्य संपादकः ।

**शार्ङ्गपाणिः, उपासनी**— तिलकस्य सुहृत्तमौ ।

५. ४६.

**मुमुक्षुभिः**— राजकारणदृष्ट्या स्वातन्त्र्यलिप्सुभिः ।

६. ४

**राज्ञ्या आदेशतः**— एलिझाबेथनाम्नी आङ्ग्लानां राज्ञी । तस्या आज्ञया ।

६. ५

**इस्टिण्डिया कम्पनी**— East India Company.

६. ६

**बाजीरावे पदच्युते**— द्वितीये बाजीरावे पदभ्रष्टे सति ।

६. ७

**मद्रपुरी**— मद्रासनगरम् ।

६. १५

**नन्दक्षये**— नन्दराजकुलस्य नाशे । 'नन्दान्तं क्षत्रियकुलम्' ।

६. २८

**विवेकानन्दः**— नरेन्द्रनाथ दत्त इति नाम्ना प्रथमं प्रसिद्धः । रामकृष्णपरमहंसस्य शिष्योत्तमः । संन्यासानन्तरं विवेकानन्द इति नाम्ना ख्यातः ।

**दयानन्दः**— 'आर्यसमाज' संस्थापकः ।

**विष्णुबोवा**— विष्णुबोवा ब्रह्मचारी इति नाम्ना विख्यातः हिन्दुधर्मोपदेष्टा ।

६. २९

**मॅडम् ब्लवत्स्की**— Madam Blavatsky, Founder of Theosophy.

६. ३२

**राममोहनकेशवौ**— राजा राममोहन रायः, केशवचन्द्रः सेनोपाह्वः च, ब्राह्मसमाजस्य पुरस्कारिणौ ।

६. ३३

**रामकृष्णः**— भगवान् रामकृष्णः परमहंसः ।

६. ३४

**शिकागोपत्तनम्**— अमेरिकादेशे शिकागो नाम प्रसिद्धं नगरम् । तत्र सर्वधर्मपरिषद् १८९२ खिस्ताब्दे अभवत् । तत्र भारतस्य प्रतिनिधित्वेन स्वामी विवेकानन्दः उपस्थितः आसीत् ।

६. ३८

माधवः— न्यायमूर्तयः महादेव गोविंद रानडे महोदयाः, महाराष्ट्रविदुषाम् अग्रगण्याः । 'महादेव'नामानः सन्तः अपि महाराष्ट्रे 'माधवरावाः' इति विश्रुताः । 'सर्वज्ञः स हि माधवः' इति तद्विषयका तिलकस्य उक्तिः ।

६. ५२

दिल्लीपतिम् — 'बहादुरशहा'नामकम् ।

महाराष्ट्रस्य भूपतीन् — महाराष्ट्रस्य संस्थानाधिपान् ।

६. ५४

देवेन प्रेषिताः — cf. Divine Dispensation.

६. ५७

कालीस्थाने— कलकत्तानगरे ।

६. ५८

सशस्त्रोत्थानम्— १८५७ तमे खिस्ताब्दे जातः स्वातन्त्र्यसमरः ।

६. ६०

पूर्वभारतमण्डलम्— East India Association.

६. ६१

स्वमण्डलम्— Bombay Presidency Association.

६. ६२

सभा— 'सार्वजनिक सभा' इति नाम्ना प्रसिद्धा ।

६. ६६

नूलकराभिधः – कृष्णाजी लक्ष्मण नूलकर ।

भारतश्रेष्ठसंसद्— Imperial Legislative Council.

६. ६८

देशमूखः— गोपाळ हरि देशमुख, 'लोकहितवादी' इति प्रसिद्धः ।

६. ७१

चिपळूणकरः कृष्णः— कृष्णशास्त्री चिपळूणकरः, विष्णुशास्त्रिणः पिताः ।

६. ७२

गणेशः— गणेश वासुदेव जोशी, 'सार्वजनिक काका' इति नाम्ना प्रसिद्धः ।

६. ७३

अण्णा किर्लोस्करः— महाराष्ट्रभाषायाः आद्यः नाट्यलेखकः । 'सौभद्र, शाकुंतल', इत्यादीनि तस्य नाटकानि प्रसिद्धानि ।

६. ७४

अण्णाख्यः— महर्षि अण्णासाहेब पटवर्धन ।

६. ७८

**वासुदेवाख्यः** – वासुदेव बळवंत फडके इति नाम्ना प्रसिद्धः आङ्ग्लसत्ताप्रतिद्वन्द्वी सशस्त्रक्रान्तिकारकः ।

६. ८०

**विश्रामबाग** – पेशवेपदस्थानां विश्रामप्रासादः ।

**बुधवाराख्यः**— 'बुधवारवाडा' नाम पेशवेप्रासादः ।

६. ८६

**निबन्धमाला**— विष्णुशास्त्रिचिपळूणकरेण महाराष्ट्रभाषायां प्रतिमासं प्रकाशितं पत्रम् ।

७. १

**गोपालः**— गोपाळ गणेश आगरकर ।

**तत्सखा**— तत्सखो इति वाच्यम् ।

७. ८

**बीएपदम्**— B. A. Degree.

**एमेपदम्**— M. A. Degree.

७. २७

**बलवता**— तिलकेन । तिलकमहोदयाः महाराष्ट्रभाषायां 'बळवंतराव' इति नाम्ना अपि विश्रुताः ।

७. ३३

**न पत्नीस्थानीयाः स्त्रियः**— लोकाराधनं एव यज्ञः । तस्मिन् यज्ञकर्मणि या सहकार्यं कुर्यात् सा एव पत्नी भवितुं अर्हति न इतरा ।

७. ४१

**कौटिल्यः**— 'अर्थशास्त्र'स्य कर्ता । चन्द्रगुप्तमौर्यस्य प्रधानमन्त्री । मुद्राराक्षसनाटके ( १. २६ ) 'बुद्धिस्तु मा गान्मम' इति तस्य उक्तिः ।

७. ५४

**भूगोलगर्भयोः**— भूगोलशास्त्रं भूगर्भशास्त्रं च तयोः । Geography and Geology.

७. ५८

**नूतनाङ्ग्लोच्चशाला**— New English School, Poona.

७. ६२

**स्नातकाः**— Graduates.

७. ६६

**चतुर्थं साधनम्**—Fourth Estate of the Realm.

**प्रातराशः**— Breakfast.

८. २

**उत्कः**— उत्कण्ठितः ।

८. ३

**शून्याष्टवसुभूमिते**— १८८० खिस्ताब्दे ।

**विद्यालयः**— New English School, Poona.

८. १३

**गुरुवेत्रचतुष्पदी**— Professorial Chair.

८. १४

**मालाकारः**— विष्णुशास्त्री चिपळूणकरः, 'निबन्धमाला'- संपादकः ।

८. १५

**नवविद्यानिकेतनम्**— New English School, Poona.

८. २०

**जगन्नाथशंकरश्रेष्ठिनामिका**— जगन्नाथ शंकरशेठ संस्कृतशिष्यवृत्तिः । अस्याः प्रापणं महाराष्ट्रे अतीव गौरवास्पदं मन्यते ।

८. २३

**कुंटे**— महादेव मोरेश्वर कुंटे, शासकीयपाठशालायाः मुख्याध्यापकः ।

**मोडक**— वामन आबाजी मोडक, अपरः मुख्याध्यापकः ।

८. २८

**न जातु काकशापेन धेनुः कालवशा भवेत्**— 'कावळयाच्या शापानें गाय मरत नाहीं' इत्येतस्य महाराष्ट्रभाषा-आभाणकस्य संस्कृतीकरणम् ।

८ २९

**वृद्धस्य चरितं चिन्त्यम्**— भवभूतेः उत्तररामचरितनाटके (५. ३५) लवेन प्रोक्तं – 'वृद्धास्ते न विचारणीयचरिताः' इति ।

**नाक्रोशात्....गजः**— 'Let the dogs bark, the caravan goes on', इत्येतस्य आङ्ग्लाभाणकस्य संस्कृतीकरणम् ।

८. ३४

**भास्करनामा एकः**— भास्कर विष्णु जोशी, पश्चात् Oriental Translator इति अधिकारपदं प्राप्तवान् ।

८. ३७

**अपरान्तिकः**— कोङ्कणप्रदेशात् आगतः ।

८. ३८

**तेलंगः**— काशीनाथ त्र्यम्बक तेलंगाख्यः न्यायमूर्तिः ।

**मंडलीकः**— विश्वनाथ नारायण मंडलीक, सुविख्यातः विधिज्ञः ।

८. ३९

**रामकृष्णः**— रामकृष्ण गोपाल भांडारकर।

८. ४३

**किताबखाना**— इति नाम्ना प्रसिद्धः ग्रन्थविक्रयालयः।

८. ४५

**मयूरेश्वरसद्मनि**— 'मोरोबादादा वाडा' इति विश्रुते पेशवेकालीने हर्म्ये।

८. ४९

**मराठ्याः शीवाजिः**— विष्णुशास्त्रिचिपळूणकरस्य इदं विश्रुतं बिरुदम्। Shivaji of the Marathi language.

८. ५०

**ओङ्कारेश्वरम्**— इदं पुण्यपत्तनसमीपस्थं श्मशानम्।

९. ३

**संभाजिः**— शिवभूपस्य ज्येष्ठः पुत्रः।

९. ४

**राजारामः**— शिवभूपस्य द्वितीयः पुत्रः।

**धनाजिः**— महाराष्ट्र-सेनानीः।

९. ७

**स्वभगिनी**— 'झेबुन्निसा' नाम्नी।

९. ८

**नगरम्**— अहमदनगरम्।

९. १३

**दालहौसिः**— Lord Dalhousie, Viceroy of India.

९. २३

**बर्वेवंशीयः माधवः**— माधवराव बर्वे, कोल्हापूर-संस्थानस्य अमात्यः।

९. २६

**गङ्गाजली**— कोशः, Treasury.

९. ३४

**लार्डः**— Mr. Lord, Resident of Kolhapur.

९. ४४

**सप्ततारम्**— 'सातारा' नगरस्य अपरं नाम।

९. ४५

**पुणेपूर्वं वैभवम्** — 'पुणे वैभव' इति नाम मराठीवृत्तपत्रम्।

९. ५४

वेब— Mr. Webb, Presidency Magistrate, Bombay.

प्रार्थनापत्रम्— Complaint.

९. ६०

उच्चन्यायासनालयम्— High Court.

९. ६२

लाथमः – Mr. Latham, High Court Judge, Bombay.

श्रवणतारिकाः – Dates for hearing. 'तारिका' इति 'तारीख' (date) इत्येतस्य संस्कृतीकरणम्।

९. ६३

न्यायपंचाः— Jurors.

९. ६४

इन्व्हरारिटिः— Mr. Inverarity, Bar-at-law.

९. ९७

डोंगरि— इति नाम मुम्बय्यां कारावासः।

९. १००

स्थानकम्— Railway Station.

१०. ७

गोपालः – गोपाल गणेश आगरकर।

१०. ८

वासुदेवः— वासुदेवराव केळकर।

महाविद्यालयम् – College.

१०. २२

वेडर्बर्न – Sir William Wederburn, M. P.

हिन्दसौजन्यसेवा – Indian Civil Service.

१०. २३

दक्षिणशिक्षाख्या संसद्— Deccan Education Society.

१०. २४

अब्धिदिक्पालवसुभूमिते – १८८४ तमे खिस्ताब्दे।

१०. २५

गद्रेवाडा— पुण्यपत्तनस्य शनिवारविभागे गद्रेवाडा इति हर्म्यं वर्तते।

१०. २८

दांडेकेळौ करोत्तरौ— दांडेकर; केळकर।

१०. ३१

फर्ग्यूसनः— Sir James Fergusson, Governor of Bombay.

१०. ३६

डेक्कन्‌शिक्षणसंस्था— Deccan Education Society.

१०. ३९

पी. ई.— Previous Examination : महाविद्यालयस्य प्रथमा परीक्षा ।

१०. ४२

पञ्चाशीतितमे...— १८८५ तमे खिस्ताब्दे । ह्यष्टादश–इति वाच्यम् ।

१०. ४५

मुख्याचार्यपदम्— Principalship.

१०. ५०

इन्दूराधिपमन्दिरम्— 'होळकरवाडा' इति नाम्ना पुण्यपत्तने प्रसिद्धं हर्म्यम् ।

१०. ५१

सौम्यसंज्ञकः प्रासादः— 'बुधवारवाडा' इति प्रसिद्धं हर्म्यम् ।

१०. ५६

चतुःशृङ्गी— पुण्यपत्तनसमीपस्थं जगदम्बायाः प्राचीनं गिरिवर्ति देवालयम् ।

हारिस— Lord Harris, Governor of Bombay.

१०. ५७

वर्षे द्वानवतितमे...— १८९२ तमे खिस्ताब्दे ।

११. ४

यावज्जीवसभासदः— Life Members.

११. १०

पञ्चाशीतितमे वर्षे ह्यष्टादशशतोत्तरे— १८८५ तमे खिस्ताब्दे ।

११. ११

उमेशः सभापतिः— उमेशचन्द्र बानर्जी नाम वङ्गनेता राष्ट्रसभाध्यक्षत्वेन वृतः ।

११. १३

कॉंग्रेस— राष्ट्रसभा ।

११. १६; ११. १९

सभायाः— राष्ट्रसभायाः, राष्ट्रीयसभायाः ।

११. १७

दादाभाई— दादाभाई नौरोजी, भारतप्रपितामहः, राष्ट्रसभासंस्थापकमुनित्रय्यां एको मुनिः ।

११. १८

वेडर्बर्न–ह्यूम— उदारमतवादिनौ आङ्ग्लौ राष्ट्रसभासंस्थापकेषु अवशिष्टौ द्वौ मुनी।

११. २२

डफरीनः— Lord Dufferin, Viceroy of India.

राजप्रतिनिधिः— Viceroy.

११. २५

प्रान्तेषु सभा— Provincial Conference.

११. ३६

हिमगिरेः मूले— सिमलानगरे।

११. ३९

पुणे जनसभा— सार्वजनिकसभा।

११. ४१

विषूचिकामयः— 'महामारी' इति महाराष्ट्रभाषायाम्। Cholera.

११. ४८

गोपालवामनौ— गोपाळ गणेश आगरकर तथा वामन शिवराम आपटे।

११. ५३

कायाधवः— कयाधूसुतः प्रह्लादः।

११. ५९

मल्बारिः— बेहरामजी मलबारी नाम प्रसिद्धः पारशीसमाजनेता। तेन बाल-विवाहनिर्बन्धः पुरस्कृतः।

११. ६३

समाजकारणम्— समाजसुधारणा इति महाराष्ट्रभाषायाम्। Social reforms.

राजकारणम्— Political reforms.

११. ६४

हस्तक्षेपः—Interference.

११. ६६

याज्ञवल्क्यः – प्राचीनः स्मृतिकारः।

११. ७४

संस्था – Deccan Education Society.

११. ७५

वासुदेवहरी— वासुदेवराव केळकर तथा हरि नारायण गोखले।

११.७६

सप्ताशीतितमे वर्षे ह्यष्टादशशताधिके— १८८७ तमे खिस्ताब्दे ।

११.७७

सुधारकम्— आगरकरप्रवर्तितं महाराष्ट्रभाषावृत्तपत्रम् ।

गोखले— गोपाल कृष्ण गोखले ।

११.८४

शिक्षासंस्था— Deccan Education Society.

११.८५

भानु— चिंतामण गंगाधर भानु ।

वामन— वामन शिवराम आपटे ।

गोपाल— गोपाळ कृष्ण गोखले ।

११.८७

संस्थावृत्तप्रबन्धः— दक्षिणशिक्षासंस्थायाः वार्षिकप्रतिवृत्तम् । D. E. Society's Annual Report.

११.९०

जेस्विटाः— 'जेसुइट' संज्ञकाः खिस्तधर्मप्रसारकाः । Jesuits.

११.१००, १०१

यत् करोषि...— भगवद्गीता ९. २७-२८.

११.११०

शिक्षासमितिः— Education Commission, 1882.

११.११३

घटनास्मृतिः— Constitution of the Deccan Education Society, Poona.

११ ११५

विमाद्रव्यम्— Insurance policy.

११.११९

उपाचार्यः— Assistant Professor.

११.१२८

ऋषिदिग्वसुभूमिते खिस्ताब्दे— १८८७ तमे खिस्ताब्दे ।

११.१६१

वाक्यमीमांसा— अयं आगरकरेण लिखितः व्याकरणग्रन्थः ।

११.१६२

पत्रापत्रि— Correspondence through letters.

इतिवृत्तम्— वार्षिकवृत्तान्तः ।

११. १६५

मूलपत्रम्— Original letter.

११. १७४

कृष्णवर्णप्रकर्षाय...— 'कोळसा उगाळावा तेवढा काळाच' इत्येतस्य महाराष्ट्रभाषा-आभाणकस्य संस्कृतीकरणम् ।

११. १७६

प्राचार्यः प्रथमः— First Principal.

११. १७९

संस्कृताध्यायदर्शकः— Apte's Guide to Sanskrit Composition.

११. १८२

वैद्यः— लक्ष्मण रामचंद्र वैद्य। अनेन महाभागेन संस्कृताङ्ग्लभाषायाः लघुकोशः विरचितः ।

११. २१८

अद्ययावज्ज्ञानम्— Up-to-date knowledge.

११. २५४

भारतसेवकः समाजः— Servants of India Society.

प्राणखग्रहभूमिते— १९०५ मिते खिस्ताब्दे ।

११. २५६

गान्धिना— मोहनदास करमचंद गान्धिना साबरमतीग्रामे तथा सेवाग्रामे आश्रमस्थापने भारतसेवकसमाजस्य तत्त्वानि स्वीकृतानि ।

११. २६४

सभासंस्थापकाः— Founders of the Deccan Education Society.

११. २६९

वैजनाथः— वैजनाथ काशीनाथ राजवाडे ।

गोपालः— गोपाळ कृष्ण गोखले ।

कर्झनः— Lord Curzon, Viceroy of India.

११. २७०

धुण्डिराजः— धोण्डो केशव कर्वे ।

परांजपे— रघुनाथ पुरुषोत्तम परांजपे ।

१२. १

आय् सी एस— Indian Civil Service.

१२. ८

रे— Lord Reay, Governor of Bombay.

१२. १९

**गुप्तचारदलाधिपः**— Head of the Bombay C. I. D.

१२. २५

**हनुमत्संज्ञकः**— हणमन्तराव इनामदार ।

१२. ३२

**मुळामुठाप्रवाहः**— पुण्यपत्तनसमीपे मुळामुठानाम्न्योः नद्योः संगमः ।

१२. ५२.

**शासनस्य प्रवादी**— Government Pleader.

१२. ५६

**हिन्दामात्यः**— Secretary of State for India; भारतमन्त्री ।

१२. ६८

**कबूतरखाना**— दक्षिणशिक्षासभायाः (D. E. Society, Poona) प्रशाला ।

१२. ८०

**डिग्बिः**— आङ्ग्ललोकसभायाः विश्रुतः सदस्यः ।

१२. ८२

**ब्राड्ला**— चार्लस् ब्राड्ला नाम आङ्ग्ललोकसभायाः सदस्यः ।

१३. २

**केळ्करः**— वासुदेव बालकृष्ण केळकर ।

**नारायणसुतो हरिः**— हरि नारायण गोखले ।

१३. ६

**प्रवादित्वपदाप्तिः**— High Court Pleadership.

१३. ८

**खानदेशः**— मुम्बईप्रान्तस्य एकः विभागः ।

१३. १२

**निजामशाहीसंस्थानम्** – निजामशासितसंस्थानं हैद्राबादसंज्ञकम् ।

**लातूर**— हैद्राबादसंस्थाने कश्चिद् ग्रामः ।

१३. १८

**भागिनेयो धुण्डिराजः**— धोण्डो वासुदेव विद्वांस, तिलकस्य भागिनेयः ।

१३. २४

**सहस्रबुद्धे...परांजपे**— एतौ लातूरयन्त्रशालायां तिलकस्य सहभागिनौ ।

१४. १३

**चिकीर्षा भावना ज्ञप्तिः**— Willing, Feeling, Knowing.

१४. १६

**गणकाः**— Accountant clerks.

१४. १९

**कच्छपटः**— 'कासोटा' इति महाराष्ट्रभाषायाम्। कच्छपटधृतिः नाम अतिचाटुकारः।

१४. २५

**शारदासदनम्**—पण्डितया रमया स्थापिता महिलासंस्था।

१४. २९

**बाजीरावः**— द्वितीयः बाजीरावः।

१४. ३१

**ब्रह्मावर्तम्**— कानपूरनगरस्य समीपे गङ्गातीरे ब्रह्मावर्तं नाम पुण्यक्षेत्रम्।

१४. ३४

**शिबिका**— 'पालखी' इति महाराष्ट्रभाषायाम्।

१४. ४१

**शूरसेनाः**— मथुराप्रदेशः।

**मरुधन्वानः**— मारवाडप्रदेशः।

१४. ४२

**पैठणम्**— पुरा प्रतिष्ठानं इति प्रसिद्धं नगरम्।

१४. ४३

**अभयंकरोपाह्वः** — अभ्यंकर इति उपनाम।

१४. ४४

**वेदवेदाब्दवयसे**— चतुश्चत्वारिंशद्वयसे।

१४. ४५

**गङ्गामूलाश्रमः** — अयम् आश्रमः मालहेरम्बनामकाद् ग्रामात् षष्ठे क्रोशे तुङ्गाभद्रयोः संगमे स्थिते गङ्गामूलग्रामे स्थापितः।

१४. ६०

**मेधावी**— बिपिन बिहारी मेधावी नाम प्रवादी, पण्डितायाः रमायाः पतिः।

१४. ६५

**आर्यमहिलासमाजः**— इयं संस्था पण्डितया रमया पुण्यपत्तने स्थापिता।

१४. ९०

**येशुः**— Jesus Christ.

१४. १०५

**प्रशासित्री समितिः** — Governing Council.

१४. ११८

**कर्वे**— धोंडो केशव कर्वे।

**शिंदे**— विठ्ठल रामजी शिंदे।

**ठक्कर**— अमृतलाल ठक्करबाप्पा।

१५. ७
नवाशीतितमे वर्षे अष्टादशशतोत्तरे— १८८९ तमे खिस्ताब्दे।

१५. १३
ग्रन्थिज्वरः — Bubonic plague.

१५. १५
मेथा— Sir Pherozeshah Mehta.

१५. २१
अधिवेशनवैशिष्ट्यम्— राष्ट्रसभायाः कालः १८८९ तमः खिस्ताब्दः, तस्यां सभायां प्रतिनिधिसंख्या अपि १८८९ एव, इति वैशिष्ट्यम्।

१५. २५
पंढरी— महाराष्ट्रदेशे पंढरपुरं नाम पुण्यक्षेत्रं यत्र श्रीविठ्ठलस्य मन्दिरं वर्तते।

१५. २६-२७
शिबिकामनुगामिनः— वारीकराः (वारकरी इति महाराष्ट्रभाषायां) नाम विठ्ठलभक्ताः यात्रिकाः प्रतिवर्षं ज्ञानेश्वरतुकारामयोः शिबिके आळंदीदेहू-क्षेत्राभ्यामारभ्य पद्भ्यां अनुगच्छन्तः आषाढमासे शुक्लपक्षे एकादश्यां विठ्ठलं द्रष्टुकामाः पंढरपुरं यान्ति।

१५. ३१
एकनवते अष्टादशशतोत्तरे— १८९१ तमे खिस्ताब्दे।

१५. ३३
वाच्छा— Sir Dinshaw Wacha.

१५. ३५
मालवीयः— महामनाः पण्डित मदनमोहन मालवीयः।

१५. ३७
घोषभ्रातरौ— मोतीलालः तथा शिशिरकुमारः द्वौ भ्रातरौ वङ्गदेशे 'अमृत-बझार-पत्रिका'याः वृत्तपत्रस्य ख्यातनामानौ संस्थापकसंपादकौ।

१५. ३८
वङ्गभङ्गप्रतीकारान्दोलनम्— वङ्गविभाजनस्य प्रतीकारार्थं कृतं महद् आन्दोलनम्।

१५. ५०
भिडेनामा— विष्णु मोरेश्वर भिडे।

१५. ६४
पञ्चाधिकनवत्यब्दे— १८९५ तमे खिस्ताब्दे।

१५. ६६
सभाम्— राष्ट्रसभाम्।

१६. २५

**अपाङ्क्तः**— जातिबहिष्कृतः ।

१६. २८

**जोशी**— गोपाळराव जोशी नाम पुण्यपत्तनस्थः गृहस्थः स्त्रीशिक्षणकार्ये अत्युत्साहवान् आसीत् ।

**आनन्दी**— गोपाळराव जोशी इत्येतस्य भार्या । तया अमेरिकां गत्वा एम्. डी. पदवी संपादिता ।

१६. ३२

**पंचहौदाख्यमिशनम्**— पुण्यपत्तनस्थं पंचहौदनामकं खिस्तधर्मीयमन्दिरम् ।

१६. ३८

**कषायपेयचषकाः**— 'चहा' नामकेन पेयेन पूरितानि पात्राणि ।

**बिस्किट**— Biscuit.

१६. ४८

**गोलिप्रक्षेपस्फोटः**— 'वायबार' इति महाराष्ट्रभाषायाम् । बन्दूकनामकात् प्रहरणात् कृतेन गोलिप्रक्षेपेण निर्मितः प्रचण्डध्वनिः ।

१६. ४९

**अब्रह्मण्यवार्तया**— धर्मविषयकस्य भ्रष्टाचारस्य वार्तया ।

१६. ५७

**बालमाधवयोः**— तिलकः रानडे च, तयोः ।

**कपिलाषष्ठियोगः**— 'कपिलाषष्टि' इति न साधु, 'कपिलाषष्ठी' इति वाच्यम् ।

१६. ६४

**ब्रह्मकूर्चोपवासः**— प्रायश्चित्तप्रकारः । "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत्प्रातः ब्रह्मकूर्चमिति स्मृतम्" ।

१६. ६९

**कृच्छ्रम्** – कृच्छ्रनामकः प्रायश्चित्तप्रकारः, यत्र उपवासः, दक्षिणप्रदानं, इत्यादिः विधिः कथ्यते ।

१६. ७०

**चान्द्रायणम्** – कश्चित् प्रायश्चित्तप्रकारः । प्रथमे पौर्णिमादिने पञ्चदश ग्रासान् भक्षयेत्, तदुत्तरं चन्द्रक्षयानुरोधात् प्रतिदिनं एकमेकं ग्रासं न्यूनं कृत्वा अमावास्यादिने उपवासं कुर्यात् । तदनन्तरं यथा चन्द्रकला वर्धते तथा प्रतिदिनं एकमेकं ग्रासं वर्धयेत् । पौर्णिमादिने पञ्चदश ग्रासान् भक्षयेत् । एतद् व्रतम् ।

**सान्तपनम्**— कश्चिद् व्रतविशेषः ।

१६. ७२.

सर्वप्रायश्चित्तं — सर्वसामान्यरूपस्य भ्रष्टाचारस्य कृते कार्यं प्रायश्चित्तम् ।

१६, ७३.

वरीवर्त्यनुशासनम् — श्रीमच्छंकराचार्याणां अनुशासनम् ।

१६. ७८.

कुरुंद्वाडकरौ — कुरुंदवाडनामकसंस्थानस्य द्वे शाखे, तयोः अधिपती ।

१६. ८०.

कानिट्करः — गोविंदराव कानिटकर ।

१६.९७.

जातिपंच — 'जात पंचायत' इति महाराष्ट्रभाषायाम् ।

१६. ११३

शीतोष्णं युगपत्... — to blow hot and cold in the same breath.

१६. १३८

सूर्यग्रहमिते... — १८९१ तमे खिस्ताब्दे ।

स्कोबलः— Sir Andrew Scoble, Member of the Imperial Legislative Council.

१६. १६२

टाइम्स— Times of India.

१७. १

श्रीसयाजीमहाराजः— 'बडोदे'नामकस्य संस्थानस्य अधिपः ।

वटोदरा— Baroda.

१७.१२

बिडालकः— Resident of Baroda.

१७.१६

भूमापनम्— Land Survey.

१७.१७

वासुदेवाभिधः— वासुदेव सदाशिव बापट इत्यसौ इलियटस्य सहायकः ।

१७. ३९

वासुदेवाभिधः— वासुदेवराव जोशी ।

१७. ६५

समुद्रग्रहदिक्पालभूमिते— १८९४ मिते खिस्ताब्दे ।

१७. ७६

आपटे— महादेव चिमणाजी आपटे, 'आनन्दाश्रम' संस्थापकः।

मेथाभाईशंकरश्च— मेथा भाईशंकरश्च इति वाच्यम्।

१७. ८८

दिवाणं— मुख्यामात्यम्।

१८. १०

संमीलितं— संमिलितम् इति अत्र शुद्धं रूपम्।

१८. २२

चतुर्दश्याम्— अनन्तचतुर्दश्याम्।

१८. २४

पटवर्धनवंशजाः— सांगली, मिरज, कुरुंदवाड, जमखंडी, इत्यादिसंस्थानामामधिपतयः। तेषां कुले गणपतिभक्तिः प्रकर्षेण दृश्यते।

१८. २७

आदाशग्रामः— विदर्भदेशे एकः ग्रामः।

१८. २८

चिंचवड— चिंचवडनामकः पुण्यपत्तनस्य समीपे ग्रामः, तत्र 'मोरया गोसावी' इतिनाम्ना साधुश्रेष्ठेन स्थापितं गणेशमन्दिरं वर्तते।

पुळे— रत्नागिरीसमीपे पुळे इतिनामकं समुद्रतीरस्थं क्षेत्रम्।

१८. २९

संकष्टीव्रतम्— प्रत्येकमासस्य कृष्णपक्षे चतुर्थ्याम् आचर्यमाणं गणपतिव्रतम्।

१८. ३०

विनायकव्रतम्— प्रत्येकमासस्य शुक्लचतुर्थ्याम् आचर्यमाणं गणपतिव्रतम्।

१८. ३८

गृत्समदः— ऋग्वेदद्वितीयमण्डलस्य ऋषिः।

१८. ३९

कम्बोज— Cambodia.

मलय— Malayasia.

यववालिसयामेषु— Java, Bali, Thailand.

१८. ४१

मध्यपातालदेशाः— Central American countries.

१८. ४८

बालसंगीतसंघाः— 'मेळा' इति महाराष्ट्रभाषायाम्।

१८. ४९

यष्टिद्वय— 'टिपऱ्या' इति महाराष्ट्रभाषायाम्।

१८. ५४

**महाकार्यस्य यशसे...** — "सामर्थ्य आहे चळवळीचें। जो जो करील तयाचें। परंतु तेथें भगवंताचें। अधिष्ठान पाहिजे" इति शिवगुरुणा रामदासस्वामिना 'दासबोध' इत्याख्ये स्वग्रन्थे उक्तम्।

१८. ५८

**मोरया**— 'मयूरेश्वर' इति गणपतेः नाम्नः 'मोरया' 'मोरया' इति महाराष्ट्रभाषायां संघघोषः।

१८. ६०

**मोहरम**— माहंमदीयानां धार्मिकोत्सवः।

१८. ६१

**मशीद्**— माहंमदीयानां प्रार्थनास्थानम्।

१८. ६५

**येवले**— येवले नाम ग्रामः नाशिकपुरस्य समीपे वर्तते।

१८. ६८

**त्रिनवतिमिते...** — १८९३ तमे ख्रिस्ताब्दे।

१८. ८९

**विभक्तीकरणात्...** — "Divide and Rule" Policy.

१८. ९५

**वर्षे हि पञ्चनवते...** — १८९५ तमे ख्रिस्ताब्दे।

१८. ११३

**दुर्गो रायगडः**— रायगडनामकः दुर्गः यत्र छत्रपतिः शिवाजीमहाराजः १६७४ तमे ख्रिस्ताब्दे राज्ये अभिषिक्तः।

१८. ११८

**भूषणादि...**— भूषणनामकः बुंदेलखण्डवासी महाकविः। तेन छत्रपतेः शिवाजीमहाराजस्य चरितं हिन्दीभाषायां रचितम्।

१८. १२८

**टेंपल्**— Sir Richard Temple, Governor of Bombay.

**डगलस**— Mr. Douglas, an English author.

१८. १३१

**गोविन्दः**— गोविन्द बाबाजी जोशी वसईकर। तेन रायगडविषयः ग्रन्थः लिखितः।

१८. १३५

**हिराबाग**— पुण्यपत्तने एकं विश्रामस्थलम्।

१८. १३७

चाफळस्वामी— चाफळ इतिनामा साताराविभागे एकः ग्रामः। तत्र रामदासस्वामिना राममन्दिरं निर्मितम्। तदधिष्ठाता स्वामी।

औंधाधिपः— औंधनामकस्य संस्थानस्य अधिपः। Ruler of Aundh.

१८. १३९

दाभाडे...— दाभाडे, कुरुंदवाडकर, इचलकरंजीकर, इत्येते संस्थानाधिपतयः।

विश्रामः— डॉ. विश्राम रामजी घोले, भिषग्वर्यः।

१८. १४५

राधे मासे— वैशाखमासे शुक्लपक्षे द्वितीयायाम्।

१८. १४८

येसाजि... — येसाजी, बाजी, तानाजी, इति शिवछत्रपतेः सेनाधिपाः। तेषां वंशजाः।

१८. १५३

उदयोऽस्तु— अयं भवानीपूजकानां देवीकृते जयघोषः।

१८. १६५

क्रामवेलः— Oliver Cromwell.

बोनापार्टः— Napoleon Bonaparte.

१८. १६६

शिवरामः— शिवराम महादेव परांजपे।

१८. १६७

कानिट्करः— नारायण बापूजी कानिटकर, इतिहासज्ञः।

१८. १९४

कृशोदरं... — द्रष्टव्यं-कालिदासरचितम् अभिज्ञानशाकुन्तलम् २. ५।

१८. १९७

यष्टिसंभ्रमणम्— 'लाठी फिरविणें' इति महाराष्ट्रभाषायाम्।

१८. १९८

खड्गप्रहाराः— 'दांडपट्टा' इति महाराष्ट्रभाषायाम्।

१८. २००

नायमात्मा— मुण्डकोपनिषद् ३. २. ४।

१८. २०६

गरुडः— धुळेनिवासी रावबहादुर धोंडो शामराव गरुड।

१८. २०७

बाणग्रहाख्यभूख्याते— बाणग्रहाष्टभूख्याते इति वाच्यम्। १८९५ तमे खिस्ताब्दे।

१८. २०९

पार्नैलः— Parnell, Irish patriot.

१८. २११

अर्थपत्रकम्— Budget.

१८. २१९

दक्षिणाभिधा समितिः— 'डेक्कन् सभा' इति नाम्ना प्रसिद्धा ।

१८. २२२

तिलकायनम्— नरसिंह चिन्तामण केळकरमहोदयैः महाराष्ट्रभाषायां लिखितं तिलकचरितम् ।

१८ २५५

चूर्णस्पर्शः— 'निवळी' इति महाराष्ट्रभाषायाम् ।

१८. २९५

दत्ताच्युतौ...— दत्तोपंत आपटे, अच्युत सीताराम साठे, पिंपुटकर, कारुळकर, परांजपे, इत्यादयः दुर्भिक्ष-आन्दोलने कार्यकर्तारः ।

१८. ३०२

गृहीतनालिकायन्त्राः— 'बंदुकधारी' इति महाराष्ट्रभाषायाम् । सशस्त्राः आरक्षकाः ।

१८. ३१३

पेणग्रामः— कुलाबाविभागे पेणनामकः ग्रामः ।

१८. ३१६

हेम्नः संलक्ष्यते...— रघुवंश १. १० ।

१८. ३५७

पञ्चनवाष्टैके— १८९५ तमे ख्रिस्ताब्दे ।

१८. ३६७

दातेकुलोद्भवः— श्रीधर विठ्ठल दाते ।

१८. ३७२

हावडा— Howrah.

१८. ३७६

अग्निगोलकस्फोटः— 'आपटबार' इति महाराष्ट्रभाषायाम् ।

१८. ३८७

भिडेवंशविभूषणः— विष्णु मोरेश्वर भिडे ।

१८. ३९९

भूधारणव्यवस्था— Land Revenue Settlement.

१८. ४०३

गुरुबाबागृहे— बाबामहाराजस्य प्रासादे।

१९. २२

वामनः— वामन शिवराम आपटे।

द्वानवताब्द...— १८९२ तमे खिस्ताब्दे।

१९. २७

वेदग्रहवसुब्रह्मामिते— १८९४ तमे खिस्ताब्दे।

१९. ३१

एल्फिन्स्टनमहाविद्यालयम्–Elphinstone College, Bombay.

१९. ३७

तन्नाटकस्य अनुवादः— "Taming of the Shrew" इत्येतस्य नाटकस्य "त्राटिका" इति नाम्ना महाराष्ट्रभाषायाम् अनुवादः।

१९. ४०

पञ्चनवताब्दे...— १८९५ तमे खिस्ताब्दे।

१९. ४३

टेंभू— टेंभू नाम ग्रामः कऱ्हाडसमीपे वर्तते।

१९. ४४

वसुमुन्यश्व...— शके १७७८, १८५६ खिस्ताब्दे।

१९. ४७

भागवतः— आगरकरस्य मातुलः।

१९. ४८

विष्णुनामा— विष्णु मोरेश्वर महाजनी।

१९. ७०

बीरग्रामः— बीरवाडी।

१९. ७५

किरणः— एतन्नामकं महाराष्ट्रभाषा-वृत्तपत्रम्।

दक्षिणतारकाम्— दक्षिणतारका इति वाच्यम्। 'Deccan Star' नाम आङ्ग्लभाषा-वृत्तपत्रम्।

१९. ८३

चतुर्न्यूनैकोन...— १८९६ तमे खिस्ताब्दे।

२०. १४

बडानगर— कलकत्तानगरस्य एकः विभागः।

२० १७

खांडवा— खांडवा नाम मध्यप्रदेशे प्रसिद्धं नगरम्।

२०. २८

**महाबलेश्वरम्**— गोकर्ण-महाबलेश्वरं नाम क्षेत्रम् ।

२०. ४१

**लङ्काद्वीपम्**— Ceylon.

२०. ५०

**रामकृष्णदयासङ्घः**— Ramakrishna Mission.

२१. १६

**रॅंडः**— Mr. Rand. प्लेगप्रसारप्रतिबन्धाय पुण्यपुरे नियुक्तः आङ्ग्लाधिकारी ।

२१. ३८

**संदग्धेऽप्यग्निना ... अवशिष्यते**—' सुंभ जळाला तरी पीळ जात नाही ' इति महाराष्ट्रभाषा-आभाणकस्य संस्कृतीकरणम् ।

२१. ४४

**नमाजः**— माहंमदीयानां प्रार्थना ।

२१. ४५

**युवतीयुवयुग्मानां ... नृत्यसमन्विता**— Ball.

२१. ४६

**सम्राज्ञीघोषणापत्रम्**— Queen Victoria's Proclamation, 1858.

२१. ५३

**सम्राज्ञ्यायुश्चिन्तनाय**— drink to the health of the Queen.

२१. ५८

**युवैका**— युवैकः इति वाच्यम् ।

**अग्नियन्त्रेण गुलिकां**— Bullet from the pistol.

२१. ६०

**आयर्स्टः**— Lt. Ayerst. प्लेगप्रसारप्रतिबन्धाय पुण्यपुरे नियुक्तः आङ्ग्लाधिकारी ।

२१. ८७-८८

**अर्थशास्त्रज्ञमण्डलम्**— Welby Commission.

२१. ९७

**वार्ताहरः**— Press Reporter.

२१. ११९

**ज्यूलियस्स्मरणाङ्किते मासे**— जुलै इति मासे ।

२२. २

**रघुनाथेन**— सातारानिवासिना करंदीकरोपाह्वेन पाण्डुरङ्गसूनुना रघुनाथनाम्ना विख्यातेन विधिज्ञेन ।

२२. ४

**बाबामहाराजः**— पंडितकुलोत्पन्नः बाबामहाराजः राजगुरुः ।

२२. ७

**बालकृष्णः**— बाळकृष्ण गणेश खापर्डे ।

२२. ११

**खाडिल्करः**— कृष्णाजी प्रभाकर खाडिलकर, केसरीपत्रसंपादकः । महाराष्ट्र-भाषायां सुप्रसिद्धः नाट्यलेखकः ।

२२. १२

**बोडसः**— महादेव राजाराम बोडस, मुम्बय्यां उच्चन्यायालये विधिज्ञः ।

२२. १९

**देवालये विठ्ठलस्य**— पुण्यपत्तने 'लकडीपूल' ( संभाजी पूल ) समीपस्थं पुराणं विठ्ठलस्य मन्दिरम् ।

२२. २१

**अफ्झल्**— अफझलखान नाम आदिलशाहीराज्यस्य सेनापतिः ।

२२. २४

**जिन्सीवाले**— श्रीधर बाळकृष्ण जिन्सीवाले, प्राध्यापकः, वक्ता च ।

२२. ३६

**उद्गाराः शिवभूपस्य**— 'शिवाजीचे उद्गार' नाम केसरीपत्रे प्रकाशितं मराठी-काव्यम् ।

२२ ४५

**सँढर्स्टः**— Lord Sandhurst, Governor of Bombay.

२२ ४६

**सहकारी**— १८९५ तमे खिस्ताब्दे तिलकः मुम्बईप्रान्तविधिपरिषदः सदस्यत्वेन (Member of the Bombay Legislative Council) निर्वाचितः ।

२२. ५०

**जस्टिस्**— 'जस्टिस्' इति कस्यचित् 'टाइम्स ऑफ् इंडिया' वृत्तपत्रलेखकस्य लेखनीनाम ।

२२. ५६

**मृत्युपत्रम्**— Will, testament.

२२. ६०

**अष्टमेऽहनि**— १८९७ तमे खिस्ताब्दे ऑगस्टमासस्य अष्टमे दिने ।

२२. ६७

**प्यूगार्थौ**— Messrs Pugh and Garth, Barristers.

२२. ६९

**नेने** – यशवंत विष्णु तथा अण्णासाहेब नेने ।

**देशमुख**— डॉ. मोरेश्वर गोपाल तथा नानासाहेब देशमुख ।

२२. ७५

पत्रिकायाम्— अमृतबझारपत्रिकायाम् ।

२२. ८८

मोदवृत्त— वाईग्रामे काशीनाथ वामनशास्त्री लेलेमहोदयैः प्रकाशितं मराठी-वृत्तपत्रम् ।

प्रतोद— इस्लामपूरग्रामे रामचंद्र नारायण कशाळकरमहोदयैः प्रकाशितं मराठी-वृत्तपत्रम् ।

२२. ११२

भाविष्याति— भविष्यति इति वाच्यम् ।

२२. ११९

बाळ— केशवराव बाळ, केसरीमुद्रकः ।

२२. १३२

कदम्बकाः— Columns.

२२. १३५

विशेषा पंचजनी— Special Jury.

२२. १३८

पञ्चसंहतिः— पंचसंहतिः इति वाच्यम् ।

२२. १४०

कोमरपेथ्रामानिर्णयः— Ruling given by the two Judges in Queen Empress vs Vangavasi.

२२. १४३

हिंददण्डविधानेन— हिन्ददण्डविधानेन इति वाच्यम् । Indian Penal Code.

२२. १६८

दाद लावोनि घ्या— अस्य मराठीवचनस्य अर्थः ‘ स्वदुःखमोचननिर्बन्धपराः भवत ’ इति ।

२०, १७०

‘ अस् ’ धातोः... — मराठीभाषायां ‘ नसणे ’ इत्यस्य धातोः ‘ नाही ’ इति त्रिषु कालेषु एकम् एव रूपम् इति अभिप्रायः ।

२२. २३४

बुद्धिक्रीडापटः— Chess-Board.

२२. २५९

प्रीव्हिकौन्सिलम्— आङ्ग्लशासनस्य लंदनस्थं सर्वोच्चं न्यायालयम् ।

२२. २६१

आस्कुवीथः— Asquith. स पश्चाद् इंग्लंडस्य प्रधानमन्त्री अभवत् ।

२२. २८३

केळ्‌कराभिधः—हरिपंत केळकर, ‘ पुणेंवैभव ’ पत्रस्य लेखकः ।

२३. १४

सश्रमः कारावासः— Rigorous imprisonment.

अश्रमः कारावासः— Simple imprisonment.

२३. ४४

वर्षे त्रिनवतितमे... — १८९३ तमे ख्रिस्ताब्दे ।

२३. ५२

ऋतुग्रहश्रुतिमिते शालिवाहनभूपतेः— शके ४९६, ५७४ तमे ख्रिस्ताब्दे ।

२३. ५९

अब्दोऽष्टसप्ततितमश्चाष्टादशशतोत्तरः— शके १८७८.

२३. ७०

मोक्षमुल्लरः— F. Max Müller.

२३. ८६

येरवडाम्— पुण्यपत्तनसमीपे येरवडाग्रामे स्थितं कारागृहम् ।

२३. ९०

अब्देऽष्टानवतितमे... — १८९८ तमे ख्रिस्ताब्दे ।

२३. १०८

काकेशाद्रिः— Caucasus mountain.

काश्यपाब्धिः— Caspian sea.

२३. १३७

जगद्धितेच्छु—इति नाम पुण्यपत्तने मुद्रणालयम् ।

२४. १

सिंहगडं तानाजिदेहार्पितयज्ञपूतम— शिवभूपतेः तानाजिमालुसरेनामा हृदयं द्वितीयमिव सुहृद् । तानाजिना ‘ कोंडाणा ’ नाम पुण्यपत्तनसमीपे वर्तमानः दुर्गः स्वप्राणव्ययेन विजितः । तदा शिवनृपतिना उक्तम् ‘ दुर्गः जितः परं सिंहः ( तानाजिनामकः ) गतः ’ । तदाप्रभृति अयं दुर्गः सिंहगडनाम्ना विख्यातः बभूव ।

सदाजिः— सुहृदा दाजिना सहितः ।

२४. १३

नवग्रन्थः— ‘ वेदेषु उत्तरध्रुवप्रदेशस्थम् आर्याणां मूलस्थानम् ’ ( Arctic Home in the Vedas ) इत्ययं ग्रन्थः ।

२४. २५

अवेस्ताख्यग्रन्थः— झेंदभाषायां रचितः अवेस्तानामा प्राचीनानां इराणदेशीयानां धर्मग्रन्थः ।

२४. ३५

**ग्रन्थयुग्मम्**— 'मृगशीर्षम्' ( Orion ) तथा 'उत्तरध्रुवप्रदेशस्थं मूलस्थानम्' इत्येतद् ग्रन्थद्वयम्।

२४. ४०

**ग्रन्थत्रयम्**— उपर्युल्लिखितं ग्रन्थद्वयं, तथैव 'वेदकालनिर्णयः वेदाङ्गज्योतिषं च' इति तृतीयः ग्रन्थः।

२५. ८

**केसरीगडात् ... केसरीगृहम्** — सिंहगडात् केसरीगृहं विंचूरकरवाडा इति नाम्ना ख्यातं स्वनिवासस्थानम्।

२५. ३०

**रङ्गनाथः ... मोरोपंतः**— मुधोळकरकुलोद्भवः रङ्गनाथः, जोशीकुलोत्पन्नः मोरोपंतः, खापर्डेकुलभूषणः च गणेशः, इति विदर्भाणां नेतृत्रयी।

२५. ३६

**मल्लकापुरे**— विदर्भेषु 'मलकापूर' इति नाम नगरम्, तस्मिन्।

२५. ४०

**बाडनेरम्**— 'बडनेरा' स्थानकम्।

२५. ४९

**गोपालोपस्थितिः**— गोखलेकुलोत्पन्नस्य कृष्णसूनोः गोपालस्य आगमनम्।

२५. १२६

**सर टी. माधवः**— वटोदरासंस्थानस्य आङ्ग्लशासननियुक्तः प्रधानमन्त्री।

२५. १२७

**वेङ्कटेशः**— शिवभूपस्य कनीयान् भ्राता तंजावरविभागस्य अधिपतिः आसीत्। महाराष्ट्रभाषायां 'व्यंकोजी' इति नाम्ना स ख्यातः।

२५. १५४

**हस्तलिखितग्रन्थाः**— Manuscripts.

२५. १६८

**पांडीचरी**— Pondicherry.

२५. १८५

**आङ्ग्लानां संसदि**— British Parliament.

२५. २७८

**क्यांडी**—सिंहलद्वीपस्य उपराजधानी.

२५. २८७

**गाङ्गाधरिः**— बाळ गङ्गाधर तिलक।

बा. गं. टिळक, सौ. सत्यभामाबाई टिळक (पत्नी)



मृत्यु : ९-८-१९२०

मृत्यु : ७-६-१९१२

गंगाधर रामचंद्र टिळक
लोकमान्यस्य पिता



जन्म : १३-८-१८२० मृत्यु : ३१-८-१८७२

गोविंद रामचंद्र टिळक
लोकमान्यस्य पितृव्य



१८३५-१९०४

बाळ गंगाधर टिळक



जन्म २३-७-५६ मृत्यु : १-८-१९२०

विष्णुशास्त्री कृष्ण चिपळूणकर



जन्म १८५० मृत्यु १७-३-१८८२

गोपाळ गणेश आगरकर



जन्म १४-७-१८५६ मृत्यु १७-६-१८९५



तिलक जन्मस्थानम्, रत्नागिरी

वासुदेव गणेश जोशी



जन्म २८-४-१८५४ मृत्यु १२-१-१९४४

धोंडो वासुदेव विद्वांस



जन्म ३-७-१८६७ मृत्यु २६-१२-१९४०

बाळ गंगाधर टिळक		दाजी आबाजी खरे



१८५६-१९२०		१८५६-१९१६

वामन शिवराम आपटे



१८५८-१८९२

माधव बल्लाळ नामजोशी



१८५४-१८९६

मोरोबादादा फडणीसस्य निवासः



न्यू इंग्लिश स्कूल नाम माध्यमिकविद्यालयस्य आदिमं वास्तु

गद्रे वाडा



फर्ग्युसन् महाविद्यालयस्य प्रथमं वास्तु

रामकृष्ण गोपाळ भांडारकर



जन्म ६-७-१८३७ मृत्यु २४-८-१९२५

महादेव गोविंद रानडे



जन्म १८-१-१८४२ मृत्यु १६-१-१९०१

ऑक्टेव्हिअन ह्यूम ( राष्ट्रसभासंस्थापक )



१८२९-१९१२

विल्यम वेडरबर्न



१८३८-१९१८

दादाभाई नौरोजी



१८२५-१९१७

सर फेरोजशाहा मेरवानजी मेहेता



जन्म ४-८-१८४५, मृत्यु ५-११-१९१५

गोपाळ कृष्ण गोखले



जन्म ९-५-१८६६ मृत्यु १९-२-१९१५

ब्रह्मर्षि विनायक रामचंद्र तथा अण्णासाहेब पटवर्धन



जन्म १८४७ मृत्यु २-२-१९१७

गणेश बाळकृष्ण खापर्डे लो. बा. गं. टिळक



जन्म २६-८-१८५४ मृत्यु १-७-१९३८ जन्म २३-७-१८५६ मृत्यु १-८-१९२०

बळवंत रामचंद्र तथा बाळाजीपंत नातु



१८५७-१९१४

हरि रामचंद्र तथा तात्यासाहेब नातु



१८६१-१९१४

प्रोफेसर मॅक्सम्यूलर



जन्म ६-१२-१८२३  मृत्यु २८-१०-१९००

काशिनाथ त्र्यंबक तेलंग



१८५०-१८९३

पंडिता रमाबाई



१८५८-१९२२

हर्बर्ट हेन्री ॲस्क्विथ



१८५२-१९२८

पं. मदनमोहन मालवीय



जन्म २५-१२-१८६१ मृत्यु १२-१२-१९४६

सुरेंद्रनाथ बानर्जी



जन्म १८४८ मृत्यु ६-८-१९२५

श्रीमंत सयाजीराव गायकवाड



जन्म ११-३-१८६३ मृत्यु ६-२-१९३९

धों. के. कर्वे



जन्म १८-४-१८५८   मृत्यु ९-११-१९६२

रँग्लर र. पु. परांजपे



जन्म १६-२-१८७६   मृत्यु ६-५-१९६६

शि. म. परांजपे बा. गं. टिळक



जन्म २७-६-१८६४ मृत्यु २७-९-१९२९

न. चिं. केळकर



जन्म १८७२ मृत्यु १४-१०-१९४७

कृ. प्र. खाडिलकर



जन्म २३-११-१८७२ मृत्यु २६-८-१९४८

स्वामी विवेकानन्द



जन्म १२-१-१८६३ मृत्यु ४-७-१९०२

दामोदर हरि चाफेकर



प्रा. केरूनाना छत्रे



कृष्णाजी लक्ष्मण नूलकर



